सहस्रमण्डलादर्वाक् रक्षोभिर्मुच्यते ग्रहैः ।
अपमृत्युभये प्राप्ते मन्त्रेणानेन मन्त्रवित् ॥ १८ ॥

ऋचं त्रियम्बकमिति कृत्वा संपुटितां प्रिये ।
सहस्रमन्वहं जप्त्वा मण्डलान्ते [1]महेश्वरम् ॥ १९ ॥

पञ्चामृतैः पञ्चगव्यैरभिषिच्य शुभैर्जलैः ।
सहस्रनामभिर्नन्दिप्रोक्तैरभ्यर्च्य [2]शङ्करम् ॥ २० ॥

निवेदयित्वा नैवेद्यं अपमृत्युं विजित्य सः ।
आयुष्मान् रूपवान् वाग्मी भवेदत्र न संशयः ॥ २१ ॥

चोराग्निरिपुसंग्रामदुर्गादिभय आगते ।
अनेन मनुना मन्त्री देवि सम्पुटितामृचम् ॥ २२ ॥

कृत्वा दुर्गेषु विषम इति प्रत्यहमादरात् ।
सहस्रं मण्डलं जप्त्वा चोराग्निरिपुसङ्कटात् ॥ २३ ॥

मुक्तो भवति चार्वाङ्गि नात्र कार्या विचारणा ।
शरीरबलमन्विच्छन् मन्त्रेणानेन मन्त्रवित् ॥ २४ ॥

ऋचं सम्पुटितां कृत्वा बलं धेहि तनूष्विति ।
सहस्रं प्रत्यहं जप्त्वा मण्डलावधि पार्वति ॥ २५ ॥

बलं महदवाप्नोति जपस्यास्य प्रभावतः ।
वृष्टिकामस्त्वनेनैव मन्त्रेण मनुवित्तमः ॥ २६ ॥

---

[1] 'तु मां पुनः' [2] 'मां शिवं' इति पाठान्तरम् ।

ऋचं वर्षंतुत इति कृत्वा सम्पुटितां जपन् ।
सहस्रमण्डलादर्वाङ्महतींवृष्टिमाप्नुयात् ॥ २७ ॥

आयुष्कामस्त्वनेनैव मन्त्रेण पुटितामृचम् ।
शतं जीवेत्यनुदिनं कृत्वा जप्त्वा सहस्रकम् ॥ २८ ॥

मन्त्रीमण्डलमात्रेण जीवेद्वर्षशतं प्रिये ।
एवं द्वादशधा देवि जपभेदाः प्रकीर्तिताः ॥ २९ ॥

साम्राज्यलक्ष्मीमन्त्रस्य किमन्यच्छ्रोतुमिच्छसि ।

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
साम्राज्यलक्ष्मीमन्त्रजपभेदस्वरूपकथनं नाम
षष्ठः पटलः ॥



अथ सप्तमः पटलः ॥

॥ साम्राज्यलक्ष्मीमन्त्रहोमस्वरूपकथनम् ॥

श्रीपार्वती—शिव शङ्कर सर्वज्ञ लोकनाथ दयानिधे ।
साम्राज्यलक्ष्मीमन्त्रस्य जपभेदा मया श्रुताः ॥ १ ॥

इदानीं श्रोतुमिच्छामि होमकर्म यथाविधि ।
तन्मे विस्तरतो ब्रूहि यद्यस्ति करुणा मयि ॥ २ ॥

श्रीशिवः—शृणु पार्वति साम्राज्यलक्ष्मीमन्त्रस्य पावनम् ।
वक्ष्ये होमविधिं सम्यक् सावधानमनाः प्रिये ॥ ३ ॥

देवालये नदीतीरे गोष्ठे वा भवनाङ्गणे ।
अष्टहस्तप्रमाणेन कृत्वा मण्टपमुत्तमम् ॥ ४ ॥

षोडशस्तम्भसंयुक्तं मध्ये चोन्नतमद्रिजे ।
प्राग्द्वारं वोत्तरद्वारं सकवाटं सतोरणम् ॥ ५ ॥

परितो दर्भमालाभिर्नीरन्ध्रं परिवेष्टितम् ।
वितानचामरादर्शैरलंकृतमनेकधा ॥ ॥ ६ ॥

लोकपालपताकाभिर्ध्वजेन च विराजितम् ।
द्वारपार्श्वद्वयन्यस्तपूर्णकुम्भमनोहरम् ॥ ॥ ७ ॥

ईदृशं मण्टपं कृत्वा मध्ये होमार्थमद्रिजे ।
चतुरश्रं हस्तमात्रं मेखलात्रयसंयुतम् ॥ ॥ ८ ॥

अश्वत्थदलसङ्काशद्वादशांगुलयोनिकम् ।
कुण्डमेकं कल्पयित्वा विलोचनमनोहरम् ॥ ॥ ९ ॥

तत्पूर्वभागे रचयेत वेदिं हस्तप्रमाणतः ।
मेखलात्रयसंयुक्तामर्धहस्तोन्नतां प्रिये ॥ ॥ १० ॥

कृत्वैवं वेदिकां यन्त्रस्थापनार्थं यथाविधि ।
तत्कुण्डं वेदिकां चैव गोमयेनानुलिप्य वै ॥ ११ ॥

रङ्गमाल्यादिभिः सम्यगलंकृत्याथ मन्त्रवित् ।
फलपुष्पादिकां पूजासामग्रीं हवनाय च ॥ ॥ १२ ॥

आज्यस्रवादिकं चैव संपाद्य तदनन्तरम् ।
यजमानः स्वानुकूलदिने पत्नीसमन्वितः ॥ ॥ १३ ॥

स्नात्वा नद्यां तटाके वा धृत्वा पुंड्रादिकं ततः ।
निर्वर्त्य नित्यकर्माणि गृहमागत्य मन्त्रवित् ॥ १४ ॥

चतुर्भिर्ब्राह्मणैः साकं कृत्वा पुण्याहवाचनम् ।
यथाशक्ति सुवर्णेन रजतेनाथ वा प्रिये ॥ १५ ॥

यन्त्रं पूर्वोक्तविधिना कारयित्वा विचक्षणः ।
संशोध्य पञ्चगव्यैस्तु वेद्यां तत् पट्टवस्त्रके ॥ १६ ॥

निधाय भूतशुद्ध्यादीन् स्वयं कृत्वा यथाविधि ।
प्राणप्रतिष्ठां यन्त्रस्य मन्त्रैस्तान्त्रिकवैदिकैः ॥ १७ ॥

कृत्वा तन्मूलमन्त्रेण संपूज्य कुसुमादिभिः ।
प्रधानदेवतां तद्वत् तदावरणदेवताः ॥ १८ ॥

परमान्नं ससर्पिष्कं सफलं च सशर्करम् ।
समर्प्य पूजाशेषं च समाप्य विधिवत् प्रिये ॥ १९ ॥

ततः कुण्डे प्रतिष्ठाप्य विधिवज्जातवेदसम् ।
स्वगृह्योक्तविधानेन तान्त्रिकोक्तेन वा पुनः ॥ २० ॥

साम्राज्यलक्ष्मीमन्त्रस्य संग्रहेण मयाऽद्रिजे ।

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
साम्राज्यलक्ष्मीमन्त्रहोमस्वरूपकथनं नाम
सप्तमः पटलः ॥

अथ अष्टमः पटलः ॥

॥ साम्राज्यलक्ष्मीहोमभेदस्वरूपकथनं ॥

श्रीपार्वती—देवदेव दयासिन्धो लोकरक्षणतत्पर ।
साम्राज्यलक्ष्मीमन्त्रस्य होमकर्म मया श्रुतम् ॥ १ ॥

इदानीं श्रोतुमिच्छामि तद्भेदान् सरहस्यकान् ।
वक्तुमर्हसि देवेश यद्यस्ति करुणा मयि ॥ २ ॥

श्रीशिवः—शृणु वक्ष्यामि साम्राज्यलक्ष्मीमन्त्रस्य पार्वति ।
प्रत्यक्षसिद्धिजनकान् होमभेदाननेकधा ॥ ॥ ३ ॥

पूर्वोक्तमण्टपे वेद्यां यन्त्रं पूर्वोक्तलक्षणम् ।
संपूज्य पूर्ववद्देवि कुण्डे संस्थाप्य पावकम् ॥ ४ ॥

आगमोक्तेन विधिना गृह्योक्तेनाथवाद्रिजे ।
कर्म कृत्वा चक्षुरन्तं मन्त्रवित्प्रयतः शुचिः ॥ ५ ॥

दीर्घायुषे त्रिमध्वक्त दूर्वाभिर्जुहुयान्नरः ।
अपमृत्युविनाशाय गुळूच्या होममाचरेत् ॥ ६ ॥

पापक्षयार्थं जुहुयात्तिलैर्मधुविमिश्रितैः ।
शरीरबलपुष्ट्यर्थं जुहुयद्गोघृतेन तु । ॥ ७ ॥

अग्निपाटवसिद्ध्यर्थं जुहुयात्कटुकत्रयम् ।
ज्वरशान्त्यै प्रजुहुयात् क्षीराक्तैराम्रपल्लवैः ॥ ८ ॥

शत्रुक्षयार्थं जुहुयात् कृष्णवर्णैस्तु राजिभिः ॥
कन्यार्थं जुहुयाल्लाजैः पुत्रार्थं पुत्रजीविभिः ॥ ९ ॥

कमलैर्जुहुयान्मन्त्री श्रीप्राप्त्यै गोघृतप्लुतैः ।
राज्यार्थं राजवृक्षोत्थैः जुहुयाच्च समिद्वरैः ॥ १० ॥

मेधासिद्ध्यै प्रजुहुयात् पलाशकुसुमैर्नवैः ।
जुहुयाद्गोसमृद्ध्यर्थं गोक्षीरेण सुमध्यमे ॥ ११ ॥

भुवो लाभाय जुहुयाच्छालीभिस्त्रिमधुप्लुतैः ।
वश्यार्थं जुहुयान्मन्त्री फुल्लैरिन्दीवरैः प्रिये ॥ १२ ॥

आकर्षणाय जुहुयात् अपामार्गस्य मञ्जरीः ।
विद्वेषाय प्रजुहुयान्निंबतैलेन मन्त्रवित् ॥ १३ ॥

विभीतकसमिद्धोमात् शत्रूणां मरणं भवेत् ।
कारस्करसमिद्धोमाच्छत्रोरुच्चाटनं भवेत् ॥ १४ ॥

निशाचूर्णेन जुहुयात् स्तंभनाय तु वैरिणाम् ।
एवं तत्तद्द्रव्यभेदैर्होमकर्म यथाविधि ॥ १५ ॥

तत्तत्कार्यानुसारेण सहस्राहुतिसंख्यया ।
कृत्वैवं प्रत्यहं देवि मण्डलं वा तदर्धकम् ॥ १६ ॥

तदन्ते विप्रवर्याय दत्वा तद्यन्त्रमुत्तमम् ।
गोभूतिलहिरण्यादिदानानि स्वस्य शक्तितः ॥ १७ ॥

कृत्वा दीनान्धकृपणान् तर्पयित्वा स्वशक्तितः ।
ब्राह्मणान् भोजयित्वाऽथ स्वयं भुञ्जीत वाग्यतः ॥ १८ ॥

स्वयं कर्तुमशक्तश्चेदेवमन्येन कारयेत् ।
द्विगुणं तु वरारोहे तत्तत्कार्यफलाप्तये ॥ ॥ १९ ॥

इत्येवं देवि साम्राज्यलक्ष्मीमन्त्रस्य पावनाः ।
होमभेदा निगदिताः किमन्यच्छ्रोतुमिच्छसि ॥ २० ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
साम्राज्यलक्ष्मीमन्त्रस्य होमभेदकथनं नाम
अष्टमः पटलः ॥



नवमः पटलः ॥

## ॥ आवरणदेवतादिलक्षणम् ॥

पार्वती—देवदेव, विरूपाक्ष, वृषभध्वज, शङ्कर ।
साम्राज्यलक्ष्मीमन्त्रस्य होमभेदा मया श्रुताः ॥ १ ॥

इदानीं श्रोतुमिच्छामि लक्षणानि मनूनपि ।
षडङ्गदेवतादीनां वदस्व वदतां वर ॥ ॥ २ ॥

श्रीशिवः—साधु साधु जगद्वन्द्ये यन्मां त्वं परिपृच्छसि ।
तत्तेऽहं संप्रवक्ष्यामि शृणु कल्याणि सादरम् ॥ ३ ॥

हृदयादिषडङ्गादिदेवतास्तु पुरोदिताः ।
ध्येयाः स्त्रीरूपधारिण्यः वराभयकराः प्रिये ॥ ४ ॥

क्रमान्मुक्तेन्दुकान्ताब्जहरिन्नीलानलप्रभाः ।
धनलक्ष्मीर्धनघटं कलयन्ती करेण वै ॥ ॥ ५ ॥

ध्येया स्याद्भाग्यलक्ष्मीस्तु दधाना शालिमञ्जरीम् ।
सन्तानलक्ष्मीर्विज्ञेया कटिविन्यस्तबालका ॥ ६ ॥

सौभाग्यलक्ष्मीः स्मर्तव्या मातुलुङ्गकरा सदा ।
विद्यालक्ष्मीर्विधातव्या करविन्यस्तपुस्तका ॥ ७ ॥

शौर्यलक्ष्मीश्चिन्तनीया खड्गोद्यतकरा शुभा ।
वीरलक्ष्मीर्वीरवादवादिनी सर्वदेवता ॥ ॥ ८ ॥

वन्दिबृन्देन विजयलक्ष्मीर्नन्दितवैभवा ।
इन्द्रस्त्वैरावतारूढो वज्रहस्तो हरित्प्रभः ॥ ॥ ९ ॥

रक्तवर्णोऽग्निराख्यातो मेषस्थश्शक्तिधारकः ।
ध्येयो दण्डधरश्श्यामो यमो महिषवाहनः ॥ ॥ १० ॥

खड्गपाणिः कृष्णवर्णो नैर्ऋतः शववाहनः ।
वरुणः पाशभृच्छ्वेतवर्णो मकरवाहनः ॥ ॥ ११ ॥

धावद्धरिणपृष्ठस्थो वायुर्धूम्रोऽङ्कुशान्वितः ।
दशाश्वरथगः सोमो गदापाणिः शुचिप्रभः ॥ १२ ॥

ईशानः शूलभृद्रक्तवर्णो वृषभवाहनः ।
दिक्पालहेतयः कार्याः बद्धाञ्जलिपुटा हृदि ॥ १३ ॥

तत्तद्धेतिधरा मूर्ध्नि पुरुषाकृतयः क्रमात् ।
नामानि प्रणवादीनि चतुर्थ्यन्तानि पार्वति ॥ १४ ॥

नमोयुतानि मनवः प्रोक्तास्तासां मनीषिभिः ।
ऋषिरेषामहं छन्दांस्यूह्यान्यक्षरसंख्यया ॥ ॥ १५ ॥

देवताहृदयादीनि कथितानि यथाक्रमम् ।
इत्येवं ते षडङ्गादिदेवतानामनुक्रमात् ॥ १६ ॥

लक्षणानि मयोक्तानि किमन्यच्छ्रोतुमिच्छसि ।

इत्याकशभैरवाख्ये महाशैवतन्त्रे, साम्राज्यलक्ष्मीपीठिकायां
आवरणदेवतादिलक्षणं नाम नवमः पटलः ॥

अथ दशमः पटलः ॥

॥ साम्राज्यलक्ष्मीमहापूजानिर्मित्तोत्पातस्वरूपकथनं ॥

पार्वती—शंभो शङ्कर सर्वज्ञ शिव शाश्वत शर्मद ।
श्रुतान्यावृतिदेवानां लक्षणानि भवन्मुखात् ॥ १ ॥

इदानीं श्रोतुमिच्छामि महापूजाविधिक्रमम् ।
साम्राज्यलक्ष्म्याः सर्वज्ञ तन्मे विस्तरतो वद ॥ २ ॥

श्रीशिवः—साधु साधु जगद्वन्द्ये यन्मां त्वं परिपृच्छसि ।
तत्तेहं संप्रवक्ष्यामि सावधानमनाः शृणु ॥ ३ ॥

राष्ट्रे पुरे वा देवेशि जनमारो यदा भवेत् ।
यदा भवेदनावृष्टिः क्षामः क्षोभोऽथ वा यदा ॥ ४ ॥

यदा जनपदो देवि पुरं वा शत्रुराजभिः ।
पीड्यते वा गजाश्वादिवाहनानामनेकधा ॥ ५ ॥

युगपद्रोगपीडा वा नेत्रेष्वश्रुनिपातनम् ।
यत्रवाऽऽरामवृक्षेषु पयोरुधिरसंभवः ॥ ॥ ६ ॥

यदा वा देवताबिम्बचलनं हसनं तथा ।
नर्तनं भूमिकम्पश्च स्फुटनं वा यदा भवेत् ॥ ७ ॥

नरगोमृगपक्ष्यादिप्रसूतिविकृतिस्तथा ।
छत्राकमधुवल्मीकाः पक्षयुक्ताः पिपीलिकाः ॥ ८ ॥

जायन्ते नगरे राष्ट्रे बहुधा वा गृहे गृहे ।
यदाऽकस्माच्छुष्कवृक्षाः प्ररोहन्ति वने वने ॥ ९ ॥

यदा निशीन्द्रचापस्य दर्शनं भगणस्य च ।
दिवा प्रकाशः सुश्रोणि धूमकेतुसमुद्भवः ॥ १० ॥

रात्रौ यदा यदा पुच्छनक्षत्रस्य समुद्भवः ।
आरण्यकमृगाः पुर्यां यदा धावन्त्यकारणात् ॥ ११ ॥

तृणगुल्मलता वृक्षाः विपरीतफला यदा ।
अकस्मान्नगरे राष्ट्रे वह्निदाहो गृहे गृहे ॥ १२ ॥

कदलीपूगवृक्षाणामेकगर्भे फलद्वयम् ।
यदा वोद्यानगा रम्भा दक्षिणाभिमुखी फलेत् ॥ १३ ॥

अतिवर्षमवर्षं च यदा भवति भामिनि ।
ओषध्यो रसहीनाश्च भवन्ति बहुधा यदा ॥ १४ ॥

रश्मिहीनो यदादित्यो मध्ये छिद्रयुतो यदा ।
यदोल्कापतनं देवि दीपिका वा पतेद्यदा ॥ १५ ॥

यदा यदा चतुर्दिक्षु प्रतिसूर्यस्य दर्शनम् ।
चन्द्रस्य वाथ सूर्यस्य परिवेषत्रयं यदा ॥ १६ ॥

यदाऽमेघे विद्युतां वा दर्शनं, तदर्शनम् ।
मेघेऽनभ्रौ तथा धूमदर्शनं गगने यदा ॥ १७ ॥

गन्धर्वनगरस्यापि दर्शनं बहुधा प्रिये ।
अश्मासृक्पांसुवर्षाणि संभवन्ति यदा यदा ॥ १८ ॥

गन्धर्वगानश्रवणं वर्षं च तृणकाष्ठयोः ।
यदा भवति देवेशि पुरे जनपदेऽपि वा ॥ १९ ॥

असकृच्छ्वेतकाकस्य दर्शनं काकमैथुनम् ।
यदा वा दृश्यते भित्तिपतनं मण्टपस्य वा ॥ २० ॥

यदाऽचलं वाऽपि चलं चलं वाऽप्यचलं भवेत् ।
तदा तद्दोषशान्त्यर्थं महापूजा मनीषिभिः ॥ २१ ॥

कर्तव्याऽत्र विशेषेण राजभिश्च यथाविधि ।
वक्तुः श्रोतुश्च मन्तुश्च द्रष्टुरादेष्टुरेव च ॥ २२ ॥

उपदेष्टुश्च सर्वेषां उत्पातानां समं फलम् ।
गृहोद्यानस्थितोत्पातः देवतायतने स्थितः ॥ २३ ॥

गोनिवासस्थितोत्पातः तत्तद्बाधक उच्यते ।
येन केन प्रकारेण बहुधोत्पातदर्शने ॥ २४ ॥

राष्ट्रः पीडा भवेदाशु राजा वाऽन्योऽपि जायते ।
मन्त्री पुरोहितो वाऽपि जायतेऽन्यो हिमाद्रिजे ।। २५ ।।

पुरे जनपदे कोशे वाहने च पुरोहिते ।
पुत्रे चात्मनि भृत्ये च भवेदुत्पातजं भयम् ।। २६ ।।

तस्माद्राज्ञा प्रजापालनोद्युक्तेन विशेषतः ।
कर्तव्यैषा महापूजा भक्तियुक्तेन चेतसा ।। २७ ।।

साम्राज्यलक्ष्म्यास्तुष्ट्यर्थं पुष्ट्यर्थं राष्ट्रवासिनाम् ।
जनानां विविधोत्पातजातभीतिप्रशान्तये ।। ।। २८ ।।

आयुरारोग्यसिद्ध्यर्थं क्षेमाय विजयाय च ।

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
साम्राज्यलक्ष्मीमहापूजानिमित्तोत्पातस्वरूपकथनं नाम
दशमः पटलः ।।

---

अथ एकादशः पटलः ।।

।। साम्राज्यलक्ष्मी महापूजार्थमण्डपनिर्माणस्वरूपकथनम् ।।

श्रीशिवः—मण्डलाधिपतिर्भूपः प्रजापालनतत्परः ।
साम्राज्यलक्ष्म्याः सर्वेशि महापूजार्थमञ्जसा ।। १ ।।

देवालये नदीतीरे स्वगृहस्याग्रतोऽपि वा ।
शोधयित्वा हलैर्भूमिं लोष्टादीन् परिहृत्य च ॥ २ ॥

तत्र प्रकल्पयेत् कूटं षोडशस्तम्भसंयुतम् ।
किष्कुद्वादशविस्तारं तावदायाममद्रिजे ॥ ३ ॥

परितश्चित्रकुड्येन वेष्टितं वेदिकान्वितम् ।
चतुर्द्वारसमायुक्तं कवाटाष्टकयन्त्रितम् ॥ ४ ॥

मध्ये महावेदियुतं ऊर्ध्वभागे समुन्नतम् ।
नारिकेलकटै वंशकटैर्वाऽऽच्छादितं प्रिये ॥ ॥ ५ ॥

लोकपालपताकाढ्यं मूर्ध्नि चित्रध्वजान्वितम् ।
वितानचामरादर्शैः सर्वतः समलंकृतम् ॥ ६ ॥

प्रतिद्वारं पार्श्वयुगन्यस्तपूर्णघटान्वितम् ।
ईदृग्विधं कारयित्वा कूटं नरपतिः प्रिये ॥ ७ ॥

साम्राज्यलक्ष्मीपूजार्थं देशिकं वेदपारगम् ।
सर्वमन्त्ररहस्यज्ञं कुटुम्बिनमलोलुपम् ॥ ॥ ८ ॥

वृत्वाऽऽवरणदेवानां पूजार्थं पुष्करेक्षणे ।
विंशद्विप्रान् पुनर्वृत्वा पात्रलक्षणलक्षितान् ॥ ९ ॥
सर्वकर्मानुसन्धानं कर्तुं ब्रह्माणमप्युमे ।

वेदपारायणार्थं वै वृत्वाऽष्टौ जापकानपि ।
राजा देशिकमाहूय यथाशास्त्रं यथाविधि ॥ १० ॥

उत्पातदोषशान्त्यर्थं राज्ञो राष्ट्रस्य वृद्धये ।
साम्राज्यलक्ष्म्यास्सर्वज्ञ महापूजा त्वयाऽधुना ॥ ११ ॥

ऋत्विग्भिस्सह कर्तव्या सावधानेन चेतसा ।
इत्युक्तवति राजेन्द्रे देशिकस्सहसोत्थितः ॥ १२ ॥

त्वया यदुक्तं भूपाल तत्करिष्य इति ब्रुवन् ।
राजानं प्रेषयित्वाऽथ स्वयमृत्विक्समन्वितः ॥ १३ ॥

स्नात्वा नद्यां ह्रदे वाऽपि धृत्वा पुण्ड्रादिकं ततः ।
नित्यकर्म विनिर्वर्त्य वाद्यघोषपुरस्सरम् ॥ १४ ॥

यानैः कूटं प्रविश्याथ पश्चिमद्वारतः प्रिये ।
मध्ये वेद्यान्तु कूटस्य तण्डुलैर्भारमात्रकैः ॥

मण्डलं रचयित्वाऽत्र पूर्वोक्तं यन्त्रमालिखेत् ॥ १५ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
महापूजार्थमण्टपनिर्माणस्वरूपकथनं नाम
एकादशः पटलः ॥



॥ अथ द्वादशः पटलः ॥

॥ सावरणसाम्राज्यलक्ष्मीप्रतिमास्थापनस्वरूपकथनम् ॥

श्रीशिवः—यन्त्रस्य मध्यमे वृत्ते कलशं तीर्थपूरितम् ।
सुधाधवलितं तन्तुवेष्टितं मृन्मयं नवम् ॥ १ ॥

पञ्चत्वक्पल्लवोपेतं गव्यरत्नसमन्वितम् । (गन्ध? )
संस्थाप्याराधितं कृत्वा तस्मिन्वस्त्रं प्रसार्य तु ॥ २ ॥

शतनिष्कसुवर्णेन तदर्धेनाथवा कृताम् ।
निधाय तत्र साम्राज्यलक्ष्मीं पूर्वोक्तलक्षणाम् ॥ ३ ॥

षट्कोणकोणेषु पुनः कलशानुक्तलक्षणान् ।
विन्यस्य तेषु प्रतिमाः निष्कत्रयसुवर्णतः ॥ ४ ॥

पृथक्पृथक् कृताश्चांगदेवतानां यथाक्रमम् ।
विन्यस्य तद्बहिः पद्मदळमूलेषु मृन्मयान् ॥ ५ ॥

पूर्वोक्तलक्षणानष्टौ विन्यस्य कलशान्नवान् ।
धनलक्ष्म्यादिलक्ष्मीणां प्रतिमाश्चाष्ट विन्यसेत् ॥ ६ ॥

तत्परं दळमध्यस्थपूर्णकुम्भाष्टके पुनः ।
दिक्पालप्रतिमाश्चाष्टौ प्रतिष्ठाप्य यथाविधि ॥ ७ ॥

पद्मस्य दलकोटिस्थपूर्णकुम्भाष्टके पुनः ।
दिक्पालहेतिप्रतिमाः सौवर्णीर्विनिवेश्य च ॥ ८ ॥

एवं संस्थाप्य साम्राज्यलक्ष्म्यादिप्रतिमाश्शुभाः ।
नदत्सु पञ्चवाद्येषु भेरीकाहळिकादिषु ॥ ॥ ९ ॥

आचार्यः प्राङ्मुखो भूत्वा प्राणानायम्य वाग्यतः ।
ऋत्विग्भिस्सह पुण्याहं वाचयित्वा यथाविधि ॥ १० ॥

भूशुद्धिभूतशुद्ध्यादीन् कृत्वा तदनु मन्त्रवित् ।
संकीर्त्य देशं कालं च पुरेऽस्मिन् राष्ट्र एव च ॥ ११ ॥

जातनानोत्पातभवभीतिशान्त्यै सुखाय च ।
राष्ट्रस्य राष्ट्राधिपतेः प्रजानां च विशेषतः ॥ १२ ॥

साम्राज्यलक्ष्मीप्रीत्यर्थं महापूजां यथाविधि ।
करिष्य इति संकल्प्य वर्धनीं चन्दनादिभिः ॥ १३ ॥

संपूज्य कृत्वा शङ्खस्य पूरणं कुसुमाक्षतैः ।
संपूज्य घण्टां शङ्खस्थतोयेनात्मानमद्रिजे ॥ ॥१४ ॥

संप्रोक्ष्य पूजावस्तूनि मूलमन्त्रस्य देशिकः ।
ऋष्यादिकं षडङ्गं च कृत्वा मूलमनुं प्रिये ॥ १५ ॥

शतवारं जपित्वाऽथ ध्यात्वा देवीं च पूर्ववत् ।
अङ्गदेवाद्यावरणदेवपूजां यथाविधि ॥ ॥ १६ ॥

यूयं कुरुध्वमिति तानृत्विजो विनियोज्य च ।
ब्रह्माणं सर्वकर्मानुसन्धानं कुर्विति ब्रुवन् ।
वेदपारायणं यूयं कुरुध्वमिति जापकान् ॥ ॥ १७ ॥

चतुर्षु द्वारदेशेषु द्वन्द्वशो विनिवेश्य च ।
जापकानृत्विजश्चैव गन्धपुष्पाक्षतादिभिः ॥ १८ ॥

अभ्यर्च्य कण्ठाभरणैः कुण्डलैरंगुळीयकैः ।
अलंकृत्य स्वयं रत्नकुण्डलाद्यैरलंकृतः ॥ १९ ॥

प्राङ्मुखः प्रतिमायास्तु प्रत्यग्देशे स्थितः स्वयम् ।
साम्राज्यलक्ष्मीप्रतिमां गव्यैस्संशोध्य पञ्चभिः ॥ २० ॥

प्राणप्रतिष्ठां कृत्वा च मन्त्रैस्तान्त्रिकवैदिकैः ।
ततो मन्त्रैर्वक्ष्यमाणैः पूजां कर्तुं समारभेत् ॥ २१ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
सावरणसाम्राज्यलक्ष्मीप्रतिमास्थापनस्वरूपकथनं नाम
द्वादशः पटलः ॥

---

॥अथ त्रयोदशः पटलः ॥

॥ षोडशोपचारपूजामन्त्रस्वरूपकथनं ॥

श्रीशिवः—साम्राज्यलक्ष्मीपूजाया मन्त्रान्वक्ष्यामि सांप्रतम् ।
यैः पूजिता सा सकलवाञ्छितार्थप्रदा भवेत् ॥ १ ॥

पद्मासने समासीनां पद्महस्तां चतुर्भुजाम् ।
मल्लिकामाधवीजातिचम्पकामोदिकुन्तलाम् ॥ २ ॥

सुनासां सुभ्रुवं गण्डमण्डलालम्बिकुण्डलाम् ।
करुणापूरनिष्यन्दितरुणायतलोचनाम् ॥ ॥ ३ ॥

कर्पूरवीटिकावक्त्रां कस्तूरीतिलकाङ्किताम् ।
चन्दनागरुकर्पूरकुंकुमालङ्कृतस्तनीम् ॥ ॥ ४ ॥

कटीतटोल्लसत्काञ्चीविराजितसितांशुकाम् ।
रम्भास्तम्भाभिरामोरुयुगळां रत्नभूषिताम् ॥ ५ ॥

धनलक्ष्म्याद्यष्टलक्ष्मीसेव्यमानपदाम्बुजाम् ।
जयकाहळिकाभेरीशङ्खदुन्दुभिमर्दलैः ॥ ॥ ६ ॥

नदद्भिश्च पुरोभागे रथनेमिखरस्वनैः ।
बृंहितैर्गन्धनागानां घण्टाघणघणारवैः ॥ ॥ ७ ॥

अश्वहेषारवैः पत्तिसिंहनादैर्भयङ्करैः ।
संमूर्च्छितदिशाचक्रां सर्वगीर्वाणवन्दिताम् ॥ ८ ॥

साम्राज्यलक्ष्मीं ध्यायामि साधकाभीष्टदायिनीम् ।
आवाहयामि तां देवीमणिमाद्यष्टसिद्धिदाम् ॥ ९ ॥

अनर्घरत्नमकुटकुण्डलाङ्गदभूषिताम् ।
जाम्बूनदमयं दिव्यं नानारत्नविचित्रितम् ॥ १० ॥

समर्पयामि साम्राज्यलक्ष्म्यै सिह्मासनं शुभम् ।
सुरासुरशिरोरत्ननिघृष्टचरणाम्बुजे ॥ ॥ ११ ॥

साम्राज्यलक्ष्मि पाद्यार्थं पानीयं प्रददाम्यहम् ।
अथाष्टापदपात्रस्थमर्घ्यमष्टाङ्गसंयुतम् ॥ ॥ १२ ॥

समर्पयामि साम्राज्यलक्ष्म्यै सर्वार्थसिद्धये ।
गङ्गादिसरिदानीतं गाङ्गेयकलशास्थितम् ॥ १३ ॥

साम्राज्यलक्ष्मि सलिलमिदमाचम्यतां त्वया ।
दधिमध्वाज्यसम्मिश्रं मधुपर्कं मनोहरम् ॥ १४ ॥

समर्पयामि साम्राज्लक्ष्म्यै सर्वार्थसिद्धये ।
पञ्चामृतं सिताक्षीरदधिमध्वाज्यमिश्रितम् ॥ १५ ॥

समर्पयामि साम्राज्यलक्ष्म्याः स्नानार्थमादरात् ।
शातकुम्भमयैः कुम्भैः पुण्यतीर्थं समाहृतम् ॥ १६ ॥

समर्पयामि साम्राज्यलक्ष्म्याः स्नानार्थमञ्जसा ।
इत्युक्त्वा पुण्यसलिलैः श्रीसूक्तेन त्रिवारकम् ॥ १७ ॥

दक्षिणावर्तशङ्खेन ऋत्विग्भिस्सहितो गुरुः ।
नदत्सु पञ्चवाद्येषु ह्यभिषिञ्चेत्समाहितः ॥ १८ ॥

चीनदेशसमुद्भूतं चन्द्रांशुचयसन्निभम् ।
समर्पयामि साम्राज्यलक्ष्म्यै वसनमुत्तमम् ॥ १९ ॥

यज्ञोपवीतं सौवर्णं प्रशस्तं सर्वकर्मसु ।
समर्पयामि साम्राज्यलक्ष्म्यै सत्कर्मसिद्धये ॥ २० ॥

कर्पूरागरुकस्तूरीमिश्रितं दिव्यचन्दनम् ।
समर्पयामि साम्राज्यलक्ष्म्यै सत्कीर्तिसिद्धये ॥ २१ ॥

जातीपुन्नागवकुलचम्पकाशोकमल्लिकाः ।
पद्मेन्दीवरसेवन्तीदूर्वाबिल्वदलानि च ॥ ॥ २२ ॥

एतान्यन्यानि तत्कालजातानि कुसुमानि वै ।
समर्पयामि साम्राज्यलक्ष्म्याः पूजार्थमादरात् ॥ २३ ॥

इत्युक्त्वा मन्त्रविन्नानाविधपुष्पैः समर्चयेत् ।
सहस्रनामभिर्लक्ष्मीं लक्ष्मीस्थैर्याय सादरम् ॥ २४ ॥

एवं पुष्पान्तपूजायां कृतायां गुरुणा ततः ।
ऋत्विजोऽभिमुखास्स्वस्वदेवतानां यथाक्रमम् ॥ २५ ॥

प्रणवादिचतुर्थ्यन्तैस्तत्तन्मन्त्रैः पृथक्पृथक् ।
पुष्पान्तपूजां कृत्वाऽथ तिष्ठेयुस्तत्र तत्र तु ॥ २६ ॥

ततो गुरुस्सावरणदेवतायै समाहितः ।
प्रधानदेवतायै सधूपं दीपं प्रदापयेत् ॥ ॥ २७ ॥

वनस्पतिरसैर्दिव्यैर्गन्धाढ्यैस्सुमनोहरम् ।
समर्पयामि साम्राज्यलक्ष्म्यै धूपं सुपात्रगम् ॥ २८ ॥

प्रवर्तितं पट्टवर्त्या स्वच्छया गोघृताक्तया ।
समर्पयाामि साम्राज्यलक्ष्म्यै दीपं दिवानिशम् ॥ २९ ॥

इदं दिव्यान्नममृतं रसैष्षड्भिस्समन्वितम् ।
समर्पयामि साम्राज्यलक्ष्म्यै नैवेद्यमुत्तमम् ॥ ३० ॥

इत्युक्त्वाऽथ दशद्रोणसूक्ष्मतण्डुलपाचितम् ।
द्रोणपुष्पसमानाभमनेकव्यञ्जनान्वितम् ॥ ३१ ॥

समर्पयित्वा शुद्धान्नं तदर्धपरिमाणकम् ।
मुद्गान्नं शर्करोपेतं तावद्दध्यन्नमद्रिजे ॥ ३२ ॥

नानोपदंशसंयुक्तं नानापरिकरान्वितम् ।
परमान्नं घटान्पञ्चदश पानकपूरितान् ॥ ३३ ॥

कलशान्पञ्च पानीयपूरितं कलशत्रयम् ।
नानारसायनोपेतान्कांश्चिच्च कलशानपि ॥ ३४ ॥

उच्चावचानि भक्ष्याणि वटकान्पूरकांस्तथा ।
अपूपाँल्लड्डुकांश्चैव मोदकान्सरसांस्तथा ॥ ३५ ॥

मण्डलान्मुष्टिमानानि फेणिकाश्शष्कुलीरपि ।
एवमादीनि भक्ष्याणि प्रत्येकन्तु सहस्रकम् ॥ ३६ ॥

समर्प्य तत्परं नानाफलानि च समर्पयेत् ।
कदलीफलसाहस्रं खर्जूराणां सहस्रकम ॥ ३७ ॥

तथा कपित्थसाहस्रं इक्षुदण्डशतत्रयम् ।
चतुश्शतं गोस्तनीनां उर्वारुकशतन्तथा ॥ ३८ ॥

तथाम्रफलसाहस्र नारिकेलशतत्रयम् ।
पनसानां शतं देव्यै समर्प्य तदनन्तरम् ॥ ३९ ॥

मध्ये मध्ये च पानीयं दत्वा चापोशनं ततः ।
हस्तप्रक्षालनार्थं चै दद्याज्जलमनन्तरम् ॥ ४० ॥

प्रधानदेवतापूजां कृत्वैवं मन्त्रवित्तमः ।
ऋत्विग्भिः कारयित्वाङ्गाद्यावृतीशार्चनं क्रमात् ॥ ४१ ॥

ताम्बूलं देशिको दत्वा कृत्वाचैव प्रदक्षिणम् ।
नत्वा तां देवतां स्तुत्वा दत्वा पुष्पाञ्जलिं ततः ॥ ४२ ॥

वेद्याश्चेशानदिग्भागे कुण्डे वा स्थण्डिलेऽथ वा ।
स्वगृह्योक्तविधानेन प्रतिष्ठाप्य हुताशनम् ॥ ४३ ॥

कर्म कृत्वाऽऽज्यभागान्तं आचार्यो गोघृतेन तु ।
साम्राज्यलक्ष्मीमुद्दिश्य मूलेनाष्टशताहुतीः ॥ ४४ ॥

हुत्वाऽऽवरणदेवानां तत्तन्मन्त्रैः पृथक्पृथक् ।
अष्टावाज्याहुतीर्हुत्वा होमशेषं समाप्य च ॥ ॥ ४५ ॥

मूलमन्त्रं जपंस्तिष्ठेत् ऋत्विग्भिस्सह देशिकः ॥ ४५ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
साम्राज्यलक्ष्मीषोडशोपचारपूजामन्त्रस्वरूपकथनं नाम
त्रयोदशः पटलः ॥

अथ चतुर्दशः पटलः ॥
॥ महापूजांगदानस्वरूपकथनम् ॥

श्रीशिवः—ततो नृपस्स्वानुकूले मुहूर्ते समुपस्थिते ।
स्नातश्शुक्लाम्बरधरश्शुक्लमाल्यानुलेपनः ॥ १ ॥

स्वेष्टदेवं नमस्कृत्य भक्तियुक्तेन चेतसा ।
सखड्गचर्मकवचस्सर्वाभरणभूषितः ॥ ॥ २ ॥

गृहान्निर्गत्य भद्रेभमारुह्य स्वपुरो भुवि ।
नदत्सु पञ्चवाद्येषु भेरीकाहलकादिषु ॥ ३ ॥

चतुरङ्गबलोपेतस्सामात्यस्सपुरोहितः ।
सामन्तनृपतीन्पश्यन्स्वस्य पार्श्वानुयायिनः ॥ ४ ॥

वन्दिभिर्नद्यमानस्सन्नुद्बाहुभिरुदारधीः ।
तूर्णमभ्येत्य कूटाख्यं मण्टपं तन्मनोहरम् ॥ ५ ॥

त्रिः प्रदक्षिणमावृत्य पश्चिमद्वारतः प्रिये ।
प्रविश्यान्तर्देशिकं तमृत्विजो जापकानपि ॥ ६ ॥

कृत्वा प्रदक्षिणं नत्वा तत्परं नृपपुङ्गवः ।
पूर्वोक्तैरेव तन्मन्त्रैः पुरोहितमुखोद्गतैः ॥ ७ ॥

साम्राज्यलक्ष्मीं सम्पूज्य पूर्वोक्तैरुपचारकैः ।
ततस्तां प्रार्थयेद्देवीं वक्ष्यमाणक्रमेण वै ॥ ८ ॥

नमस्ते देवि साम्राज्यलक्ष्मि त्रैलोक्यपूजिते ।
मद्गृहे मत्पुरे राष्ट्रे नानोत्पातसमुद्भवम् ॥ ९ ॥

क्षामक्षोभभवं वाऽपि भयं यत्समुपस्थितम् ।
तत्सर्वं नाशय क्षिप्रं प्रजानां हितकाम्यया ॥ १० ॥

आयुर्मे देहि विपुलमैश्वर्यमणिमादिकम् ।
साम्राज्यं सन्ततिं देहि सन्ततं मम सादरम् ॥ ११ ॥

इति संप्रार्थ्य तां देवीं दद्यादुदकपूर्वकम् ।
मन्त्रेण वक्ष्यमाणेन गुरवे प्रीतिपूर्वकम् ॥ १२ ॥

साम्राज्यलक्ष्मीप्रतिमामिमां स्वर्णविनिर्मिताम् ।
पूजितां पुष्पगन्धाद्यैरसर्वलक्षणलक्षिताम् ॥ १३ ॥

तुभ्यं दास्यामि विप्रेन्द्र साम्राज्यस्थैर्यसिद्धये ।
सर्वशत्रुक्षयार्थाय विजयायामितायुषे ॥ १४ ॥

उत्पातभयशान्त्यर्थं पुरराष्ट्रनिवासिनाम् ।
जनानां क्षेमलाभार्थमुपसर्गनिवृत्तये ॥ १५ ॥

प्रतिमां प्रतिगृह्येमामभीष्टफलदो भव ।
एवं तां प्रतिमां दत्वा देशिकाय महीपतिः ॥ १६ ॥

दानसाद्गुण्यसिद्ध्यर्थं शतनिष्कांस्तु दक्षिणाम् ।
दत्वा तत्परमृत्विग्भ्यस्तथावरणदेवताः ॥ १७ ॥

दत्वा दक्षिणया सार्धं जापकेभ्यः पृथक्पृथक् ।
समर्प्य निष्कदशकं गोशतं समलङ्कृतम् ॥ १८ ॥

ग्रामान्हिरण्यं वासांसि गजानश्वांश्च शक्तितः ।
दत्वा दक्षिणया सार्धं ब्राह्मणेभ्यस्ततः परम् ॥ १९ ॥

दीनान्धान्तर्पयित्वाथ भोजयित्वा द्विजोत्तमान् ।
पुनर्भद्रेभमारुह्य प्रविशेन्निजमन्दिरम् ॥ २० ॥

एवं कृत्वा महापूजां यथोक्तविधिना नृपः ।
शत्रुभिर्नाभिभूयेत न रोगैर्न च तस्करैः ॥ २१ ॥

नोत्पातभीतिभिर्देवि नोपसर्गभयेन च ।
परकृत्यामन्त्रयन्त्रतन्त्रभीतिविवर्जितः ॥ २२ ॥

रूपसौभाग्यसम्पन्नो दीर्घायुर्निरुपद्रवः ।
पुत्रपौत्रैः परिवृतो दिव्यस्त्रीगणसेवितः ॥ २३ ॥

साम्राज्यलक्ष्मीं संप्राप्य पालयेदखिलं जगत् ।
प्रजाश्च पुरराष्ट्रस्था नीरोगा निरुपद्रवाः ॥ २४ ॥

धनधान्यसमायुक्ताः पुत्रपौत्रसमन्विताः ।
उत्पातभीतिरहितास्स्वधर्मनिरतास्सदा　　॥ २५ ॥

दीर्घायुषो भविष्यन्ति नात्र कार्या विचारणा ।
इत्येवं ते समाख्याता महापूजा वरानने　　॥ २६ ॥

साम्राज्यलक्ष्म्यास्सर्वार्थसिद्धिदा सिद्धपूजिते ।
वर्धापनादिने देवि वर्षेवर्षे विशेषतः ॥　　॥ २७ ॥

कर्तव्यैषा महापूजा ह्यारोग्यायामितायुषे ।
महाशान्तिश्च कर्तव्या कार्ये महति चागते ॥
अप्रमत्तैर्महीपालैः राष्ट्ररक्षार्थमद्रिजे ॥　　॥ २८ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
महापूजास्वरूपकथनं नाम
चतुर्दशः पटलः ॥



॥ अथ पञ्चदशः पटलः ॥

॥ महाशान्तिप्रयुक्त मण्टपस्वरूपकथनम् ॥

श्रीपार्वती—देवदेव विरूपाक्ष लोकरक्षणतत्पर ।
महाशान्तिर्नृपतिभिः कर्तव्येति त्वयेरितम्　　॥ १ ॥

कस्मिन्काले किमर्थं वा कर्तव्या सा वद प्रभो ।
श्रीशिवः—साधु साधु वरारोहे यन्मां त्वं परिपृच्छसि ॥ २ ॥

तत्तेऽहं संप्रवक्ष्यामि सावधानमनाश्शृणु ।
दुर्निमित्तेषु पूर्वोक्तेष्वद्भुतेषु महत्सु च ॥ ३ ॥

समुद्भूतेष्वनावृष्ट्यां सत्यां सामन्तराजभिः ।
समाक्रान्ते पुरे राष्ट्रे दुर्भिक्षे समुपस्थिते ॥ ४ ॥

आक्रान्ते नृपनक्षत्रे यदावा दारुणैर्ग्रहैः ।
कर्तव्यैषा महाशान्तिस्तदा राज्ञा स्वगुप्तये ॥ ५ ॥

राष्ट्रस्य च प्रजानाञ्च रक्षणार्थं विशेषतः ।
निमित्तानन्तरङ्कार्यं नैमित्तिकमिति स्मृतम् ॥ ६ ॥

तस्मान्निमित्ते सञ्जाते कार्यैषा शान्तिरुत्तमा ।
देवालये नदीतीरे स्वगृहस्याग्रतोपिवा ॥ ७ ॥

विंशद्धस्तप्रमाणेन कारयेन्मण्टपं शुभम् ।
षोडशस्तंभसंयुक्तं मध्ये चोन्नतमद्रिजे ॥ ८ ॥

दर्भमालापरिवृतमुपर्याच्छादितं कटैः ।
वंशजैर्नारिकेलोत्थैरथ वा मुञ्जसम्भवैः ॥ ९ ॥

चतुर्द्वारं चतुर्भद्रं चतुस्तोरणसंयुतम् ।
लोकपालपताकाभिर्ध्वजेन च विराजितम् ॥ १० ॥

वितानचामरादर्शैः सर्वतस्समलङ्कृतम् ।
प्रतिद्वारं पार्श्वयुगन्यस्तपूर्णघटान्वितम् ॥ ११ ॥

ईदृशे मण्टपे रम्ये मध्ये वेदिं प्रकल्पयेत् ।
अष्टहस्तप्रमाणेन विस्तृतामायतान्तथा ॥ १२ ॥

चतुर्थांशोच्छ्रितां रम्यामिष्टकाभिर्मृदाऽपि वा ।
साम्राज्यलक्ष्मीपूजार्थं स्निग्धामादर्शबिम्बवत् ॥ १३ ॥

तस्यास्तु पूर्वदिग्भागे कुण्डमेकं प्रकल्पयेत् ।
चतुरश्रं हस्तमात्रं मेखलात्रयसंयुतम् ॥ १४ ॥

अश्वत्थदलसङ्काशं द्वादशाङ्गुलयोनिकम् ।
साम्राज्यलक्ष्मीहोमार्थं सर्वलक्षणलक्षितम् ॥ १५ ॥

कारयेद्वास्तुहोमार्थं वेद्या दक्षिणभागतः ।
कुण्डं खण्डेन्दुसदृशं पूर्ववल्लक्षणान्वितम् ॥ १६ ॥

पश्चिमे कारयेत्कुण्डं ग्रहयज्ञार्थमद्रिजे ।
वृत्तं लक्षणसंयुक्तमुत्तरे पद्मसन्निभम् ॥ १७ ॥

कारयेदष्टदिक्पालहोमार्थं कुण्डमुत्तमम् ।
एवं कुण्डानि चत्वारि वेदिकाञ्च सलक्षणाम् ॥ १८ ॥

कारयित्वा गोमयेन लेपयित्वा सवारिणा ।
पञ्चवर्णैरलङ्कृत्य रजोभिश्च समन्ततः ॥ १९ ॥

संपाद्य पूजाहोमादिसामग्रीं नृपपुङ्गवः ।
शुभे दिने शुभे लग्ने महाशान्तिं समाहितः ॥

द्विजातिभिश्चतुष्षष्टिसङ्ख्याकैः कारयेत्प्रिये ॥ २० ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
महाशान्तिप्रयुक्त मण्टपस्वरूपकथनं नाम
पञ्चदशः पटलः ॥

॥ अथ षोडशः पटलः ॥

॥ सावरणसाम्राज्यलक्ष्मीप्रतिमास्थापनस्वरूपकथनम् ॥

श्रीशिवः—ततः पुरोधसा साकं सम्मन्त्र्य नृपपुङ्गवः ।
स्नात्वा नद्यां ह्रदे वाऽपि धौतवस्त्रः प्रसन्नधीः ॥ १ ॥

धृत्वोर्ध्वपुण्ड्रं निर्वर्त्य सत्यकर्मा यथोचितम् ।
स्वेष्टदेवं समाराध्य गन्धपुष्पाक्षतादिभिः ॥ २ ॥

प्राङ्मुखः प्रयतो भूत्वा प्राणायामपुरस्सरम् ।
संङ्कीर्त्य देशङ्कालं च नानोत्पातसुशान्तये ॥ ३ ॥

प्रजानामात्मनश्चैवे राष्ट्रस्य नगरस्य च ।
रक्षार्थं कारयिष्येऽहं चतुष्षष्टि द्विजोत्तमैः ॥ ४ ॥

महाशान्तिं यथाशास्त्रमिति सङ्कल्प्य सादरम् ।
साम्राज्यलक्ष्मीपूजार्थं होमार्थं च बहुश्रुतम्  ॥ ५ ॥

आचार्यमेकं वृणुयाद्विनयादिगुणान्वितम् ।
अङ्गावरणदेवादि देवता पूजनाय च  ॥ ६ ॥

वेदवेदाङ्गतत्वज्ञान्वृणुयात्त्रिंशदृत्विजः ।
सर्वकर्मानुसन्धानं कर्तुं ब्रह्माणमेव च  ॥ ७ ॥

वृत्वाऽथ वास्तुपूजार्थं होमार्थं विप्रपुङ्गवान् ।
निमन्त्र्य दशसंख्याकानथाष्टौ वृणुयाद्द्विजान्  ॥ ८ ॥

दिक्पालपूजाहोमार्थं ग्रहयज्ञार्थमद्विजे ।
विभज्य दशविप्रांस्तु चतुरोथ द्विजोत्तमान्  ॥ ९ ॥

वेदपारायणार्थं तु वृत्वा तान्द्विजपुङ्गवान् ।
कुण्डलैरंगुलीयैश्च पट्टवस्त्रैश्च चित्रितैः  ॥ १० ॥

अलङ्कृत्य वदेदेवं तान्विप्रान्पृथिवीपतिः ।
भो भो द्विजवरा यूयं वेदवेदान्तपारगाः  ॥ ११ ॥

कृपालवः सत्यसन्धाः सर्वप्राणिहिते रताः ।
मया सङ्कल्पिते शान्तिकर्मण्यस्मिन्यथाविधि ॥ १२ ॥

वर्तितव्यं भवद्भिस्तु सावधानेन चेतसा ।
मन्त्रलोपक्रियालोपाद्यरिष्टं न भवेद्यथा  ॥ १३ ॥

तथेदं कर्म युष्माभिस्समाप्यं सूक्ष्मया धिया ।
मम राष्ट्रे पुरे चैव संभूतोत्पातशान्तये ॥ १४ ॥

प्रजानामात्मनश्चैव रक्षणार्थं विशेषतः ।
कर्तव्यैषा महाशान्तिर्यथाशास्त्रं यथाविधि ॥ १५ ॥

साम्राज्यदा महालक्ष्मीस्सम्यक्तुष्टा यथा भवेत् ।
तथेदं कर्म युष्माभिः कर्तव्यमविशङ्कया ॥ १६ ॥

इति संप्रार्थ्य तान्विप्रानारोप्य शिबिकादिषु ।
नदत्सु पञ्चवाद्येषु पुरतो मण्टपान्तिकम् ॥ १७ ॥

गत्वा नरपतिस्तूर्णं भद्रेभादवरुह्य तम् ।
त्रिः प्रदक्षिणमावृत्य मण्टपस्य तलोदरि ॥ १८ ॥

प्रवेशयित्वा तान्विप्रान्पश्चिमद्वारदेशतः ।
तन्मण्टपान्तरासीनानासनेषु पृथक्पृथक् ॥ १९ ॥

बद्धाञ्जलिपुटो राजा नत्वा कृत्वा प्रदक्षिणम् ।
आचार्यं प्रार्थयेत्सम्यग्वक्ष्यमाणविधानतः ॥ २० ॥

भो ? भो ? देशिक सर्वज्ञ होतृभिस्साहितो भवान् ।
साङ्गोपाङ्गमिदं कर्म करोत्वद्य यथाविधि ॥ २१ ॥

अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्त्वथर्त्विजः ।
आत्मानं दक्षिणाहीनो नास्ति यज्ञसमो रिपुः ॥ २२ ॥

तस्माद्यथा मन्त्रहीनं कर्मेदं न भवेत्तथा ।
क्रियतां भवता सम्यक्सावधानेन चेतसा ॥ २३ ॥

इति संप्रार्थ्य कुसुमैरभ्यर्च्याचार्यमञ्जसा ।
पुनर्भद्रेभमारुह्य जयघोषपुरस्सरम् ॥
वन्दिभिर्नन्द्यमानस्सन्प्रविशेन्निजमन्दिरम् ॥ २४ ॥

इत्याकशभैरवाख्ये महागैवतन्त्रे, सामाज्यलक्ष्मीपीठिकायां
आचार्यऋत्विग्वरणस्वरूपकथनं नाम षोडशः पटलः ॥

---

॥ अथ सप्तदशः पटलः ॥

॥ महाशान्त्यङ्गवास्तुहोमस्वरूपनिरूपणम् ॥

श्रीशिवः—अथ संप्रार्थितो राज्ञा होतृभिस्सहितो गुरुः ।
नत्वा गुरुं गणाध्यक्षं कृत्वा भूशुद्धिमद्रिजे ॥ १ ॥

वाचयित्वाऽथ पुण्याहं वाद्यघोषपुरस्सरम् ।
वास्तूपशमनं कर्तुं वृतं राज्ञा पुरा गुरुम् ॥ २ ॥

आहूय वास्तुदेवानां पूजां होमं यथाविधि ।
कुरुष्वेति समाभाष्य स्वयं तिष्ठेत्तदग्रतः ॥ ३ ॥

आचार्योऽथाष्टभिर्युक्तो होतृभिर्ब्रह्मणा सह ।
प्राङ्मुखः प्रयतो भूत्वा प्राणायामपुरस्सरम् ॥ ४ ॥

सङ्कीर्त्य देशं कालञ्च राज्ञो राष्ट्रस्य वृद्धये ।
राज्ञा सङ्कल्पितमहाशान्त्यङ्गं वास्तुपूजनम् ॥ ५ ॥

करिष्य इति सङ्कल्प्य वेद्यां दक्षिणभागतः ।
गोमयेनानुलिप्योर्वीं रङ्गवल्लीं निधाय च ॥ ६ ॥

तत्र शुभ्रैस्तण्डुलैस्तु यथाविभवसम्भवैः ।
वितस्त्युच्छ्रायसंयुक्तां बाहुमालां समन्ततः ॥ ७ ॥

कृत्वा वेदिं वास्तुचक्रं तस्यां सम्यक्प्रकल्पयेत् ।
दश प्रागायता रेखा दश चैवोदगायताः ॥ ८ ॥

समान्तरालास्संलिख्य समाः कुर्याद्विचक्षणः ।
एवं कृते भवेच्चक्रमेकाशीतिपदात्मकम् ॥ ९ ॥

पदानि तानि च पुनः कोष्ठानि परिकल्पयेत् ।
पञ्चचत्वारिंशदुक्तप्रकारेण विचक्षणः ॥ १० ॥

मध्ये चैकपदस्त्वेकश्चत्वारस्त्रिपदास्स्मृताः ।
दिक्षु कोणेष्वेकपदाश्चत्वारः परिकीर्तिताः ॥ ११ ॥

तद्बाह्ये त्वीशदिग्भागे चत्वारश्चैव कोष्टकाः ।
द्विपदाः पूर्वदिग्भागे पञ्चात्र परिकीर्तिताः ॥ १२ ॥

आग्नेयभागे चत्वारः पृथगेकपदास्स्मृताः ।
पञ्च दाक्षिणदिग्भागे द्विपदास्स्युः पृथक्पृथक् ॥ १३ ॥

नैर्ऋत्यां दिशि चत्वारः पृथगेकपदास्स्मृताः ।
पश्चिमे द्विपदाः पञ्च वायव्ये च तथा पुनः ॥ १४ ॥

कल्प्याश्चैकपदास्सम्यक्चत्वारस्सौम्यदिङ्मुखे ।
कर्तव्या द्विपदाः पञ्च वास्तुशास्त्रोक्तमार्गतः ॥ १५ ॥

एवं विधाय कोष्ठानि क्रमशस्तेषु विन्यसेत् ।
सौवर्णान्राजतांस्ताम्रान्मृण्मयान्वा स्वशक्तितः ॥ १६ ॥

कलशान्कोष्ठसंख्याकान्सुधाधवलितांश्शुभान् ।
तन्तुभिर्वेष्टितान्पञ्चपल्लवैरुपशोभितान् ॥ १७ ॥

गन्धपुष्पार्चितांस्तीर्थपूरितान्फलसंयुतान् ।
प्रसार्य तेषु वस्त्राणि स्थापयेद्वास्तुदेवताः ॥ १८ ॥

माषात्सुवर्णपर्यन्तं शक्तितस्स्वर्णनिर्मिताः ।
प्रत्येकं लक्षणोपेताः पञ्चगव्याभिषेचिताः ॥ १९ ॥

मध्ये नवपदे ब्रह्मा तत्पार्श्वे दक्षिणे शुभे ।
स्थिराख्यो वास्तुपुरुषो वामे तु चरसंज्ञितः ॥ २० ॥

ब्रह्मस्थानात्तु परितः प्रागादिषु यथाक्रमम् ।
दिक्ष्वर्यमा विवस्वांश्च मित्रः पृथ्वीधराह्वयः ॥ २१ ॥

पूजनीयाः क्रमात्कोणेष्वैशानादिषु तत्परम् ।
आपवत्सश्च सविता ततस्तु विबुधाधिपः ॥ २२ ॥

राजयक्ष्मा च पूज्यास्स्युरेवं स्यात्प्रथमाऽऽवृतिः ।
अथ द्वितीयावरणे पूज्यश्चैशानकोणके ॥ २३ ॥

आपश्चाग्नेयकोणे तु सावित्रो नैर्ऋते जयः ।
रुद्रस्तु पूज्यो वायव्ये तृतीये परिधौ ततः ॥ २४ ॥

ईशानपदमारभ्य द्वात्रिंशत्कोष्ठकेषु च ।
प्रादक्षिण्येन पूज्यास्स्युर्द्वात्रिंशच्छिखिपूर्वकाः ॥ २५ ॥

शिखी चैवाथ पर्जन्यो जयन्तः कुलिशायुधः ।
सूर्यस्सत्यो भृगुश्चैव ह्याकाशो वायुरेव च ॥ २६ ॥

पूषा च वितथश्चैव बृहत्क्षत्रयमावुभौ ।
गन्धर्वो भृङ्गराजश्च मृगः पितृगणस्तथा ॥ २७ ॥

दौवारिकोऽथ सुग्रीवः पुष्पदन्तो जलाधिपः ।
असुरश्शोषपापौ च रोगोऽहिर्मुख्य एव च ॥ २८ ॥

भल्लाटस्सोमनागौ च ह्यदितिश्च दिशस्तथा ।
तृतीयपरिधावेवं द्वात्रिंशद्विबुधास्स्मृताः ॥ २९ ॥

ब्रह्मा चतुर्मुखो रक्तो लम्बकूर्चश्चतुर्भुजः ।
वराक्षमालासंयुक्तो वामे दण्डकमण्डलू ॥ ३० ॥

दधानश्चाष्टनयनो यजनादौ व्यवस्थितः ।
वास्तुमर्त्यो महाकायः कृष्णाङ्गो रक्तलोचनः ॥ ३१ ॥

एकाननो द्विबाहुश्च बर्बराङ्गश्च दुर्धरः ।
वज्रदेहस्स्फुरत्कायो बहुश्मश्रुशिरोरुहः ॥ ३२ ॥

ईशानमस्तकः क्रुद्धो नैर्ऋते गतपादकः ।
कृताञ्जलिरधोवक्त्रो वास्तुमर्त्यः प्रकीर्तितः ॥ ३३ ॥

शिख्यादिपिलिपिञ्छान्ता वास्तुदेवा हिमाद्रिजे ।
हृदि बद्धाञ्जलिपुटा मकुटादिविभूषिताः ॥ ३४ ॥

प्रणवादिचतुर्थ्यन्तैर्नमोन्तैर्नाममन्त्रकैः ।
उपचारैष्षोडशभिरर्चनीयाः पृथक्पृथक् ॥ ३५ ॥

चक्राद्बहिश्चतसृषु विदिक्षु क्रमशो यजेत् ।
चरकीञ्च विदारीञ्च पूतनां पापराक्षसीम् ॥ ३६ ॥

दिक्षु स्कन्दं चार्यमणं जृम्भं च पिलिपिञ्छकम् ।
सम्पूज्य नाममन्त्रैस्तु कुण्डे खण्डेन्दुसन्निभे ॥ ३७ ॥

स्वगृह्योक्तविधानेन संस्थाप्याग्निं सदेशिकः ।
मुखान्तं कर्म कृत्वाऽथ होतृभिर्ब्रह्मणा सह ॥ ३८ ॥

ब्रह्मजज्ञानमन्त्रेण पालाशैर्होममाचरेत् ।
अष्टोत्तरशतं विद्वानष्टाविंशतिमेव वा ॥ ३९ ॥

वास्तोष्पते प्रतीत्युक्त्वा दूर्वाहोमं समाचरेत् ।
वास्तोष्पते प्रतरण इति मन्त्रेण पायसम् ॥ ४० ॥

हुत्वा वास्तोष्पते शग्मयेति खादिरसंभवैः ।
समिद्वरैः पूर्ववच्च हुत्वा पूर्वोक्तसंख्यया ॥ ४१ ॥

अमीवहेति मन्त्रेण तिलहोमं समाचरेत् ।
एवं पृथक्पृथग्घुत्वा शिख्यादीनां हुनेत्ततः ॥ ४२ ॥

वास्त्वावरणदेवानां समिद्भिश्चरुणा ततः ।
गोधूमैश्च तिलैश्चैव ह्याज्येन च पृथक्पृथक् ॥ ४३ ॥

अष्टौ पञ्चाथ तिस्रो वा जुहुयादाहुतीः क्रमात् ।
एवं कृत्वा प्रधानाख्यं होमकर्म यथाविधि ॥ ४४ ॥

ततस्स्विष्टकृतं हुत्वा होमशेषं समापयेत् ।
बह्वन्नं बहुशाकाढ्यं बहुभक्ष्यसमन्वितम् ॥ ४५ ॥

दत्वा बलिं गुरुर्वास्तुदेवानां होतृभिस्सह ।
वास्तुसूक्तं जपंस्तिष्ठेत्प्रार्थयन्नृपतेश्शुभम् ॥ ४६ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
महाशान्त्यङ्गवास्तुहोमस्वरूपकथनं नाम
सप्तदशः पटलः ॥



## ॥ अथ अष्टादशः पटलः ॥

### ॥ महाशान्त्यङ्गग्रहयज्ञस्वरूपकथनम् ॥

श्रीशिवः—ततः पुरावृतो राज्ञा ग्रहयज्ञार्थमद्रिजे ।
आचार्यो ब्रह्मणा सार्धमृत्विग्भिस्साहितोऽष्टाभिः ॥ १ ॥

प्राङ्मुखस्तु द्विराचम्य प्राणायामपुरस्सरम् ।
सङ्कीर्त्य देशं कालञ्च पुरे जनपदेऽपि च ॥ २ ॥

जातनानाद्भुताद्भूतक्षामक्षोभनिवृत्तये ।
राज्ञश्चिरायुषे सर्वप्रजानां च हिताय च ॥ ३ ॥

साम्राज्यलक्ष्मीप्रीत्यर्थं राज्ञा धर्मानुवर्तिना ।
सङ्कल्पितमहाशान्तिकर्माङ्गत्वेन सादरम् ॥ ४ ॥

ग्रहयज्ञं करिष्येऽहमिति सङ्कल्प्य तत्परम् ।
वेद्यां पश्चिमदिग्भागे गोमयेन सवारिणा ॥ ५ ॥

संलिप्य समलङ्कृत्य रङ्गवल्ल्या समन्ततः ।
तत्राढकमितैश्शुभ्रतण्डुलैर्बाहुसम्मिताम् ॥ ६ ॥

चतुरश्रां विनिर्माय वेदिं तत्रोदगायताः ।
प्रागायताश्चतस्रश्च रेखास्संलिख्य देशिकः ॥ ७ ॥

नवकोष्टानि सम्पाद्य तेषु पङ्केरुहाणि च ।
साष्टपत्राणि संलिख्य तेषु स्वर्णविनिर्मितान् ॥ ८ ॥

राजतान्वाथ ताम्रान्वा मृन्मयान्वा नवान्नव ।
सुधाधवलितान्सूत्रवेष्टितान्तीर्थपूरितान् ॥ ९ ॥

पञ्चत्वक्पल्लवोपेतान्गव्यरत्नसमन्वितान् ।
विन्यस्य कलशांस्तेषु वस्त्राण्यास्तीर्य तेषु वै ॥ १० ॥

पलेन वा तदर्धेन तदर्धार्धेन वा कृताः ।
सुवर्णेन वरारोहे ग्रहाणां प्रतिमाः शुभाः ॥ ११ ॥

तत्तल्लक्षणसम्पन्नास्साधिप्रत्यधिदेवताः ।
साङ्गुण्यदेवतायुक्ता विन्यस्य तदनन्तरम् ॥ १२ ॥

संशोध्य पञ्चभिर्गव्यैः कृत्वा सुस्थापनं ततः ॥
समावाह्य व्याहृतिभिः पुराणोक्तैश्च वैदिकैः ॥ १३ ॥

तत्तत्प्रकाशकैर्मन्त्रैस्सम्पूज्य कुसुमादिभिः ।
उपचारैष्षोडशभिः पृथक्पृथगनुक्रमात् ॥ १४ ॥

तत्परं ग्रहसूक्तानि होतृभिस्सह देशिकः ।
पञ्चवारं जपित्वाऽथ वृत्तकुण्डे हुताशनम् ॥ १५ ॥

प्रतिष्ठाप्य स्वगृह्योक्तविधिना चक्षुरन्तकम् ।
कर्म कृत्वा प्रधानाख्यं होमकर्म समारभेत् ॥ १६ ॥

तत्तद्ग्रहसमिद्भिस्तु चरुणा सर्पिषाऽपि च ।
भक्ष्यैस्तिलैः फलैश्चैव प्रतिद्रव्यं पृथक्पृथक् ॥ १७ ॥

सूर्यचन्द्राङ्गारकादिषट्त्रिंशद्देवताः प्रति ।
अष्टोत्तरशतं हुत्वा कृत्वा स्विष्टकृदादिकम् ॥ १८ ॥

होमशेषं समाप्याथ पुनः पूजां यथाविधि ।
कृत्वा सम्पातमाज्यं तत् कुम्भे विन्यस्य वारुणे ॥ १९ ॥

ऋत्विग्भिर्ब्रह्मणा साकमाचार्यस्सुसमाहितः ।
मृतसञ्जीविनीसूक्तं सूक्तमायुष्यसंज्ञकम् ॥ २० ॥

घृतसूक्तं महासौरं महाशान्तिमपि क्रमात् ।
जपित्वा दीर्घमायुष्यमारोग्यममितं बलम् ॥
प्रार्थयंस्तन्महीभर्तुर्वसेत्तत्र स्वलङ्कृतः ॥ २१ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे, साम्राज्यलक्ष्मीपीठिकायां
महाशान्त्यङ्गग्रहयज्ञस्वरूपकथनं नाम अष्टादशः पटलः ॥



## ॥ अथ एकोनविंशः पटलः ॥

### ॥ महाशान्त्यङ्गदिक्पालहोमस्वरूपनिरूपणम् ॥

श्रीशिवः—ततो दिक्पालहोमार्थं विप्रो राज्ञा वृतः पुरा ।
अष्टावष्टस्वासनेषु समासीनास्स्वलङ्कृताः ॥ १ ॥

निधाय पञ्चगव्येन संशोध्य तदनन्तरम् ।
कृत्वा सुस्थापनं मन्त्रैः पुराणोक्तैश्च वैदिकैः ॥ ११ ॥

ततो व्याहृतिभिर्व्यस्तसमस्ताभिः पृथक्पृथक् ।
समावाह्य समभ्यर्च्य लोकपालप्रकाशकैः ॥ १२ ॥

वैदिकै स्तान्त्रिकै र्मन्त्रै र्गन्धाद्यैः कुसुमैर्नवैः ।
कृत्वोपचारान्देवेशि षोडशात्र यथाक्रमम् ॥ १३ ॥

ततो दिक्पालसूक्तानि जपित्वा पञ्चवारकम् ।
पुनः पुष्पाञ्जलिं दत्वा प्रतिमासु पृथक्पृथक् ॥ १४ ॥

ततः कुम्भे पद्मनिभे प्रतिष्ठाप्य हुताशनम् ।
गृह्योक्तविधिना देवि तान्त्रिकोक्तेन वा पुनः ॥ १५ ॥

मुखान्तं कर्म कृत्वाऽथ प्रधानं होममद्रिजे ।
पलाशसमिदन्नाज्यै रष्टोत्तरसहस्रकम् ॥ १६ ॥

अष्टोत्तरं शतं वाऽपि कृत्वा स्विष्टकृदादिकम् ।
होमशेषं समाप्याथ जातवेदसमद्रिजे ॥ १७ ॥

पुष्पाक्षतैरलङ्कृत्य पुनःपूजां यथाविधि ।
कृत्वाऽथ लोकपालानां नत्वा कृत्वा प्रदक्षिणम् ॥१८॥

तच्चादिक्पालकलशनिकटेषु स्थिता द्विजाः ।
शत्रूच्चाटनसूक्तानि रक्षोघ्नानि विशेषतः ॥ १९ ॥

तथाऽस्त्रशस्त्रसूक्तानि दौन्दुभं सूक्तमेव च ।
जयप्रदांस्तथा मन्त्रा न्वर्मं नारायणाह्वयम् ॥ २० ॥

जपन्तस्तत्र तिष्ठेयुस्त्रिवारं तन्महीसुराः ।
प्रार्थयन्तोऽमितायुष्यमारोग्यमममितं बलम् ॥
विजयं विपुलां लक्ष्मीमसकृत्तन्महीभुजः ॥ २१ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
महाशान्त्यङ्गदिक्पालहोमस्वरूपकथनं नाम
एकोनविंशः पटलः ॥

---

॥ अथ विंशः पटलः ॥

॥ महाशान्तिपूजाहोमस्वरूपकथनम् ॥

श्रीशिवः—अथ वक्ष्ये महाशान्तिविधानं विधिवन्दिते ।
सर्वपापक्षयकरं सर्वोपद्रवनाशनम् ॥ १ ॥

उत्पातभीतिशमनं राज्ञां विजयदं सदा ।
आचार्यः प्राग्वृतो राज्ञा महाशान्त्यर्थमद्रिजे ॥ २ ॥

सहितस्त्रिशदृत्विग्भि र्ब्रह्मणा च समन्वितः ।
प्राङ्मुखस्तु द्विराचम्य देशकालानुकीर्तनम् ॥ ३ ॥

कृत्वा राज्ञश्च राष्ट्रस्य प्रजानां च हिताय वै ।
चिकीर्षितां महाशान्तिं राज्ञा धर्मानुवर्तिना ॥ ४ ॥

करिष्य इति सङ्कल्प्य वेद्यां प्राग्दिशि संयतः ।
तण्डुलैर्भारमात्रैस्तु कृत्वा मण्डलमद्रिजे ॥ ५ ॥

संलिख्य तत्र साम्राज्यलक्ष्मीयन्त्रं तु पूर्ववत् ।
तत्र विन्यस्य सौवर्णान्राजतान्वाऽथ ताम्रजान् ॥ ६ ॥

मृन्मयान्कलशान्सूत्रवेष्टितांस्तीर्थपूरितान् ।
पञ्चत्वक्पल्लवोपेतान्गव्यरत्नसमन्वितान् ॥ ७ ॥

कुम्भेषु तेषु चास्तीर्य पट्टवस्त्राणि पार्वति ।
मध्यवृत्तास्थिते कुम्भे शतनिष्कसुवर्णतः ॥ ८ ॥

कृतां संस्थाप्य साम्राज्यलक्ष्मीमूर्तिमनन्तरम् ।
षट्कोणकोणे विन्यस्तपूर्णकुम्भेषु षट्स्वपि ॥ ९ ॥

दशनिष्कसुवर्णेन निर्मिताश्च पृथक्पृथक् ।
क्रमेण विनिधायाङ्गदेवताश्च पृथक्पृथक् ॥ १० ॥

पद्मस्य दलमूलेषु विन्यस्तकलशेष्वथ ।
धनलक्ष्यादिलक्ष्मीणां प्रतिमाश्चाष्ट वै क्रमात् ॥ ११ ॥

निधाय दशमध्यस्थकलशेष्वष्टसु क्रमात ।
दिक्पालप्रतिमाश्चाष्टौ विन्यस्य दशकोटिषु ॥ १२ ॥

स्थितेष्वष्टसु कुम्भेषु दिक्पालायुधचिह्निताः ।
विन्यस्य चाष्टौ प्रतिमा गन्धैस्संशोध्य ताः पुनः ॥१३॥

कृत्वा सुस्थापनं तासां मन्त्रैर्वैदिकतान्त्रिकैः ।
महापूजोक्तोपचारमन्त्रैः पूजां यथाक्रमम् ॥ १४ ॥

साम्राज्यलक्ष्म्याः कृत्वाऽथ महानैवेद्यमद्रिजे ।
महापूजोक्तमार्गेण समर्प्य तदनन्तरम् ॥ १५ ॥

ताम्बूलमुखवासादिं पूजाशेषं समाप्य तु ।
प्रदक्षिणनमस्कारान्कृत्वा पुष्पाञ्जलीनपि ॥ १६ ॥

दत्वा श्रीसूक्तभूसूक्ते लक्ष्मीसूक्तमपि क्रमात् ।
त्रिवारं पञ्चवारं वा जपित्वा होतृभिस्सह ॥ १७ ॥

जापकांश्चतुरो द्वारदेशेषु विनिवेश्य च ।
स्वस्तिसूक्तं शाकुनं च रक्षोघ्नानि च कानिचित् ॥ १८॥

तथा सुमङ्गलीसूक्तं सूक्तमायुष्करं तथा ।
महाशान्तिं महासौरमाहोमान्तावधि क्रमात् ॥ १९ ॥

त्रिवारं पञ्चवारं वा जपध्वमिति तान्गुरुः ।
विनियुज्याथ तुर्याश्रे कुण्डे प्राग्भागकल्पिते ॥ २० ॥

स्वगृह्योक्तविधानेन प्रतिष्ठाप्याग्निमाद्रिजे ।
चक्षुरन्तं कर्म कृत्वा मूलमन्त्रेण मन्त्रवित् ॥ २१ ॥

साम्राज्यलक्ष्मीमावाह्य तस्मिन्प्रज्वलितेऽनले ।
शङ्खतोयेन सम्पूज्य सावृतीशां सदेशिकः ॥ २२ ॥

होमं निवेद्य स्थाने तु दशद्रव्यैः समाचरेत् ।
पलाशसमिदन्नाज्यैः फलभक्ष्यातिलैरपि ॥ २३ ॥

लाजैः फुल्लैश्च कमलैस्सक्तुभिश्चेक्षुपर्वभिः ।
एवं दशविधैर्द्रव्यैः प्रतिद्रव्यं पृथक्पृथक् ॥ २४ ॥

सहस्रमाहुतीः कृत्वा मूलमन्त्रेण देशिकः ।
ततस्तु प्रेरयेद्विद्वानृत्विजस्तान्यथाविधि ॥ २५ ॥

कुरुत स्वस्वदेवानां होमकर्मेति सादरम् ।
अथ संचोदितास्तेन गुरुणा ते द्विजोत्तमाः ॥ २६ ॥

होमं कुर्युर्दशद्रव्यैस्स्वस्वावरणदेवताः ।
उद्दिश्याष्टोत्तरशतमाहुतीनां पृथक्पृथक् ॥ २७ ॥

प्रणवादिचतुर्थ्यन्तनमोऽन्तैर्नाममन्त्रकैः ।
एवमावरणेशानां होमे सम्यगनुष्ठिते ॥ २८ ॥

आचार्योऽथ स्विष्टकृतं हुत्वा शेषं समाप्य तु ।
परिषिच्यानलं शश्वदलङ्कृत्याक्षतादिभिः ॥ २९ ॥

प्रसन्नपूजां साम्राज्यलक्ष्म्यास्सम्यग्विधाय च ।
श्रीसूक्तञ्चैव भूसूक्तं लक्ष्मीसूक्तञ्च पावनम् ॥ ३० ॥

पावमानं तथा सूक्तं स्वस्तिसूक्तञ्च शाकुनम् ।
शत्रूच्चाटनसूक्तानि रक्षोघ्नानि च कानि चित् ॥ ३१ ॥

महासौरं महाशान्तिमृत्विग्भिस्सहितो गुरुः ।
जपन्त्रिवारं तद्राज्ञोऽनुक्षणं चिन्तयन्शुभम् ॥
साम्राज्यलक्ष्मीनिकटे वसेद्बद्धाञ्जलिर्हृदि ॥ ३२ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकाया
महाशान्तिपूजाहोमस्वरूपकथन नाम
विंश पटल ॥

॥ अथ एकविंश पटलः ॥

॥ महाशान्तिस्वरूपकथनम् ॥

श्रीशिवः—ततो नृपस्यानुकूले मौहूर्तिकविनिश्चिते ।
मुहूर्ते हेमकुम्भस्थैः पुण्यतीर्थाहृतैर्जलैः ॥ १ ॥

स्नातश्शुक्लाम्बरधरश्शुक्लमाल्यानुलेपनः ।
धृत्वोर्ध्वपुण्ड्रमलिके कृत्वा पौर्वाह्णिकीं क्रियाम् ॥ २ ॥

स्वेष्टदैवं समाराध्य नत्वा मार्ताण्डमद्रिजे ।
सखड्गस्सशिरस्त्राणस्सर्वाभरणभूषितः ॥ ३ ॥

अवलम्ब्य करद्वन्द्वं कराभ्यामाप्तयोश्शनैः ।
गृहान्निर्गत्य भद्रेभमारुह्य स्वकुलागतम् ॥ ४ ॥

आलोकशब्दैर्गम्भीरैर्वेत्रहस्तसमीरितैः ।
जयघोषैः पौरजनमुखपद्मविनिर्गतैः ॥ ५ ॥

रथनेमिस्वनैर्दन्तिबृंहितैरतिभीषणैः ।
अश्वहेषारवैः पत्तिसिंहनादैर्भयङ्करैः ॥ ६ ॥

संक्षोभितदिशाचक्रो मागधैर्मधुरस्वनैः ।
उद्बाहुभिरुदाराङ्गैर्वर्ण्यमानात्मवैभवः ॥ ॥ ७ ॥

भेरीपटहनिस्साणशङ्खकाहलिकादिषु ।
नदत्स्वष्टादशमहावाद्येषु स्वस्य चाग्रतः ॥ ८ ॥

पश्चात्सन्ताड्यमानेषु दुन्दुभिष्वल्पदन्तिषु ।
गजस्कन्धसमारूढैस्सामन्तनृपपुङ्गवैः ॥ ९ ॥

पुरोहितैरतिप्रौढैर्मन्त्रिभिश्च समावृतः ।
तूर्णमागत्य तच्छान्तिमण्टपं सुमनोहरम् ॥ १० ॥

त्रिःप्रदक्षिणमावृत्य पश्चिमद्वारमार्गतः ।
प्रविश्यान्तर्देशिकं तमृत्विजश्चापि पार्थिवः ॥ ११ ॥

त्रिःप्रदक्षिणमावृत्य नत्वा साष्टाङ्गमद्रिजे ।
आसीनः प्राङ्मुखो भूत्वा द्विराचम्य शुभैर्जलैः ॥ १२ ॥

प्राणानायम्य सङ्कीर्त्य देशङ्कालञ्च तत्परम् ।
महापूजोदितैर्मन्त्रैरुपदिष्टैः पुरोधसा ॥ १३ ॥

साम्राज्यलक्ष्मीं सम्पूज्य महापूजोक्तवर्त्मना ।
महानैवेद्यममितं समर्प्य तदनन्तरम् ॥ १४ ॥

ब्रह्मादिवासुदेवानां पूजां कृत्वा यथाविधि ।
प्रणवादिचतुर्थ्यन्तनमोऽन्तैस्स्वस्वनामभिः ॥ १५ ॥

ततो नवग्रहान्स्वस्वमन्त्रैस्तान्त्रिकवैदिकैः ।
सम्पूज्य तेषां विधिवदधिप्रत्यधिदेवताः ॥ १६ ॥

साद्गुण्यदेवताश्चापि पूजयित्वाऽक्षतादिभिः ।
ततश्चेन्द्रादिदिक्पालान्मन्त्रैस्तत्तत्प्रकाशकैः ॥ १७ ॥

बैजकैस्तान्त्रिकैश्चैव सम्पूज्य समनन्तरम् ।
आचार्यानृत्विजश्चैव ब्राह्मणांश्च यथाविधि ॥ १८ ॥

सम्पूज्य गन्धपुष्पाद्यैः कुण्डलैरङ्गुलीयकैः ।
कटकैर्बाहुवलयैरङ्गदैरतिचित्रितैः ॥ १९ ॥

अलङ्कृत्याथ नृपतिर्देशङ्कालञ्च पूर्ववत् ।
सङ्कीर्त्य मम राष्ट्रस्य पुरस्य पुरवासिनः ॥ २० ॥

जनस्य च क्षेमलाभसिद्ध्यर्थं स्थैर्यसिद्धये ।
नानोत्पातसुवारिष्टशान्तये शत्रुभूभुजाम् ॥ २१ ॥

संक्षयार्थञ्च विजयसिद्धये सर्वदा मम ॥
आयुरारोग्यसिद्ध्यर्थमष्टैश्वर्याभिवृद्धये ॥ २२ ॥

साम्राज्यलक्ष्मीप्रीत्यर्थं कारितस्यास्य कर्मणः ।
मया साफल्यसिद्ध्यर्थं कर्माङ्गत्वेन चाधुना ॥ २३ ॥

साम्राज्यलक्ष्मीप्रतिमादानमुक्तविधानतः ।
तथाऽऽवृतीशमूर्तीनां वास्त्वाख्यपुरुषस्य च ॥ २४ ॥

दानन्तदावृतीशानां शिख्यादीनां यथाक्रमम् ।
साधिप्रत्यधिदेवानां ग्रहाणान्दानमेव च ॥ २५ ॥

दिक्पालमूर्तिदानञ्च करिष्येऽहं यथाक्रमम् ।
इति सङ्कल्प्य मन्त्रेण महापूजोदितेन च ॥ २६ ॥

साम्राज्यलक्ष्मीं संप्रार्थ्य दत्वा चोदकपूर्वकम् ।
तदावृतीशप्रतिमाश्चावृतिप्रतिमान्वितम् ॥ २७ ॥

दत्वा च वास्तुपुरुषं ग्रहमूर्तीः प्रदाय च ।
दिक्पालमूर्तिदानञ्च कृत्वा भूमिपुरन्दरः ॥ २८ ॥

तत्तदाचार्यहोतृभ्यः दानसाद्गुण्यसिद्धये ।
ग्रामानश्वान्गजान्मत्तान्स्यन्दनानि बहूनि च ॥ २९ ॥

दासीदासांश्च रत्नानि सुवर्णं रजतन्तथा ।
सुवर्णशृङ्गाभरणं गोसहस्रमपि प्रिये ॥ ॥ ३० ॥

दत्वा तत्तद्दक्षिणार्थन्तत्तन्मन्त्रैः पृथक्पृथक् ।
भोजयित्वा तु मृष्टान्नैस्सहस्रं द्विजसत्तमान् ॥ ३१ ॥

तदाशीरक्षतान्मूर्ध्नि धृत्वा नत्वा द्विजांस्तुतान् ।
नीराजितः पुरन्ध्रीभिर्दीनान्धान्कृपणानपि ॥ ३२ ॥

तोषयित्वाऽन्नपानाद्यैर्वस्त्रैर्निष्कैर्यथोचितम् ।
पुनर्भद्रेभमारुह्य जयघोषपुरस्सरम् ॥ ३३ ॥

वन्दिभिर्नन्द्यमानस्सन्प्रविशेन्निजमन्दिरम् ।
एवं यः कुरुते राजा महाशान्तिमनुत्तमाम् ॥ ३४ ॥

साम्राज्यलक्ष्मीमुद्दिश्य स भवेल्लोकपूजितः ।
रूपवान्धनवांश्छ्रीमान्कान्तिमान्कीर्तिमानपि ॥ ३५ ॥

न शात्रवभयन्तस्य न च क्षुद्रादिजं भयम् ।
नोत्पातजं भयं वापि न तस्करभयन्तथा ॥ ३६ ॥

जलं स्थलति तस्याशु पाथोधिः पल्वलायते ।
विषञ्चामृतति क्षिप्रमेतच्छान्तिप्रभावतः ॥ ३७ ॥

प्रजाश्च पुरराष्ट्रस्था उत्पातभयवर्जिताः ।
पुत्रपौत्रसमायुक्ता नीरोगा निरुपद्रवाः ॥ ३८ ॥

धनधान्ययुता नित्यञ्जीवेयुश्शरदां शतम् ।
इत्येवन्ते समाख्याता महाशान्तिरनुत्तमा ॥

सङ्ग्रहेण वरारोहे किमन्यच्छ्रोतुमिच्छसि　　॥ ३९ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
महाशान्तिप्रयुक्तदानधर्मस्वरूपनिरूपणन्नाम
एकविंशः पटलः ॥

॥ ‡अथ द्वाविंशः पटलः ॥

॥ नानोत्पातदोषहरनानाशान्तिस्वरूपनिरूपणम् ॥

पार्वती—शिव शङ्कर सर्वज्ञ लोकरक्षणतत्पर ।
उत्पातानामशेषाणां सामान्येन त्वयेरिता　　॥ १ ॥

महापूजामहाशान्तिरिदानीन्तु पृथक्पृथक् ।
शान्तिकर्माणि शुश्रूषोर्वद मे वदतां वर　　॥ २ ॥

श्रीशिवः—साधु साधु जगत्पूज्ये यन्मान्त्वं परिपृच्छसि ।
तत्तेऽहं संप्रवक्ष्यामि शृणु वक्ष्यामि सादरम्　॥ ३ ॥

‡निवेदनम्—२२—३० पटलाः मातृकान्तरयोः क्रमेण १०५—११० ७९, ८०, १०१, पटला दृश्यन्ते। तथापि शान्तिकर्मकथनप्रकरण एवशान्तिकर्माणि भवितुमर्हन्तीत्यत, नृपानुष्ठेयनानादेवतोत्सवानां, साम्राज्यलक्ष्मी पूजायाः, नृपानुष्ठेयावश्यक मन्त्रस्वरूपनिरूपणस्य च, इदमेव प्रकरणं न्याय्यमित्यतः, मातृकान्तरापेक्षया प्राक्तनेयं मातृकेत्यतश्च हेतोः २२—३० पटलाः एतदनुसारेणात्रैव मुद्रापिताः—इत्यवधेयम् ॥

सार्वभौमो नरपतिर्मण्डलस्येश्वरोऽपि वा ।
राजा वा राजमात्रो वा प्रजापालनतत्परः ॥ ४ ॥

स्वस्य राष्ट्रस्य रक्षार्थमुपदिष्टानि भूसुरैः ।
कारयेच्छान्तिकर्माणि नानोत्पाताघशान्तये ॥ ५ ॥

ह्रासे प्राप्ते प्रतापस्य तत्प्राप्त्यर्थं महीपतिः ।
ऐन्द्रीन्तु कारयेच्छान्तिं यथाविधि समाहितः ॥ ६ ॥

अतीवाग्निभये प्राप्ते पुरे राष्ट्रेऽपि वा नृपः ।
कारयेच्छान्तिमाग्नेयीन्तन्निवृत्त्यै महीपतिः ॥ ७ ॥

जनमारे समुत्पन्ने ग्रामे ग्रामे पुरे पुरे ।
राजा तस्य निवृत्त्यर्थं याम्यां शान्तिं समाचरेत् ॥ ८ ॥

पिशाचादिग्रहभये प्राप्ते तस्य निवृत्तये ।
कर्तव्या नैर्ऋती शान्ती राज्ञा धैर्यावलम्बिना ॥ ९ ॥

अनावृष्टिभये प्राप्ते तन्निदानाघशान्तये ।
कर्तव्या वारुणीशान्तिर्नृपेण सुखमिच्छता ॥ १० ॥

महावातभये प्राप्ते रजसाऽऽक्रान्तदिङ्मुखम् ।
तद्वारणार्थं कर्तव्या राज्ञा शान्तिस्तु वायवी ॥ ११ ॥

धननाशे समुत्पन्ने कर्तव्या धनवृद्धये ।
कौबेरीविधिना राज्ञा शास्त्रदृष्टेन वर्त्मना ॥ १२ ॥

मशकाखुपतङ्गादिजन्तुवृद्धौ महीक्षिता ।
तत्संक्षयार्थमैशानी कार्या शान्तिरनुत्तमा ॥ १३ ॥

प्रसूतिविकृतौ राष्ट्रे पुरे वा बहुधा प्रिये ।
ब्राह्मी शान्तिस्तु कर्तव्या राज्ञा धर्मानुवर्तिना ॥ १४ ॥

शत्रुभिर्दस्युभिर्वाऽपि पीडितासु प्रजासु वै ।
तद्रक्षणार्थं कर्तव्या राज्ञा शान्तिस्तु वैष्णवी ॥ १५ ॥

यदा यदा दुरात्मानो विडम्बन्ते तदा तदा ।
रौद्री शान्तिस्तु कर्तव्या तत्संहाराय भूभुजा ॥ १६ ॥

यदाऽकस्माद्भयं घोरं जायते बहुधा नृपु ।
तदाऽभयङ्करेन्द्रस्य शान्तिं राजा समाचरेत् ॥ १७ ॥

जलाशयानां विकृतौ सत्यां तद्दोषशान्तये ।
शान्तिरब्देवताप्रीत्यै कर्तव्या पृथिवीक्षिता ॥ १८ ॥

वृक्षगुल्मादिविकृतौ सत्यां तद्विनिवृत्तये ।
कुर्याद्वनस्पतिप्रीत्यै शान्तिकर्म यथाविधि ॥ १९ ॥

प्रासादगोपुरादीनामकस्मात्पतने भृशम् ।
विश्वकर्माणमुद्दिश्य शान्तिः कार्या महीभुजा ॥ २० ॥

जातायां वृष्टिवैकृत्यां पुरे जनपदेऽपि वा ।
शान्तिः पर्जन्यमुद्दिश्य कार्या राज्ञा द्विजोत्तमैः ॥२१॥

वेदनाशो समुत्पन्ने ग्रामे ग्रामे हिमाद्रिजे ।
ब्राह्मीं शक्तिं समुद्दिश्य कार्या शान्तिर्महीभुजा ॥२२॥

युद्धे महति सन्नद्धे सर्वशत्रुक्षयाय वै ।
माहेश्वरीं समुद्दिश्य शान्तिः कार्या विपश्चिता ॥ २३ ॥

बलस्य चतुरङ्गस्य प्राप्ते सति बलक्षये ॥
कौमारीं शक्तिमुद्दिश्य शान्तिः कार्या बलाप्तये ॥२४॥

यदाऽकस्मात्प्रजारक्षणेऽशक्तिर्नृपतेर्भवेत् ।
तदा शक्तिं समुद्दिश्य वैष्णवीं शान्तिमाचरेत् ॥ २५ ॥

दुस्स्वप्नेषु च दृष्टेषु प्रजाभिर्बहुधा प्रिये ।
उद्दिश्य शान्तिं वाराहीं शक्तिं शक्त्या तु कारयेत ॥२६॥

ऐश्वर्यस्य हठाद्धानौ सत्यां राज्ञा विपश्चिता ।
इन्द्राणीं शक्तिमुद्दिश्य शान्तिः कार्या यथाविधि ॥२७॥

परकृत्या मन्त्रयन्त्रतन्त्रादिभय आगते ।
चामुण्डां शक्तिमुद्दिश्य कारयेच्छान्तिमद्रिजे ॥ २८ ॥

आज्ञाभङ्गे समुत्पन्ने जाते भृत्यादिसंक्षये ।
एकनाथां समुद्दिश्य शक्तिं शान्तिं समाचरेत् ॥ २९ ॥

जातायामश्वपीडायां गान्धर्वीं शान्तिमाचरेत् ।
गजरोगेष्वाङ्गिरसीं शान्तिं वै कारयेन्नृपः ॥ ३० ॥

जातायां देवताबिम्बवैकृतौ कारयेन्नृपः ।
उद्दिश्य देवतां तां तां शान्तिकर्म यथाविधि ॥ ३१ ॥

अपस्मारप्रशान्त्यर्थं त्वाष्ट्री शान्तिरुदाहृता ।
महालक्ष्मीस्थैर्यसिद्ध्यै भार्गवी शान्तिरिष्यते ॥ ३२ ॥

इत्येवन्ते समाख्याताः काश्चिदुत्पातशान्तयः ।
संग्रहेण वरारोहे किमन्यच्छ्रोतुमिच्छसि ॥ ३३ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नानोत्पातदोषहरनानाशान्तिस्वरूपनिरूपणन्नाम
द्वाविंशः पटलः ॥

## ॥ अथ त्रयोविंशः पटलः ॥

### ॥ नानोत्पातभयहरनानाशान्तिस्वरूपनिरूपणम् ॥

पार्वती—शिव शर्व त्वयोक्तानां सर्वेषां शान्तिकर्मणाम् ।
विविधानां विधानं मे वदस्व वदतां वर ॥ १ ॥

श्रीशिवः—देवि सम्यक्त्वया प्रश्नः कृतो लोकहितेच्छया ।
प्रश्नानुरूपं वक्ष्यामि शृणूत्तरमगात्मजे ॥ २ ॥

सार्वभौमो नरपतिर्मण्डलस्येश्वरोऽपि वा ।
नानाद्भुतसमुद्भूतनानाघौघनिवृत्तये ॥ ३ ॥

चिकीर्षुश्शान्तिकर्माणि शुभलग्ने शुभे दिने ।
देवालये नदीतीरे गृहे वा कारयेच्छुभम् ॥ ४ ॥

दशहस्तप्रमाणेन मण्डपं चतुरश्रकम् ।
षोडशस्तम्भसंयुक्तं चतुर्द्वारं सुतोरणम् ॥ ५ ॥

दिग्गजाष्टकसंयुक्तं दर्भमालाविराजितम् ।
नारिकेळकटैर्वंशकटैर्वाच्छादितं प्रिये ॥ ६ ॥

उपर्येवं विधायाथ वितानेन समन्ततः ।
अलङ्कृत्य प्रतिद्वारं प्रागादिक्रमतश्शुभाः ॥ ७ ॥

अश्वत्थोदुम्बरप्लक्षवटशाखादिनिर्मिताः ।
द्वारशाखाः प्रविन्यस्य मध्यस्तम्भचतुष्टयम् ॥ ८ ॥

आवृत्य वेदिकां मध्ये कारयित्वा सुशिल्पिना ।
चतुर्हस्तायतां तावद्विस्तृतां चतुरश्रिकाम् ॥ ९ ॥

हस्तोन्नतां समतलां स्निग्धामादर्शबिम्बवत् ।
तस्याः पश्चिमदिग्भागे होमार्थङ्कुण्डमद्रिजे ॥ १० ॥

चतुरश्रं हस्तमात्रं मेखलात्रयशोभितम् ।
अश्वत्थदळसङ्काशद्वादशाङ्गुलयोनिकम् ॥ ११ ॥

कल्पयित्वा मध्यवेद्यां भारमात्रैस्तु शालिभिः ।
चतुरश्रां कल्पयित्वा वेदिं तस्यां तदर्धतः ॥ १२ ॥

तण्डुलैर्वेदिकान्तत्र तदर्धपरिमाणकैः ।
तिलैर्विधाय वेदिन्तु तत्र विन्यस्य नूतनान् ॥ १३ ॥

कलशान्नवसूत्रेण वेष्टितान्तीर्थपूरितान् ।
पञ्चत्वक्पल्लवोपेतान्गव्यरत्नसमन्वितान् ॥ १४ ॥

द्वारपार्श्वद्वयालिन्देष्वपि विन्यस्य नूतनान् ।
पूर्वोक्तलक्षणान्कुम्भान्विधायैवं यथाविधि ॥ १५ ॥

यजमानो देशकालौ सङ्कीर्त्याचार्यमृत्विजः ।
अष्टौ ब्राह्मणमेकञ्च वृत्वा कुशसुमाक्षतैः ॥ १६ ॥

मया चिकीर्षिते शान्तिकर्मण्यस्मिन्यथाविधि ।
पूजाहोमादिकं सर्वं कुरुतेति च तान्पुनः ॥ १७ ॥

नियुज्य प्रापयेद्राजा शान्तिमण्डपमद्रिजे ।
ततो गुरुस्सहर्त्विग्भिर्ब्रह्मणा च सुसंयुतः ॥ १८ ॥

प्राणानायम्य सङ्कीर्त्य देशङ्कालञ्च तत्परम् ।
प्रधानदेवता यस्यां शान्तौ या समुदाहृता ॥ १९ ॥

तस्या मूर्तिं सुवर्णेन निर्मितां शक्तितः प्रिये ।
विन्यस्य मध्यकलशे सम्यगाराधिते पुनः ॥ २० ॥

दिक्कुम्भेषु दिगीशानां सौवर्णीः प्रतिमाश्शुभाः ।
अष्टस्वष्टावर्चितेषु विन्यस्य तदनन्तरम् ॥ २१ ॥

प्रधानदेवतामन्त्रैर्वैदिकैर्वाथ तान्त्रिकैः ।
अलाभे नाममन्त्रैर्वा प्राणस्थापनपूर्वकम् ॥ २२ ॥

सम्पूज्य दिक्पतीनाञ्च पूजाङ्कृत्वा यथाविधि ॥
ततः कुण्डे समावाह्य प्रागेव स्थापितानले ॥ २२ ॥

आवाह्य देवतास्तास्तु शङ्खतोयेन देशिकः ।
उपचारानासनादीन्कृत्वा तत्परमद्विजे ॥ २४ ॥

होमन्निवेद्य स्थाने तु कुर्यादृत्विक्समन्वितः ॥
पालाशैः खादिरैर्वापि बोधिजैर्वा समिद्वरैः ॥ २५ ॥

पायसेन तिलैस्सम्यक्सर्पिषा च यथाविधि ।
प्रतिदैवं प्रतिद्रव्यमष्टोत्तरशताहुतीः ॥ २६ ॥

कृत्वा स्विष्टकृतं हुत्वा होमशेषं समाप्य च ।
पुनश्च देवतापूजाङ्कृत्वा तन्निकटे स्थितः ॥ २७ ॥

तत्तद्दैवत्यसूक्तानि जपेदृत्विक्समान्वितः ।
ततो राजा स्वानुकूले मुहूर्ते समलङ्कृतः ॥ २८ ॥

कृतनित्यक्रियो भद्रङ्गजमारुह्य शोभनम् ।
शङ्खदुन्दुभिनिर्घोषैस्साकं संप्राप्य मण्डपम् ॥ २९ ॥

सङ्कीर्त्य देशङ्कालञ्च पुरोहितमुखोद्गतैः ।
मन्त्रैर्वेदोदितैरागमोक्तैर्वा नाममन्त्रकैः ॥ ३० ॥

संपूज्याचार्यमृत्विग्भिस्सहितं ब्रह्मणाऽपि च ।
अलङ्कृत्याङ्गुलीयाद्यैर्भूषणैः कुसुमादिभिः ॥ ३१ ॥

समभ्यर्च्याभिषिक्तोऽथ तत्पुण्यकलशोदकैः ।
दत्वा ताः प्रतिमावस्त्रकलशैरन्विताः प्रिये ॥ ३२ ॥

दक्षिणां दानसाद्गुण्यसिद्धये स्वस्य शक्तितः ।
कृत्वा गोभूहिरण्यादिद्दानानि च यथाबलम् ॥ ३३ ॥

कांश्चिद्दीनान्धकृपणांस्तर्पयित्वाऽम्बरादिभिः ।
पुनर्भद्रेभमारुह्य जयघोषपुरस्सरम् ॥ ३४ ॥

प्रविश्य स्वगृहं रम्यं सर्वतस्समलङ्कृतम् ।
ब्राह्मणैश्श्रुतसम्पन्नैराशीर्भिरभिवर्धितः ॥ ३५ ॥

नीराजितः पुरन्ध्रीभिर्दीपैः कनकपात्रगैः ।
भोजयित्वा द्विजान्सम्यक्सहस्रं तदनन्तरम् ॥ ३६ ॥

स्वयं पुत्रकळत्राद्यैर्भुञ्जीयात्सहितो नृपः ।
एवं यः कुरुते राजा यदुत्पाताघशान्तये ॥ ३७ ॥

तदुत्पातभवाद्दोषान्मुच्यते नात्र संशयः ।
दीर्घायुष्मानरोगश्च पुत्रपौत्रसमन्वितः ॥ ३८ ॥

अव्याहतप्रतापश्च समानेषु महोन्नतः ।
भवत्येव वरारोहे शान्तिकर्मप्रभावतः ॥ ३९ ॥

यदा जातो य उत्पातस्तदा तद्दोषशान्तये ।
शान्तिकर्माऽप्रमत्तेन राज्ञा कर्तव्यमञ्जसा ॥ ४० ॥

एवमुत्पातशान्तीनां विधानं सम्यगीरितम् ।
संक्षेपात्तव सुश्रोणि किमन्यच्छ्रोतुमिच्छसि ॥ ४१ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां नानोत्पातदोषरहनानाशान्तिस्वरूपनिरूपणन्नाम त्रयोविंशः पटलः ॥



॥ अथ चतुर्विंशः पटलः ॥

॥ नानापशकुनतत्फलस्वरूपनिरूपणम् ॥

पार्वती—शिव शङ्कर सर्वज्ञ सर्वभूतहिते रत ।
विधिरुत्पातशान्तीनान्त्वन्मुखाम्भोजतश्श्रुतः ॥ १ ॥

इदानीं श्रोतुमिच्छामि नानापशकुनोद्भवम् ।
फलन्तेषां स्वरूपञ्च वद मे वदतां वर ॥ २ ॥

श्रीशिवः—साधु पृष्टन्त्वया देवि लोकानुग्रहकांक्षया ।
तेषां स्वरूपं वक्ष्यामि फलञ्चैव शृणुप्रिये ॥ ३ ॥

आरम्भे सर्वकार्याणां शुभानामशुभात्मनाम् ।
क्षुतं वज्रप्रपातेन सममाहुर्महर्षयः ॥ ४ ॥

आसने शयने दाने भोजने वस्त्रसङ्ग्रहे ।
विवाहे च विवादे च क्षुतं सततु शोभनम् ॥ ५ ॥

स्त्रीनिमित्तांश्चिन्तितेऽर्थे पुरुषक्षुतमुत्तमम् ।
पुमर्थांश्चिन्त्यमानेऽर्थे स्त्रीक्षुतं स्याच्छुभावहम् ॥ ६ ॥

आभिमुख्ये क्षुते जाते कार्यसिद्धिर्भवेद्ध्रुवम् ।
पृष्ठदेशे तु सञ्जाते क्षुतेऽनर्थो महान्भवेत् ॥ ७ ॥

पुंसान्तु दक्षिणे भागे द्रव्यलाभकरं क्षुतम् ।
वामभागे मृत्युरोगभयकृत्समुदाहृतम् ॥ ८ ॥

एतदेव विपर्यस्तं स्त्रीणामाहुः फलम्बुधाः ।
शुभे वाऽप्यशुभे वाऽपि दिनमेकम्परित्यजेत ॥ ९ ॥

यत्किञ्चित्कार्यमुद्दिश्य यः कश्चिद्वै स्थलान्तरम् ।
यियासुर्मार्गमध्ये तु व्यालन्देवलकन्तथा ॥ १० ॥

तिलघातकमत्युग्रं शशं वा यदि पश्यति ।
स कार्यफलमप्राप्य मृत्युमाप्नोत्यसंशयः ॥ ११ ॥

यत्किञ्चित्कार्यमुद्दिश्य यः कश्चिन्मनुजो भुवि ।
ग्रामाद्ग्रामान्तरङ्गच्छन्स्थलाद्वाऽपि स्थलान्तरम् ॥ १२ ॥

उषःकाले शृणोत्येकस्वररोदनमद्रिजे ।
स मृत्युवशमाप्नोति षण्मासाभ्यन्तरे ध्रुवम् ॥ १३ ॥

प्रयाणे यस्य कस्यापि मार्गमध्ये बिडालकः ।
तिर्यग्गच्छति चेत्तस्य मृत्युर्मासत्रयान्तरे ॥ १४ ॥

न चेदेवङ्कार्यहानिर्भविष्यति न संशयः ।
प्रयाणकाले काकस्तु दक्षाद्वामं व्रजेद्यदि ॥ १५ ॥

कार्यहानिर्भवत्येव नात्र कार्या विचारणा ।
प्रयाणकाले गरुडो मद्गुश्चूडाविहङ्गमः ॥ १६ ॥

वामाद्दक्षिणमागच्छेत्कार्यहानिर्भवेद्ध्रुवम् ।
यियासोः कार्यसिद्ध्यर्थन्नरस्याभिमुखं यदि ॥ १७ ॥

एको द्विजस्समागच्छेत्तत्कार्यं नैव सिद्ध्यति ।
देवालये राजगृहे सभामध्ये गृहान्तरे ॥ १८ ॥

होमस्थाने जपस्थाने तथाऽध्ययनचत्वरे ।
अपानवायोरुत्सर्गस्तत्तन्नाशकरस्स्मृतः ॥ १९ ॥

ह्रीयन्ते यस्य केशाग्रा हुतभुक्पशुमूषकैः ।
तस्य स्यादायुषो हानिरामयश्च भविष्यति ॥ २० ॥

यस्य देशे पुरे वाऽपि ग्रामे वाऽपि गृहे तथा ।
पांसुवृष्टिर्यदि भवेत्तत्तच्छीघ्रं विनश्यति ॥ २१ ॥

गृध्रस्स्थूलोऽथ वा सूक्ष्मो यमदूतः प्रकीर्तितः ।
दर्शनङ्कथितन्तस्य सर्वकार्यविनाशनम् ॥ २२ ॥

तस्य छाया यदि पतेद्देहे तस्याशुभं भवेत ।
यन्ताडयति पादाभ्याम्मूर्ध्नि तस्य मृतिर्भवेत् ॥ २३ ॥

काकस्पर्शे देहपीडा भवत्यत्र न संशयः ।
भल्ल्याः प्रपतने देवि पतने सरटस्य च ॥ २४ ॥

शुभाङ्गेऽप्यशुभाङ्गे वा सचेलं स्नानमाचरेत ।
शुना दष्टन्नरन्देवि लक्ष्मीश्शीघ्रं विमुञ्चति ॥ २५ ॥

*नरे नरपतौ मृत्युष्षण्मासाभ्यन्तरे भवेत् ।
पादप्रस्खलनाद्वाऽपि भ्रमणाच्छिरसोऽथ वा ॥ २६ ॥

वेगात्स्पन्दनिकादीनां लङ्घनेवाऽवशः पतेत ।
जृम्भन्वाऽवष्टभ्य देहन्नरोपरि नरो यदि ॥ २७ ॥

पतेत्तस्यायुषो हानिरलक्ष्मीस्तं समाविशेत् ।
सभायां राजनिकटे नरोऽकस्मात्पतेद्यदि ॥ २८ ॥

मदमूर्च्छान्वितो वाऽपि रोगेणान्येन वाऽर्दितः ।
भूमौ निपात्य चरणौ चालयन्विकृताननः ॥ २९ ॥

षण्मासाभ्यन्तरे तस्य नृपतेर्मरणम्भवेत् ।
यस्य राज्ञो गृहे देवि प्रासादो मण्डपोऽपि वा ॥ ३० ॥

पतेदकस्मात्तस्य श्रीष्षण्मासात्संक्षयं व्रजेत ।
यस्य गेहे नरा देवि नार्यो वा कारणं विना ॥ ३१ ॥

---

* नरपाते नरे इति प्राक्तनमातृकापाठः ।

आवेशविवशास्तस्य महात्यपद्रवेद्भृशम् ।
यस्यारोहेद्गृहन्देवि कपोतः प्रविशेद्दिवा ॥ ३२ ॥

स्थानहानिर्भवेत्तस्य नात्र कार्या विचारणा ।
दोषकृद्धनिनाङ्गे हे दरिद्राणान्तु सौख्यकृत् ॥ ३३ ॥

*प्रविशेद्यस्य सदनं वृषभः कारणं विना ।
गोवत्सो वाऽथ सर्पो वा शुनकस्सूकरोऽपि वा ॥ ३४ ॥

पारावतो वा देवेशि भयन्तस्य विनिर्दिशेत् ।
सरटो यस्य सदनम्प्रविशेत्कारणं विना ॥ ३५ ॥

दारिद्र्यङ्कलहस्तस्य भवत्येव न संशयः ।
पिङ्गळी कृष्णशकुनिः प्रविशेद्यस्य मन्दिरम् ॥ ३६ ॥

तस्य संव सरादर्वाङ्महारोगः प्रजायते ।
नूतनोद्यानकदली प्रतीचीन्दक्षिणाम्प्रति ॥ ३७ ॥

पूगो वा नारिकेळो वा सूते पुष्पफलं यदा ।
यजमानस्य हानिस्स्यात्त्रिमासाभ्यन्तरे पुनः ॥ ३८ ॥

अभिव्याघ्रादिभूयिष्ठं यस्य वेश्म भवेत्प्रिये ।
तस्य मासत्रयादर्वाग्भवेदापत्परम्परा ॥ ३९ ॥

---

* वृषभ गोवत्सयोः गृहान्तःप्रवेशे दोषश्चिन्त्यः ।

एवम्मयाऽपशकुनस्वरूपं फलमेव च ।
संक्षेपात्ते निगदितङ्किमन्यच्छ्रोतुमिच्छसि　　॥ ४० ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नानाविधापशकुनस्वरूपतत्फलनिरूपणन्नाम
चतुर्विंशः पटलः ॥

॥ अथ पञ्चविंशः पटलः ॥

॥ ननापशकुनदोषहरशान्तिकथनम् ॥

पार्वती—शम्भो शङ्कर सर्वज्ञ विविधोत्पातलक्षणम् ।
तत्फलञ्च श्रुतं सम्यक्तच्छान्तिविधिरुच्यताम्　॥ १ ॥

श्रीशिवः—साधु साधु जगत्पूज्ये यन्मान्त्वं परिपृच्छसि ।
तत्तेऽहं संप्रवक्ष्याणि शृणु कल्याणि सादरम्　॥ २ ॥

नानापशकुनोत्पत्तिर्भवेद्यस्मिन्दिने प्रिये ।
तस्मिन्नेव दिने शान्तिः कार्या तद्दोषशान्तये ॥ ३ ॥

स्वगृहे शुद्धदेशे तु चतुस्तम्भसमन्वितम् ।
वितानचामरादर्शभास्वरं पुष्पमण्डपम्　　॥ ४ ॥

यजमानः कारयित्वा तन्मध्ये वेदिकाम्मृदा ।
कल्पयित्वा बाहुमात्रां वितस्त्युद्देशशालिनीम्　॥ ५ ॥

गोमयेन विलिप्योर्वीं रङ्गवल्लीन्निधाय तु ।
तस्यामाढकमात्रैस्तु राशिङ्कृत्वा तिलैर्नवै ॥ ६ ॥

तस्मिन्प्रसार्य वसनन्नीलं व्यामप्रमाणकम् ।
तस्योपरि न्यसेद्देवीं सौवर्णीं लक्षणान्विताम् ॥ ७ ॥

दिगम्बराम्मुक्तकेशीङ्कालनीरदसन्निभाम् ।
द्विभुजां भस्मदिग्धाङ्गीं भुजङ्गाभरणैर्युताम् ॥ ८ ॥

दक्षिणं बाहुमुद्यम्य धावन्तीम्मण्डलभ्रमम् ।
नानापशकुनोद्भूतदोषसङ्घापनुत्तये ॥ ९ ॥

एवंविधान्तान्देवेशीं भैरवीन्न्यस्य चासने ।
ध्यात्वाऽथ नाममन्त्रेण भैरवीं भयनाशिनीम् ॥ १० ॥

नीलगन्धाक्षतैः पुष्पैरुग्रधूपैस्सदीपकैः ।
नैवेद्यैर्विविधैश्चैव प्रीणयित्वा यथाविधि ॥ ११ ॥

स्तुत्वा स्तुतिभिरर्थ्याभिर्नत्वा तां बहुधाऽद्रिजे ।
ततो ब्राह्मणमाहूय वेदवेदाङ्गपारगम् ॥ १२ ॥

कुटुम्बिनङ्कुलीनञ्च स्वाचारं संयतेन्द्रियम् ।
तेन होमङ्कारयित्वा पृथगष्टोत्तरं शतम् ॥ १३ ॥

पलाशसमिदन्नाज्यैस्ततो होमं समाप्य तु ।
स्वयं पूर्वोक्तविधिना पुनस्संम्पूज्य भैरवीम् ॥ १४ ॥

आचार्यञ्चाङ्गुलीयाद्यैस्सम्यक्संपूज्य भक्तितः ।
महामाये भगवति महाभैरवरूपिणि ॥ १५ ॥

महापश्कुनलस्तम्मां सदा पाहि भैरवि ।
इति मन्त्रेण तान्दत्वा भैरवीप्रतिमां प्रिये ॥ १६ ॥

दानसाद्गुण्यसिद्ध्यर्थं रक्तगन्धाक्षतादिभिः ।
पूजितं यमदैवत्यं पुष्टावयवशोभितम् ॥ १७ ॥

महिषन्दक्षिणान्दद्यात्सतिलं साक्षतोदकम् ।
पदानि तस्य देवेशि द्वारदेशावधि क्रमेत् ॥ १८ ॥

निर्गतो मृत्युरित्येतदुच्चरन्वाक्यमञ्जसा ।
मार्जयित्वा गोमयेन मिश्रितेनाथ वारिणा ॥ १९ ॥

निस्साणन्ध्वनयन्ग्रामाद्बहिस्तन्द्विजमद्विजे ।
विसर्जयित्वा दीनान्धांस्तर्पयित्वा स्वशक्तितः ॥ २० ॥

ततश्शुक्लाम्बरधरश्शुक्लमाल्यानुलेपनः ।
स्वेष्टदेवं हृदि ध्यायन्पौनःपुन्येन मानवः ॥ २१ ॥

ब्राह्मणान्भोजयित्वाऽथ स्वयम्भुञ्जीत वाग्यतः ।
इति नानापशकुनशान्तिङ्कृत्वोक्तमार्गतः ॥ २२ ॥

तदुत्पन्नभयात्सद्यो मुच्यते मनुजः क्षणात् ।
एवन्ते शान्तिराख्याता संक्षेपात्तव भामिनि ॥

दुर्निमित्तसमुद्भूतसर्वदोषनिवारिणी ॥ २३ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकाया
नानापशकुनशान्तिविधानन्नाम
पञ्चविश पटल ॥

---

## अथ षड्विंशः पटल ॥

### ॥ दुस्स्वप्नतत्फलतद्दोषनिवारकदानस्वरूपकथनम् ॥

पार्वती—मन्नाथ देशिक स्वामिन्पञ्चकृत्यपरायण ।
नानापशकुनानान्तु लक्षणं फलमेव च ॥ १ ॥

शान्तिकर्म च देवेश त्वन्मुखाम्भोजतश्श्रुतम् ।
इदानीं श्रोतुमिच्छामि दुस्स्वप्नानान्तु लक्षणम् ॥ २ ॥

फलञ्च फालनयन वद मे वदतां वर ।
श्रीशिवः—साधु साधु वरारोहे यन्मान्त्वं परिपृच्छसि ॥ ३ ॥

तत्तेऽहं संप्रवक्ष्यामि श्रृणुष्व सुसमाहिता ।
दिवा वा यदि वा रात्रौ स्वप्ने पश्यति मानवः ॥ ४ ॥

मुण्डिनङ्खङ्गिनन्नालिन्नालिकक्ष्यान्वितन्नरम् ।
भीषयन्तमतिक्रूरं षण्मासान्मृत्युमाप्नुयात् ॥ ५ ॥

तद्दोषशमनार्थाय कम्बलं प्रतिपादयेत् ।
यस्तु पश्यति निद्रान्ते स्त्रियन्नीलाम्बरावृताम् ॥ ६ ॥

रक्ताम्बरधरां वाऽपि प्रविकीर्णशिरोरुहाम् ।
आस्फोटयन्तीङ्गर्जन्तीं रुदन्तीं वाऽतिभीषणाम् ॥ ७ ॥

आत्माभिमुखमायान्तीं बाहुमुद्यम्य दक्षिणम् ।
तस्य मासत्रयादर्वाङ्महाव्याधिर्भविष्यति ॥ ८ ॥

तद्दोषशमनार्थाय चामुण्डीप्रतिमान्नरः ।
कारयित्वाऽयसीं सम्यक्कृष्णगन्धाक्षतादिभिः ॥ ९ ॥

दत्वा द्विजाय तान्मूर्तिन्तस्माद्दोषात्प्रमुच्यते ।
यस्तु पश्यति निद्रान्ते वराहं वानरङ्खरम् ॥ १० ॥

कृष्णाजाङ्कृष्णमहिषमन्यं वा दंष्ट्रिणम्मृगम् ।
स मृत्युशत्रुरोगैस्तु पीड्यते नात्र संशयः ॥ ११ ॥

तद्दोषपरिहारार्थं वाराहीन्तिलपिष्टतः ।
कल्पयित्वा रक्तगन्धपुष्पैरभ्यर्च्य तान्नरः ॥ १२ ॥

दद्याद्द्विजातये तान्तु तद्दोषस्य प्रशान्तये ।
यस्तु स्वप्ने गजम्मत्तमात्मनोऽभिमुखन्नरः ॥ १३ ॥

अभिद्रवन्तं क्रोधेन पश्येदापद्भिरञ्जसा ।
पीड्यते तस्य दोषस्य शान्तये विघ्ननायकम् ॥ १४ ॥

कारयित्वाऽर्ककाष्ठेन पुष्करादीन्सुवर्णतः ।
अलङ्कत्यार्ककुसुमैरभ्यर्च्य प्रीतमानसः ॥ १५ ॥

तं प्रदाय द्विजेन्द्राय तस्माद्दोषात्प्रमुच्यते ।
यस्तु पश्यति निद्रान्ते परेतमतिभीषणम् ॥ १६ ॥

आत्मीयं वा परम्मर्त्यों नृत्यन्तमतिसम्भ्रमम् ।
हसन्तं वा रुदन्तं वा गर्जन्तं वाऽतिदारुणम् ॥ १७ ॥

सोऽचिरान्मृत्युमाप्नोति व्याधिं वा भयदायकम् ।
तद्दोषशमनार्थाय कौमारीं शक्तिमुज्ज्वलाम् ॥ १८ ॥

शालिपिष्टेम कृत्वाऽथ रक्तेनाच्छाद्य वाससा ।
अलङ्कृत्य च सौवर्णैर्भूषणैस्तां सुमादिभिः ॥ १९ ॥

सम्पूज्य दद्याद्विप्राय तस्य दोषस्य शान्तये ।
यस्तु प्रपश्येन्निद्रान्ते जम्बुकेन वृकेन वा ॥ २० ॥

दष्टं स्वं प्रतिबुद्धयेत सोऽचिरात्पीड्यते गदैः ।
तद्दोषशमनार्थाय तिलपिष्टेन भैरवम् ॥ २१ ॥

कृत्वा सम्पूज्य विप्राय दत्वा दोषात्प्रमुच्यते ।
यस्त्वम्बुधौ ह्रदे वाऽपि नद्यां वाऽगाधपाथसि ॥ २२ ॥

निमज्जितोऽधः पतति स्वप्ने सतु भवेद्द्रुतम् ।
आधिभिर्व्याधिभिश्चैव पीडितोऽनुदिनन्नरः ॥ २३ ॥

तद्दोषपरिहारार्थं वरुणं यादसां पतिम् ।
कल्पयित्वाऽथ रूप्येण श्वेतगन्धाक्षतादिभिः ॥ २४ ॥

सम्पूज्य दत्वा विप्राय तस्माद्दोषात्प्रमुच्यते ।
यस्तु गोमयतोयेषु पङ्के वा पूयगर्तके ॥ २५ ॥

आत्मानं संस्थितं पश्येत्सोऽचिरेण मरिष्यति ।
तस्य दोषस्य शान्त्यर्थं गां सवत्सां सलक्षणाम् ॥ २६ ॥

तिलपिष्टेन निर्माय दत्वा दोषात्प्रमुच्यते ।
यस्तु पश्यति निद्रान्ते खरयुक्तरथे स्थितम् ॥ २७ ॥

आत्मानं शुष्कवृक्षाग्रे शून्यागारेऽथ वा मठे ।
प्रासादे वाऽथ शिथिले गोपुराट्टालकेऽपि वा ॥ २८ ॥

अचिरात्तस्य भवति भयम्मृत्युसमुद्भवम् ।
तद्दोषशमनार्थाय यमम्महिषवाहनम् ॥ २९ ॥

तिलपिष्टेन निर्माय रक्तगन्धाक्षतादिभिः ।
सम्पूज्य दद्याद्विप्राय तस्य शान्तिर्भवेद्ध्रुवम् ॥ ३० ॥

यस्तु पश्यति निद्रान्ते यमदूतैर्भयङ्करैः ।
कृष्यमाणमतिक्रूरैरात्मानन्दक्षिणान्दिशम् ॥ ३१ ॥

सोऽचिरेण भवेद्व्याधिपीडितो नात्र संशयः ।
तद्दोषशान्त्यै पिष्टेन कृत्वा मृत्युं साकिङ्करम् ॥ ३२ ॥

नीलगन्धाक्षतैः पुष्पैरर्चयित्वा द्विजातये ।
दत्वा दक्षिणया सार्धन्तस्माद्दोषात्प्रमुच्यते ॥ ३३ ॥

यस्तु पश्यति निद्रान्ते नृत्यन्तं स्वपुरो भुवि ।
कबन्धङ्घोरमत्यन्तन्तस्य मृत्युर्भवेद्ध्रुवम् ॥ ३४ ॥

तद्दोषशान्त्यै स्वर्णेन कृत्वा मृत्युञ्जयाकृतिम् ।
सम्पूज्य दत्वा विप्राय तस्य शान्तिर्भविष्यति ॥ ३५ ॥

यस्तु पश्यति निद्रान्ते स्वाङ्गस्कन्नं भुजादिकम् ।
तस्याचिरेण पुत्रो वा भार्या वा म्रियते ध्रुवम् ॥ ३६ ॥

तद्दोषशान्तये कृत्वा शूलिनोमतिभीषणाम् ।
स्वर्णेन वाऽथ रूप्येण ताम्रेणाप्ययसाऽथ वा ॥ ३७ ॥

दत्वा द्विजाय शुद्धाय तस्माद्दोषात्प्रमुच्यते ।
यस्तु पश्यति निद्रान्ते विग्रानर्थान्द्विशीर्षकान् ॥ ३८ ॥

त्रिशीर्षाञ्च्छीर्षरहितानपादानभुजान्नरान् ।
विकृतस्वरसम्पन्नान्विकाराकारसंयुतान् ॥ ३९ ॥

स मृत्युरोगभीत्याद्यैर्बाध्यते नात्र संशयः ।
तद्दोषशान्त्यै नृहरिङ्कारयित्वा सुवर्णतः ॥ ४० ॥

सम्पूज्य दत्वा विप्राय तस्माद्दोषात्प्रमुच्यते ।
स्वप्नेषु यो नरः पश्येद्राक्षसानतिभीषणान् ॥ ४१ ॥

पाशमुद्गरशूलासिपाणीन्यक्षांश्च भैरवान् ।
तस्याचिरेण शत्रुभ्यो भयं मृत्योश्च जायते ॥ ४२ ॥

तच्छान्त्यै तिलकल्केन कृत्वा लक्षणसंयुतम् ।
हनूमन्तं पूजयित्वा गन्धाद्यैर्भक्तिभावितः ॥ ४३ ॥

दत्वा द्विजातये तस्माद्दोषान्मुक्तस्सुखी भवेत् ।
य तु पश्यति निद्रान्ते गृध्रान्बलिभुजोऽथवा ॥ ४४ ॥

श्येनान्दिवान्धान्कङ्कान्वा गजाश्वादिकळेबरान् ।
भक्ष्यमाणाञ्छ्वभिः क्रूरैस्सृगालैरतिभीषणैः ॥ ४५ ॥

अचिरेणैव कालेन मृत्युरोगभयादिभिः ।
पीड्यते तस्य दोषस्य शान्त्यर्थं हयशीर्षकम् ॥ ४६ ॥

कृत्वा स्वर्णेन रूप्येण ताम्रेणाप्यथ वा विभुम् ।
सम्पूज्य श्वेतपुष्पाद्यैर्दत्वा विप्राय सादरम् ॥ ४७ ॥

तस्माद्दोषात्प्रमुच्येत नात्र कार्या विचारणा ।
यस्तु पश्यति निद्रान्ते शिलावर्षं स्वमूर्धनि ॥ ४८ ॥

पतन्तमतिवेगेन सोऽचिरान्मृतिमाप्नुयात् ।
तद्दोषशान्त्यै पर्जन्यङ्कारयित्वा सुवर्णतः ॥ ४९ ॥

सम्पूज्य दत्वा विप्राय तस्माद्दोषात्प्रमुच्यते ।
यस्तु पश्यति निद्रान्ते वाहनात्स्वात्परिच्युतम् ॥ ५० ॥

गजादश्वाद्रथाद्वाऽपि पीठादात्मा नमञ्जसा ।
स भवेत्स्वपदाद्भ्रष्टो नष्टश्रीश्च भवेद्ध्रुवम् ॥ ५१ ॥

तद्दोषशान्त्यै स्वर्णेन तिलपिष्टेन वा प्रिये ।
कृत्वाऽऽत्मनः प्रतिकृतिं परिवारसमन्विताम् ॥ ५२ ॥

स वाहनां द्विजेन्द्राय तस्माद्दोषात्प्रमुच्यते ।
यस्तु पश्यति निद्रान्ते महिषानतिदारुणान् ॥ ५३ ॥

सोऽचिरेण महाव्याधिग्रस्तो यमपुरं व्रजेत् ।
तस्य दोषस्य शान्त्यर्थं दद्यान्माहिषमुत्तमम् ॥ ५४ ॥

यस्तु पश्यति निद्रान्ते प्रेतानातिभयङ्करान् ।
छिन्नशीर्षांश्छिन्नबाहूंश्छिन्ननासाशिरोरुहान् ॥ ५५ ॥

नगराद्बहिराकृष्टान्नरकान्यातनान्वितान् ।
किङ्करान्यमदूतान्वा प्रमथान्वा पिनाकिनः ॥ ५६ ॥

पाषाणकण्टकच्चितान् भूभागान्वा रसातलम् ।
रविं वा राहुणा ग्रस्तं चन्द्रं वोपप्लुतन्तथा ॥ ५७ ॥

दिक्चक्रमन्धतामिस्रसङ्कुलन्देवतालयम् ।
देवबिम्बैश्च रहितं श्वसृगालसमाकुलम् ॥ ५८ ॥

तटाकाञ्छोषितान्कूपान्नदीस्सैकतशोषिताः ।
तथा वनानि शुष्काणि शून्यानि नगराणि वा ॥ ५९ ॥

प्रासादान्पतितान्हर्म्यांस्तृणवृक्षलताकुलान् ।
गोपुराणि विभिन्नानि पुरद्वारञ्च मुद्रितम् ॥ ६० ॥

गजाश्वाञ्छृङ्खलांश्छित्वा धावतश्च समन्ततः ।
स्त्रीबालवृद्धान्पतितबालान्वोपेक्ष्य धावतः ॥ ६१ ॥

मण्डपांश्चावसन्नान्वा भित्तिं वा पतितान्तथा ।
तस्य तत्स्वामिनश्चैव राष्ट्रस्य च पुरस्य च ॥ ६२ ॥

भीतिर्भवति सर्वस्य प्राणस्यान्तकरी ध्रुवम् ।
तद्दोषशान्तये दद्यात्तिलपात्राणि भूरिशः ॥ ६३ ॥

स्वलङ्कृतास्तथा गाश्च सुवर्णं वसुधामपि ।
नानाधान्यानि बीजानि वस्त्राणि विविधानि च ॥ ६४ ॥

अभ्यक्तमात्मनो देहं तैलेनापादमस्तकम् ।
रक्ताम्बरधरं वाऽपि रक्तस्रगनुलेपनम् ॥ ६५ ॥

स्त्रिया वाऽऽलिङ्गितं तादृग्रूपया यस्तु पश्यति ।
स मृत्युवशमाप्नोति वर्षादर्वाङ् न संशयः ॥ ६६ ॥

तद्दोषशमनार्थाय शालिपिष्टेन पार्वति ।
अघोरमूर्तिन्निर्माय भूषितां स्वर्णभूषणैः ॥ ६७ ॥

शूलमुद्यम्य हस्तेन क्षिपन्तीम्मृत्युवक्षसि ।
दंष्ट्राकरालवदनां दष्टोष्ठीं भीमविक्रमाम् ॥ ६८ ॥

संपूज्य रक्तपुष्पाद्यैर्नैवेद्यैर्विविधैरपि ।
अघोरेभ्योऽथ घोरेभ्य इति मन्त्रेण मानिनि ॥ ६९ ।

दद्याद्द्विजाय शुद्धाय स्वप्नार्थं हृदि चिन्तयन् ।
स्वप्ने महिषमारूढं खरं वोष्ट्रमजाविकम् ॥ ७० ।

प्रेतं वा भूतवेतालकूश्माण्डादीन्वृकादिकान् ।
आत्मानं यो नरः पश्येत्स मृत्युवशमाप्नुयात् ॥ ७१ ।

तद्दोषशान्तये देवि दद्याद्गोमिथुनन्नरः ।
इत्थन्ते देवि कथितं नानादुस्स्वप्नलक्षणम् ॥
तत्फलन्तत्फलध्वंसि नानादानादिकर्म च ॥ ७२ ।

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
दुस्स्वप्नलक्षणतत्फलतद्दोषनिवारकदानस्वरूपकथनन्नाम
षड्विंशः पटलः ॥

---

अथ सप्तविंशः पटलः ॥

॥ दुस्स्वप्नदोषहरशान्तिस्वरूपकथनम् ॥

पार्वती—स्वामिंश्चिदात्मक श्रीमञ्छ्रीकण्ठ शिव शङ्कर ।
दुस्स्वप्नलक्षणं तज्जं फलं तद्धानिवारकम् ॥ १ ।

दानजालञ्च देवेश त्वन्मुखाम्भोजतश्श्रुतम् ।
इदानीं श्रोतुमिच्छामि जपहोमात्मकम्परम् ॥ २ ॥

शान्तिकर्म ममाचक्ष्व दुस्स्वप्नाघानिबर्हणम् ।
श्रीशिवः—महामाये भगवति लोकरक्षणदक्षया ॥ ३ ॥

त्वया पृष्टं हि यत्कर्म तत्प्रवक्ष्यामि ते शृणु ।
दुस्स्वप्नो येन दृष्टस्स्याद्दिवा वा यदि वा निशि ॥ ४ ॥

तेन तद्दोषशान्त्यर्थं शान्तिः कार्या यथाविधि ।
देवालये नदीतीरे स्वगृहे वा शुचिस्थले ॥ ५ ॥

अष्टहस्तप्रमाणेन मण्डपङ्कूटमेव वा ।
कारयित्वा विधानेन षोडशस्तम्भसंयुतम् ॥ ६ ॥

चतुर्द्वारसमायुक्तं वितानध्वजशोभितम् ।
तोरणैश्चामरादर्शैं रम्भास्तम्भैरलङ्कृतम् ॥ ७ ॥

परितो दर्भमालाभिराच्छादितमगात्मजे ।
उपर्याच्छादितं वंशकटैर्वा नालिकेरजैः ॥ ८ ॥

द्वारालिन्दैश्च संयुक्तं मध्ये वेदिकयाऽन्वितम् ।
वेद्याः पश्चिमदिग्भागे कुण्डमेकं सलक्षणम् ॥ ९ ॥

चतुरश्रं हस्तमात्रं मेखलायोनिसंयुतम् ।
सुशिल्पिना कारयित्वा वेदिकुण्डादिकं प्रिये ॥ १० ॥

एवं होमङ्कारयित्वा मार्जितः कलशोदकैः ।
दद्यात्पुष्पाञ्जलिं ब्रह्मविष्ण्वादिभ्यो यथाक्रमम् ॥ २० ॥

देवि मन्त्रैर्वक्ष्यमाणैः प्रह्वः प्रयतमानसः ।
यस्सृष्टिकर्ता लोकानाम्ब्रह्मा लोकपितामहः ॥ २१ ॥

दुस्स्वप्नजातङ्कलुषन्निवारयतु पद्मभूः ।
यो जगत्पालनपरः परमात्मा सनातनः ॥ २२ ॥

स विष्णुर्हरतु क्षिप्रन्दुस्स्वप्नाघम्ममाखिलम् ।
यस्सर्वसंहृतिकरः प्रलयानिलसन्निभः ॥ २३ ॥

रुद्रस्स हरतु क्षिप्रन्दुस्स्वप्नजनितम्भयम् ।
यो वज्रपाणिर्देवेशो दैत्यदानवमर्दनः ॥ २४ ॥

इन्द्रस्स भगवान्मेऽद्य दुस्स्वप्नाघन्निकृन्ततु ।
यो मुखं सर्वदेवानां हव्यभुक्च्छक्तिधारकः ॥ २५ ॥

सोऽग्निर्दुस्स्वप्नजनिताद्भयान्माम्पातु पावकः ।
यः कर्मसाक्षी जगतान्दण्डहस्तः प्रतापवान् ॥ २६ ॥

स धर्मराजो माम्पातु दुस्स्वप्नदुरितादघात् ।
यो रक्षोनायकस्साक्षान्नैर्ऋतः खड्गधारकः ॥ २७ ॥

दुस्स्वप्नसम्भवन्दोषं स क्रव्यादो व्यपोहतु ।
यः पाशभृत्प्रसन्नात्मा सर्वेषां यादसाम्पतिः ॥ २८ ॥

सोऽव्यान्मां वरुणस्सौम्यो दुस्स्वप्नजनितादघात् ।
यस्तु कृष्णमृगारूढो वायुस्सर्वशरीरगः ॥ २९ ॥

दुस्स्वप्नवृजिनात्सोऽव्याद्ध्वजहस्तस्समीरणः ।
योऽसौ निधिपतिस्साक्षाद्गदाहस्तः पिशङ्गदृक् ॥ ३० ॥

कुबेरस्स तु मान्नित्यं पातु दुस्स्वप्नदुष्कृतात् ।
यो वाऽर्धेन्दुधरो देवः पिनाकी च त्रिशूलभृत् ॥ ३१ ॥

ईशानस्सतु मां पातु पापाद्दुस्स्वप्नसम्भवात् ।
इति पुष्पाञ्जलिन्दत्वा ब्रह्मादिभ्यः पृथक्पृथक् ॥ ३२ ॥

आचार्यादींस्समभ्यर्च्य वस्त्रैराभरणैश्शिवे ।
तेभ्यस्ताः प्रतिमा दद्यात्तत्तन्मन्त्रैः यथाक्रमम् ॥ ३३ ॥

दक्षिणाभिश्च सन्तोष्य दीनान्धांस्तर्पयेत्पुनः ।
आज्यावलोकनङ्कृत्वा ब्राह्मणान्भोजयेत्पुनः ॥ ३४ ॥

अनेन विधिना कृत्वा शान्तिकर्म नरो भुवि ।
दुस्स्वप्नजनिताद्घोराद्भयान्मुक्तो भवेत्प्रिये ॥ ३५ ॥

अपमृत्युभयन्नास्ति नास्ति व्याधिभयन्तथा ।
न शात्रवभयञ्चोरभयञ्चैव न विद्यते ॥ ३६ ॥

सुभगत्वं सुरूपत्वं वाग्मित्वञ्चैव सम्भवेत् ।
देव्येतच्छान्तिकर्तृणां तथ्यमस्य न संशयः ॥ ३७ ॥

एवं दुस्स्वप्नदोषघ्नं शान्तिकर्म समीरितम् ।
संक्षेपात्ते सरोजाक्षि किमन्यच्छ्रोतुमिच्छसि ॥ ३८ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
दुस्वप्नशान्तिस्वरूपकथनं नाम
सप्तविंशः पटलः ॥

---

॥ अथाष्टाविंशः पटलः ॥

नृपकर्तव्यनानादेवतोत्सवस्वरूपकथनम् ॥

पार्वती—भगवन्देवदेवेश वात्सल्यकरुणानिधे ।
दुस्स्वप्नशान्तिर्भवतश्श्रुता सम्यक्पुरा मया ॥ १ ॥

इदानीं श्रोतुमिच्छामि विविधान्देवतोत्सवान् ।
कर्तव्यान्पृथिवीपालैर्वक्तुमर्हसि शङ्कर ॥ २ ॥

श्रीशिवः—साधु साधु जगत्पूज्ये यन्मान्त्वं परिपृच्छसि ।
तत्तेऽहं संप्रवक्ष्यामि शृणु कल्याणि सादरम् ॥ ३ ॥

सार्वभौमो नरपतिर्मण्डलस्येश्वरोऽपि वा ।
देशस्य नगरस्यापि नायको वा महीपतिः ॥ ४ ॥

स्वस्य राष्ट्रे पुरे वाऽपि कदाचिदपि कुत्रचित् ।
क्षामक्षोभासम्भवाय कालवृष्ट्यर्थमद्रिजे ॥ ५ ॥

सर्वसस्यसमृद्ध्यर्थं पुरराष्ट्रनिवासिनाम् ।
जनानां क्षेमलाभार्थं स्वस्य दीर्घायुषे श्रियै ॥ ६ ॥

विजयाय विशेषेण कुलोच्छ्रायस्य सिद्धये ।
साम्राज्यलक्ष्मीस्थैर्यार्थं विष्णोर्मम च तुष्टये ॥ ७ ॥

पुरे जनपदे विद्यमानानाञ्च हरेर्मम ।
मूर्तीनान्तु स्वयंव्यक्तदैवसैद्धार्षभेदतः ॥ ८ ॥

चतुर्विधानां शैवश्रीवैष्णवागमकोविदैः ।
कारयित्वाऽर्चकैर्देवि वर्षे वर्षे रथोत्सवम् ॥ ९ ॥

प्लवोत्सववसन्तादीन्तत्तन्मासोत्सवानपि ।
ततः प्रत्युत्सवं विप्रान्भोजयेत्त्रिसहस्रकम् ॥ १० ॥

एवं मम हरेश्चैव कारयित्वोत्सवान्नृपः ।
तत्परं नगरे राष्ट्रे मारीभयनिवृत्तये ॥ ११ ॥

कारयेदुत्सवम्मातुस्तत्तद्ग्रामेषु पार्थिवः ।
मातुर्वै मन्दिरस्याग्रे सहस्रङ्कलशान्नवान् ॥ १२ ॥

सम्यक्कुलालचुल्लीषु क्रमान्निक्षिप्य पङ्क्तिशः ।
तत्कुम्भेष्वाग्नितप्तेषु क्षीरवृद्धिं महीपतिः ॥ १३ ॥

कारयित्वा ततस्तेषु निक्षिप्य सिततण्डुलान् ।
सगुडम्पाचयित्वान्नम्परमान्नवदद्द्विजे ॥ १४ ॥

ताम्मातरम्पूजयित्वा ततस्तत्पुरतो भुवि ।
निधाय तस्यै तत्सर्वं समर्प्य तदनन्तरम् ॥ १५ ॥

निखाते पुरतस्तस्या घटीयन्त्रनिभाकृतौ ।
यन्त्रे दारुमये चोन्नताग्रभागावलम्बिनि ॥ १६ ॥

अयोमये च वलये दृढलग्नविलग्नया ।
नट्या कयाचिद्रचितनानाऽभिनयलीलया ॥ १७ ॥

ताम्मातरन्तोषयित्वा समारोप्य रथे पुनः ।
नदद्भिश्शङ्खपटहैस्सह ताम्भ्रामयेत्पुरे ॥ १८ ॥

ततस्सुवासिनीर्देवि शतं वस्त्रैश्च भूषणैः ।
अलङ्कृत्यान्नपानाद्यैस्तोषयेत्पृथिवीपतिः ॥ १९ ॥

एवम्मातुः कारयित्वा प्रतिवर्षम्महोत्सवम् ।
पीडाहार्याख्यशक्तेस्तु कारयेत्सम्यगुत्सवम् ॥ २० ॥

एवं राजा कारयित्वा प्रत्यब्दन्देवतोत्सवान् ।
निहत्य समरे शत्रून्विजयम्प्राप्य लीलया ॥ २१ ॥

साम्राज्यलक्ष्मीं सम्प्राप्य पालयेदवनीञ्चिरम् ।
एवन्नृपतिभिस्सम्यक्कर्तव्या देवतोत्सवाः ॥
संक्षेपात्ते निगदिताः किमन्यच्छ्रोतुमिच्छसि ॥ २२ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नानाविधदेवतोत्सवस्वरूपकथनन्नामाष्टाविंशः पटलः ॥



## ॥ अथैकोनत्रिंशः पटलः ॥

### ॥ नृपकर्तव्यसाम्राज्यलक्ष्मीपूजास्वरूपकथनम् ॥

पार्वती–शिव शङ्कर सर्वज्ञ त्वन्मुखाम्भोजतश्श्रुतम् ।
प्रत्यब्दन्नृप कर्तव्यन्देवतोत्सववैभवम् ॥ १ ॥

इदानीं शिव साम्राज्यलक्ष्मीपूजाविधिक्रमम् ।
वक्तुमर्हसि मे देव यद्यस्ति करुणा मयि ॥ २ ॥

श्रीशिवः–साधु देवि त्वया प्रश्नः कृतो लोकहितेच्छया ।
प्रश्नानुरूपं वक्ष्यामि शृणूत्तरमतन्द्रिता ॥ ३ ॥

चक्रवर्ती नरपतिस्सम्राड्वा मण्डलेश्वरः ।
साम्राज्यस्थैर्यसिद्ध्यर्थं सप्ताङ्गानां विवृद्धये ॥ ४ ॥

असमानसमानादिसर्वशत्रुक्षयाय च ।
विजयाय च साम्राज्यलक्ष्मीप्रीत्यर्थमद्रिजे ॥ ५ ॥

साम्राज्यलक्ष्मीं विधिना वक्ष्यमाणेन पूजयेत् ।
*अन्तःपुरेऽवनीपालः पुरतः कोशवेश्मनः ॥ ६ ॥

दारुभिर्वेष्टकाभिर्वा कारयित्वा सुशिल्पिना ।
मन्दिरम्पञ्चभौमेन हर्म्येणोपरि शोभितम् ॥ ७ ॥

---

* स्वगृहस्य पुरोभागे शुद्धान्ते वाऽवनीपतिः । इति पाठान्तरम् ।

अतिस्वच्छपुरोभागस्फुरत्सोपानमण्डपम् ।
सुधासङ्कुट्टिततलश्चित्रकुड्याविराजितम् ॥ ८ ॥

सुदृढद्वारशाखाढ्यं सुकवाटं दृढार्गळम् ।
ईदृग्विधस्य गेहस्य मध्ये हस्तोन्नतां समाम् ॥ ९ ॥

द्विहस्तायामविस्ताराङ्कारयित्वा वलैर्दृढैः ।
वेदिन्तस्यां सुवर्णेन कारयित्वा सुशिल्पिना ॥ १० ॥

साम्राज्यलक्ष्मीप्रतिमां रजतेनाथ वा प्रिये ।
ताम्रेण दन्तिदन्तेन सुधया वाऽतिशोभनाम् ॥ ११ ॥

पद्मासने समासीनाम्पद्मकिञ्जल्कसप्रभाम् ।
वराभये पद्मयुग्मन्दधानाञ्च चतुर्भुजैः ॥ १२ ॥

पुष्टाष्टावयवोपेतां भाषमाणामिवात्मना ।
मन्दस्मितमुखीन्देवीङ्कृपापूरितलोचनाम् ॥ १३ ॥

कर्पूरवीटिकावक्त्राङ्कस्तूरीतिलकाळिकाम् ।
अनर्घरत्नमकुटताटङ्काङ्गदभूषिताम् ॥ १४ ॥

धनलक्ष्म्यादिलक्ष्मीभिरष्टभिः परिसेविताम् ।
सर्वलावण्यवसतिं संस्थाप्याथ यथाविधि ॥ १५ ॥

प्रतिष्ठाङ्कारयित्वाऽथ द्विजैरागमवेदिभिः ।
तैरेव पूजितान्देवीन्त्रिसन्ध्यं विधिपूर्वकम् ॥ १६ ॥

प्रत्यहङ्गन्धपुष्पाद्यैर्धूपदीपनिवेदनैः ।
पार्थिवः प्रणतो भूत्वा प्रातर्मध्यान्दिनेऽपि च ॥ १७ ॥

सायाह्ने च विशेषेण प्रत्यहङ्कुसुमाञ्जलिम् ।
दत्वा नृत्तैश्च गीतैश्च तोषयित्वा विशेषतः ॥ १८ ॥

पूर्वोदिताम्महापूजाम्प्रतिभार्गववासरम् ।
कारयित्वा मासि मासि कुर्यात्पुष्परथोत्सवम् ॥ १९ ॥

तदङ्गत्वेन सुश्रोणि शतं वाऽपि तदर्धकम् ।
सुवासिनीः पूजयित्वा वस्त्रालङ्करणादिभिः ॥ २० ॥

मृष्टान्नेन वरारोहे भोजयेद्भूपुरन्दरः ।
एवं साम्राज्यलक्ष्म्यास्तु कृत्वा पूजां यथाविधि ॥ २१ ॥

अष्टैश्वर्ययुतो राजा साम्राज्यम्प्राप्य लीलया ।
विजित्य समरे शत्रून्पालयेदवनीञ्चिरम् ॥ २२ ॥

एवमेव पुरा कृत्वा मान्धातृप्रमुखा नृपाः ।
पूजां साम्राज्यलक्ष्म्यास्तु सार्वभौमत्वमाप्नुयुः ॥ २३ ॥

तस्मादेवन्निगदितं संक्षेपात्तव भामिनि ।
साम्राज्यलक्ष्मीपूजाया विधानं विधिवन्दिते ॥ २४ ॥

सर्वसौभाग्यजननं सर्वसम्पत्प्रदायकम् ।
प्राज्यसाम्राज्यदं देवि किमन्यच्छ्रोतुमिच्छसि ॥ २५ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नृपकर्तव्यसाम्राज्यलक्ष्मीपूजास्वरूपकथनन्नाम
एकोनत्रिंशः पटलः ॥

---

अथ त्रिंशः पटलः ॥

॥ नृपावश्यकनानामन्त्रस्वरूपकथनम् ॥

पार्वती—विश्वरूप विरूपाक्ष त्वन्मुखाम्भोजतो मया ।
साम्राच्यलक्ष्मीपूजाया विधानं श्रुतमुत्तमम् ॥ १ ॥

इदानीं श्रोतुमिच्छामि धर्मशीलैर्नृपोत्तमैः ।
कैर्मन्त्रैर्वद कर्तव्या जपहोमादिकाः क्रियाः ॥ २ ॥

श्रीशिवः—साधु साधु वरारोहे यन्मां त्वं परिपृच्छसि ।
तत्तोऽहं सम्प्रवक्ष्यामि शृणुष्व सुसमाहिता ॥ ३ ॥

सार्वभौमो नरपतिर्मण्डलस्येश्वरोऽपि वा ।
देशाध्यक्षः कतिपयग्रामाणामधिपोऽपि वा ॥ ४ ॥

सर्वविघ्ननिवृत्त्यर्थं सर्वकार्यार्थसिद्धये ।
गणेशमन्त्रैर्वेदोक्तैस्तान्त्रिकैर्वा यथाविधि ॥ ५ ॥

कारयेज्जपहोमादीन्ब्राह्मणैर्मन्त्रवित्तमैः ।
पुरराष्ट्रात्मरक्षार्थं सर्वसङ्कटशान्तये ॥ ६ ॥

समस्तभयनाशाय विजयाय विशेषतः ।
दुर्गामन्त्रैर्जपं होमं बलिकर्म च कारयेत् ॥ ७ ॥

दीर्घायुषे मदीयेन त्रियम्बकमिति प्रिये ।
मन्त्रेण त्र्यक्षरेणापि तान्त्रिकेण विधानतः ॥ ८ ॥

मृत्युञ्जयाभिधानेन जपं होमञ्च कारयेत् ।
आरोग्यायान्वहं राजा मन्त्रैस्सूर्यप्रकाशकैः ॥ ९ ॥

वैदिकैस्तान्त्रिकैश्चैव जपार्घ्यहवनादिकम् ।
कारयेत्कर्म सुश्रोणि यथाविधि महीपतिः ॥ १० ॥

साम्राज्यलक्ष्मीमन्त्रेण साम्राज्यप्राप्तये जपम् ।
होमञ्च कारयेत्सम्यगन्वहं मण्डलावधि ॥ ११ ॥

श्रीसूक्तेन जपं होममैश्वर्यार्थमगात्मजे ।
कारयित्वा नरपतिरैश्वर्यममितं लभेत् ॥ १२ ॥

दुर्गां वाऽथ भवद्रूपां मां वोपास्य महीपतिः ।
प्राप्नुयान्मण्डलादर्वागष्टैश्वर्याणि लीलया ॥ १३ ॥

पञ्चाक्षरं मदीयन्तु जपित्वा मुच्यतेंऽहसः ।
जपं होमं तर्पणं वा कारयित्वा द्विजन्मभिः ॥ १४ ॥

अष्टाक्षरेण वा विष्णोर्द्वादशाक्षरविद्यया ।
इह भुक्त्वाऽखिलान्भोगानन्ते मुक्तिं व्रजेन्नृपः ॥ १५

नष्टद्रव्यस्य लाभार्थङ्कार्तवीर्यमनुन्द्विजैः ।
विंशत्यर्णं वरारोहे मण्डलावधि जापयेत् ॥ १६ ॥

उपास्य मन्त्रं वाराहं पृथ्वीं पृथ्वीं लभेत्प्रिये ।
रक्षोभयनिवृत्त्यर्थन्नृसिंह्ममनुना जपम् ॥ १७ ॥

होमञ्च कारयेद्देवि मण्डलावधि पार्थिवः ।
सौदर्शनेन मन्त्रेण कारयित्वा जपादिकम् ॥ १८ ॥

रक्षोभूतपिशाचादिभयान्मुच्येत पार्थिवः ।
विद्यार्थी दक्षिणामूर्तिमन्त्वेण मदिरेक्षणे ॥ १९ ॥

सारस्वतेन वा सम्यक्कारयित्वा जपादिकम् ।
गद्यपद्यादिकां विद्यां हृद्यामाप्नोति पार्थिवः ॥ २० ॥

वाहनानां रोगपीडा यदास्यादतिदारुणा ।
तच्छान्त्यर्थन्तदा शास्तृमन्त्रं विप्रैस्तु जापयेत् ॥२१॥

समस्तविषनाशाय गारुडेन वरानने ।
मन्त्रेण जपहोमादीन्कारायेन्मण्डलन्नृपः ॥ २२ ॥

पराभिचारनाशाय भद्रकाळ्या वरानने ।
मन्त्वेण कारयद्धोमञ्जपं वा बलिमन्वहम् ॥ २३ ॥

परविद्वेषणार्थाय नारदस्य मनुञ्जपेत् ।
परवाक्स्तम्भनार्थाय पूजयेद्बगलामुखीम् ॥ २४ ॥

वश्याय श्यामळामन्त्राञ्जापयेद्द्विजपुङ्गवैः ।
क्षेत्रपालमनुं सर्वरक्षार्थञ्जापयेद्द्विजैः ॥ २५ ॥

शरीरबलपुष्ट्यर्थं हनूमन्मनुभिर्नृपः ।
कारयेज्जपहोमादीन्यथाविधि समाहितः ॥ २६ ॥

परमारणमन्विच्छन्नथर्वोक्तैर्हिमाद्रिजे ।
मंत्रैर्याङ्कल्पयन्तीति प्रसिद्धैः कारयेन्नृपः ॥ २७ ॥

जपं होमं बालेश्चैव कीलकञ्च विशेषतः ।
पुत्रार्थङ्कारयद्धोमञ्जपञ्च वरवर्णिनि ॥ २८ ॥

देवि सन्तानगोपालमन्त्रेण तु यथाविधि ।
एवङ्केचन मन्त्रास्ते तत्तत्कर्मानुसारतः ।
राज्ञामावश्यका देवि मया सम्यङ्निरूपिताः ॥ २९ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नृपावश्यक मन्त्रस्वरूप निरूपणन्नाम
त्रिंशः पटलः ॥

---

अथैकत्रिंशः पटलः ॥

॥ अष्टविधदुर्गस्वरूपकथनम् ॥

देव देव विरूपाक्ष सर्वज्ञ शिव शङ्कर ।
नानाविधानां मन्त्राणाञ्जपभेदा मया श्रुताः ॥ १ ॥

इदानीं श्रोतुमिच्छामि दुर्गाणां लक्षणं परम् ।
दुर्गाणि कति भूपानां राज्यरक्षाकराणि वै ॥ २ ॥

किंरूपाणि किमाख्यानि तानि मे कथय प्रभो ।
श्रीशिवः—साधु पृष्टं त्वया देवि लोकानुग्रहकांक्षया ॥ ३ ॥

एतत्तव प्रवक्ष्यामि सावधानमनाश्शृणु ।
नृपाणां सार्वभौमानां राष्ट्रेशानाम्महीभुजाम् ॥ ४ ॥

अन्येषाम्मण्डलेशानान्दुर्गाण्येव बलम्महत् ।
येषाम्पुराणि सुश्रोणि विदुर्गाणि महीभुजाम् ॥ ५ ॥

ताँल्लीलया हि रिपवो घ्नन्ति नास्त्यत्र संशयः ।
तस्माद्दुर्गाणि भूपालैर्निर्मातव्यानि यत्नतः ॥ ६ ॥

तेषान्नामानि वक्ष्यामि स्वरूपमपि तेऽनघे ॥
प्रथमङ्गिरिदुर्गंस्याद्वनदुर्गन्द्वितीयकम् ॥ ७ ॥

तृतीयङ्गह्वरान्तस्थञ्जलदुर्गञ्चतुर्थकम् ।
पञ्चमङ्कर्दमावीतं षष्ठंस्यान्मिश्रनामकम् ॥ ८ ॥

सप्तमन्नरदुर्गंस्यात्कोष्टदुर्गन्तथाष्टमम् ।
कस्मिंश्चिद्रुचिरेदेशे मध्ये वाऽप्यग्रतः स्थिते ॥ ९ ॥

दुरारूढेऽतिविस्तीर्णे भृगुपातसमन्विते ।
उपर्यधश्च सालेन महता परिवेष्टिते ॥ १० ॥

अशोष्यजलदुर्गाढ्ये गरीयसि गिरौ प्रिये ।
विनिर्मितम्पुरं यत्तद्गिरिदुर्गमितीरितम् ॥ ११ ॥

तत्पुनश्चाष्टधाप्रोक्तन्देवि भद्रादिभेदतः ।
भद्रञ्चैवातिभद्रञ्च चन्द्रञ्चैवार्धचन्द्रकम् ॥ १२ ॥

नाभञ्चैव सुनाभञ्च रुचिरं वर्धमानकम् ।
यद्वर्तुलमतिस्निग्धमुन्नतं सर्वतः समम् ॥ १३ ॥

बहुवारिदरीयुक्तमेकोपलमगात्मजे ।
तद्भद्रन्नाम दुर्गं स्यात्तत्कर्ता भद्रमासनम् ॥ १४ ॥

समारुह्य गजैर्भद्रनामकैरन्वितः सदा ।
जित्वा सपत्नसन्दोहं महीं पालयति ध्रुवम् ॥ १५ ॥

यद्दुर्गञ्चतुरश्रं स्यादामूलाग्रमगात्मजे ।
अत्युन्नतं सुविस्तीर्णञ्जलगह्वरसंयुतम् ॥ १६ ॥

तदेतदतिभद्रं स्यात्तदीशो नृपपुङ्गवः ।
सदाष्टैश्वर्यसम्पन्नः पालयेदखिलञ्जगत् ॥ १७ ॥

मूलमारभ्य दण्डाभमन्ते शिरसि चन्द्रवत् ।
विशालं बहुतोयाढ्यमगम्यममरैरपि ॥ १८ ॥

यदेतच्चन्द्रदुर्गं स्यात्तत्कर्ता पृथिवीपतिः ।
चन्द्रवत्सर्वदा शान्तमनाः पालयति प्रजाः ॥ १९ ॥

अर्धचन्द्रसमाकारमामूलाग्रमगात्मजे ।
नात्युन्नतन्नातिह्रस्वञ्जलगह्वरशोभितम् ॥ २० ॥

तदर्धचन्द्रदुर्गं स्यात्तत्कर्ता पृथिवीपतिः ।
अरीन्विजित्य समरे भुवं रक्षति लीलया ॥ २१ ॥

मूले कृशं शिरस्यग्रे विशालङ्क्रमवृध्दितः ।
यत्कञ्जकर्णिकाकारन्तद्दुर्गन्नाभमुच्यते ॥ २२ ॥

तद्दुर्गस्याधिपो राजा पद्मनाभइवानिशम् ।
विजित्य समरे शत्रून्दीर्घायुस्स्यान्न संशयः ॥ २३ ॥

मूले स्थूलं कृशन्त्वग्रे क्रमहान्या हिमाद्रिजे ।
यत्तत्सुनाभमित्युक्तन्तदीशस्सुचिरम्महीम् ॥ २४ ॥

पालयेल्लीलया देवि दुर्गस्यास्य प्रभावतः ।
महीमारभ्य सोपानपङ्क्तिवत्क्रमवृद्धितः ॥ २५ ॥

यदुन्नतं सुतोयाढ्यन्दुर्गन्तद्रुचिरं भवेत् ॥
तन्नायको भवेद्राज्ञां सर्वेषामपि नायकः ।
यद्दुर्गं मद्दळाकारं वर्धमानन्तदुच्यते ॥ २६ ॥

तदीश्वरो व्रजेद्वृद्धिन्धनधान्यैः पदेपदे ।
एवमष्टविधस्योक्तं गिरिदुर्गस्य लक्षणम् ।
संक्षेपात्तव सुश्रोणि किमन्यच्छ्रोतुमिच्छसि ॥ २७ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
अष्टविधदुर्गस्वरूपकथनं नाम
एकत्रिंशः पटलः ॥

---

अथ द्वात्रिंशः पटलः

॥ वर्जनीय गिरिदुर्गाष्टकस्वरूपकथनम् ॥

पार्वती—शिव शंकर सर्वज्ञ लोकनाथ दयानिधे ।
दुर्गाणिवर्जनीयानि यानि तानि वदाद्य मे ॥ १ ॥

श्रीशिवः—अथ दुर्गाणि वक्ष्यन्ते वर्जनीयानि राजभिः ।
तानीह शृणु देवेशि सावधानेन चेतसा ॥ २ ॥

सूचीमुखन्नरनिभं शूर्पाभं शकटाकृति ।
मध्यखण्डञ्चातिवक्रन्दण्डाकारन्तथैव च ॥ ३ ॥

हलाकारञ्च नृपतिर्निवासाय विवर्जयेत् ।
सूचीमुखेन दुर्गेण संग्रामे विमुखो भवेत् ॥ ४ ॥

नराकारेण दुर्गेण धनलोभपरो भवेत् ।
शूर्पाकारेण दुर्गेण शौर्यहीनस्तु जायते ॥ ५ ॥

शकटाभेन दुर्गेण प्रमादो जायते सदा ।
मध्यखण्डेन दुर्गेण सदा व्याधियुतो भवेत् ॥ ६ ॥

अतिवक्रेण दुर्गेण सदैव मरणं भवेत् ।
दण्डाकारेण दुर्गेण नृपो भवति निन्दितः ॥ ७ ॥

हलाकारेण दुर्गेण धनहीनस्सदा भवेत् ।
इत्येवं वर्जनीयस्य गिरिदुर्गाष्टकस्य च ।
स्वरूपञ्च फलं प्राप्यं कथितन्ते तदीश्वरैः ॥ ८ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
वर्जनीयगिरिदुर्गाष्टकस्वरूपनिरूपणन्नाम
द्वात्रिंशः पटलः ॥



## अथ त्रयस्त्रिंशः पटलः ॥

### ॥ वनदुर्गादिदुर्गस्वरूपकथनम् ॥

श्रीशिवः—अथोच्यते मया देवि वनदुर्गस्य लक्षणम् ।
यदेतत्सर्वदुर्गाणामधिकं वरवर्णिनि ।

नानाकण्टकवृक्षौघलतागुल्मादिसङ्कुले ।
गूढमार्गे दुष्प्रवेशे सूर्यांशूनामपि प्रिये ॥ २ ॥

सिह्मव्याघ्रवराहादिदुष्टजन्तुनिषेविते ।
पुलिन्दपुल्कसम्लेच्छशबरादिभयङ्करे ॥ ३ ॥

अगाधजलसम्बाधतटाकान्धुसमन्विते ।
प्रकल्पितं पुरं यद्वै वनदुर्गन्तदुच्यते ॥ ४ ॥

विस्तीर्णे विषमे श्वभ्रे गिरिगह्वरसान्निभे ।
शिलोच्चयैरतिक्षुद्रैः परितः परिवेष्टिते ॥ ५ ॥

अन्तिकस्थैरपि जनैरविज्ञातायतान्विते ।
तृणकाष्ठजलैर्युक्तं पुरं यदुपकल्पितम् ॥ ६ ॥

तत्तु गह्वरंदुर्गं स्यादसाध्यममरैरपि ।
नदीनान्देवखातानामशोष्याणाञ्जलान्तरे ॥ ७ ॥

महतां वा तटाकानामगाधजलमध्यमे ।
द्वीपीकृतम्पुरं यत्तज्जलदुर्गमितीरितम् (११) ॥ ८ ॥

महीतलविनिर्यद्भिर्दुष्प्रवेशे जलोष्मभिः ।
प्रच्छन्नघनसुस्निग्धमृदुकर्दमसंवृते ॥ ९ ॥

यस्मिन्कस्मिन्महीभागे मध्यमेऽत्युन्नतस्थले ।
कल्पितन्नगरं यत्तत्पङ्कदुर्गमुदाहृतम्म ॥ १० ॥

गिरिणा बिपिनेनापि संयुतञ्जलसंवृतम् ।
परितः पङ्कभूम्या च सहितं यत्पुरं शिवे ॥ ११ ॥

तन्मिश्रनामकन्दुर्गमसाध्यन्देवदानवैः ।
खड्गतोमरकुन्तासिबाणकार्मुकधारिभिः　　॥ १२ ॥

भटैरसंख्यैर्वीराधिवीरैरनिशमुद्धतैः ।
परितो वलयाकाररचितागारवर्तिभिः　　॥ १३ ॥

रक्षितं यत्पुरवरन्तन्नृदुर्गमितीरितम् ।
सालेन महता युक्तं खेयेन महता वृतम्　　॥ १४ ॥

नानावस्तुसमोपेतन्तृणेन्धनजलान्वितम् ।
शतघ्नीशतसंयुक्तं वीरैः कतिपयैर्युतम्　　॥ १५ ॥

यत्पुरन्तत्पृथुश्रोणि कोष्ठदुर्गमितीरितम् ।
इत्येवं वनदुर्गादि दुर्गाणां लक्षणम्मया ॥
कथितन्तव देवेशि किमन्यच्छ्रोतुमिच्छसि　　॥ १६ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
वनदुर्गाद्यष्टविधदुर्गस्वरूपकथनन्नाम
त्रयस्त्रिंशः पटलः ॥

---

॥ अथ चतुस्त्रिंशः पटलः ॥

॥ अष्टविधकोष्ठदुर्गस्वरूपकथनम् ॥

पार्वती—शिव सर्वज्ञ भगवन्पञ्चकृत्यपरायण ।
कोष्ठदुर्गमिति प्रोक्तमष्टमं यत्त्वयाऽधुना　　॥ १ ॥

तस्य स्वरूपम्मे ब्रूहि विस्तरेण वृषध्वज ॥
श्रीशिवः—साधु साधु वरारोहे यन्मान्त्वं परिपृच्छसि ॥ २ ॥

तत्तेऽहं संप्रवक्ष्यामि सावधानमनाः शृणु ।
कोष्ठन्नामोच्यते सालः कोष्ठदुर्गन्तदन्वितम् ॥ ३ ॥

तदेव नृपवर्याणां प्रशस्तं बलमीरितम् ।
कोष्ठमष्टविधं प्रोक्तं शिल्पशास्त्रविशारदैः ॥ ४ ॥

वेदाश्रं दीर्घवेदाश्रं वर्तुलं दीर्घवर्तुलम् ।
पञ्चकोणञ्च षट्कोणमष्टाश्रं पद्मसन्निभम् ॥ ५ ॥

एषामन्यतमं कोष्ठं कारयित्वा सुशिल्पिभिः ।
आवासं कल्पयेद्राजा सप्ताङ्गबलवृद्धये ॥ ६ ॥

शुभेऽह्नि शुभनक्षत्रे स्थिरलग्ने गणाधिपम् ।
सम्पूज्य विश्वकर्माणन्तोषयित्वा च शिल्पिनः ॥ ७ ॥

अत्युन्नते महीभागे निम्नोन्नतविवर्जिते ।
क्षिप्रोपभोगया पृथ्व्या पृथ्व्या समुपवेष्टिते ॥ ८ ॥

शिलाभिरिष्टकाभिर्वा मृदा मर्दितयाऽपि वा ।
कारयेन्नृपतिस्सालं वक्ष्यमाणप्रमाणतः ॥ ९ ॥

सितसिद्धार्थकैष्षड्भिर्यवमध्यमितीरितम् ।
यवमध्यानि तान्यष्टावङ्गुलङ्कथितं बुधैः ॥ १० ॥

चतुर्विंशाङ्गुलो हस्तश्चतुर्हस्तमितन्धनुः ।
धनुश्चतुष्टयन्दण्डस्तदष्टशतमानतः ॥ ११ ॥

उत्तमः कथितस्सालः षट्छतेन तु मध्यमः ।
चतुश्शतेनाधमस्स्यादित्येवन्त्रिविधस्स्मृतः ॥ १२ ॥

सालानुरूपतो भूमिं खनित्वाऽथ यथोचितम् ।
वालुकाभिरधिष्ठानशुद्धिं कृत्वा यथाविधि ॥ १३ ॥

दशहस्तोन्नतां भित्तिन्त्रिहस्तायामशालिनीम् ।
दलयुक्तान्तत्र तत्र कारयित्वा शिलादिभिः ॥ १४ ॥

दृढीकृतायां सुधया तस्याम्भित्तौ समन्ततः ।
युयुत्सुयोधगुप्त्यर्थं सालशोभार्थमेव च ॥ १५ ॥

न्यग्रोधाधदलाभानि मध्ये छिद्रयुतानि च ।
शृङ्गाणि कल्पयित्वाऽथ पङ्क्तिशश्च समन्ततः ॥१६॥

नाभिमात्रे ततस्सालवलये पङ्क्तिशः क्रमात् ।
शिलासु भैरवं यन्त्रन्नागयन्त्रञ्च दारुणम् ॥ १७ ॥

*त्रिशूलं रज्जुयन्त्रञ्च काष्ठयन्त्रञ्च मौसलम् ।
विषकण्टकयन्त्रञ्च शुक्लं शूलमुखन्तथा ॥ १८ ॥

धनुर्यन्त्रादियन्त्राणि व्यत्यस्तामिति यन्त्रकम् ।
यक्षाकिन्नरगन्धर्वद्वन्द्वानि विविधानि च ॥ १९ ॥

कारयेच्छिल्पिभिस्सालशोभार्थन्नृपकुञ्जरः ।
ततस्सालस्यान्तरतो दशहस्तप्रमाणतः ॥ २० ॥

परितः कल्पयेद्वप्रवेदिं सोपानसंयुताम् ।
शिलाभिरिष्टकाभिर्वा स्वच्छामादर्शबिम्बवत् ॥ २१ ॥

एवं सालङ्कल्पयित्वा कल्पयेत्तदनन्तरम् ।
उपसालन्तु परितस्सर्वलक्षणलक्षितम् ॥ २२ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
अष्टविधसालस्वरूपकथनन्नाम
चतुस्त्रिंशः पटलः ॥

---

* त्रिशूलयन्त्रं रज्वाख्ययन्त्रं कोष्ठमयन्तथा ।
मौसलञ्च धनुर्यन्त्रं व्यत्यस्तमितियन्त्रकम् ॥
यक्षाकिन्नरगन्धर्वद्वन्द्वानि विविधानि च ।
त्रिलोककाश्चर्यकरं सालशोभार्थमद्रिजे ॥
कारयेच्छिल्पिभिः सम्यक्परितः पृथिवीपतिः ।
इति पाठान्तरम् ॥

## अथ पञ्चत्रिंशः पटलः ॥

### उपसाललक्षणम् ॥

पार्वती—शिव सर्वज्ञ भगवँल्लोकरक्षणतत्पर ।
स्वरूपमुपसालस्य वद मेऽद्य दयानिधे ॥ १ ॥

श्रीशिवः—शृणु देव्युपसालस्य वक्ष्यामि तव सादरम् ।
लक्षणं शिल्पशास्त्रोक्तमार्गेण शुभलक्षणे ॥ २ ॥

पूर्वोक्तसालात्परितो बहिर्देशे समन्ततः ।
विंशद्धस्तमितां भूमिन्त्यक्त्वा पूर्ववदेव हि ॥ ३ ॥

अष्टहस्तायतं शृङ्गपङ्क्त्या वप्रेण शोभितम् ।
उपसालङ्कल्पयित्वा बह्वट्टालसमन्वितम् ॥ ४ ॥

ततस्तस्योपसालस्य परितः पद्मलोचने ।
हस्तत्रयमितां भूमिन्त्यक्त्वाऽथ कटिसूत्रवत् ॥ ५ ॥

तद्बहिर्विंशतिकरनिम्नान्तावत्करायताम् ।
परिघाङ्कारयित्वाऽथ बन्धयेत्तत्तटद्वयम् ॥ ६ ॥

शिलाभिरिष्टकाभिर्वा तस्य दार्ढ्यत्वसिद्धये ।
एवं सालं विनिर्माय दिक्षु द्वाराणि कारयेत् ॥ ७ ॥

केचित्सालत्रयङ्केयत्रयमिच्छन्ति भूमिपाः ।
अत्यसाध्यत्वसिद्ध्यर्थमेतद्दुर्गस्य भामिनि ॥ ८ ॥

इत्येवमुपसालस्य स्वरूपङ्कथितम्मया ।
सङ्ग्रहेण तवापर्णे किमन्यच्छ्रोतुमिच्छसि ॥ ९ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकाया-
मुपसालस्वरूपनिरूपणन्नाम
पञ्चत्रिंशः पटलः ॥

---

॥ अथ षट्त्रिंशः पटलः ॥

॥ सालद्वारनिर्माणस्वरूपकथनम् ॥

पार्वती—मन्नाथ देशिक स्वामिन् सालस्याष्टविधस्य तु ।
श्रुतं स्वरूपन्देवेश द्वाराणां लक्षणं वद ॥ १ ॥

श्रीशिवः—द्वाराणां लक्षणं वक्ष्ये तव प्रश्नानुरूपतः ।
किष्कुत्रयायतन्द्वारं षट्किष्कून्नतमुत्तमम् ॥ २ ॥

पञ्चहस्तोन्नतं सार्धहस्तद्वितयविस्तृतम् ।
द्वारम्मध्यममाख्यातं शिल्पशास्त्रविशारदैः ॥ ३ ॥

चतुर्हस्तोन्नतं द्वारन्द्विहस्तायतमाद्रिजे ।
ऋजुद्वाराशिलोपेतमधमम्परिकीर्तितम् ॥ ४ ॥

पुंशिलाकल्पितं श्रेष्ठम्मध्यमं स्त्रीशिलाकृतम् ।
अधमङ्कथ्यते द्वारन्नपुंसकशिलाकृतम् ॥ ५ ॥

घण्टास्वना पुंशिला स्यात्स्त्री स्यात्तन्त्रीस्वना शिला ।
नपुंसकशिला भिन्नकांस्यस्वनसमस्वना ॥ ६ ॥

प्रतिद्वारङ्कल्पनीयम्मुखभद्रं सुशोभनम् ।
ऊर्ध्वभागोल्लसद्यक्षराक्षसप्रतिमाऽन्वितम् ॥ ७ ॥

उह्यमानमिवात्यन्तं सिंहैरतिभयङ्करैः ।
द्वारमेवङ्कल्पयित्वा तदुपर्यथ कारयेत् ॥ ८ ॥

पञ्चभौमान्त्रिभौमं वा सौधमत्यन्तशोभनम् ।
प्रतिद्वारं बाह्यदेशे चतुरश्रं समन्ततः ॥ ९ ॥

कल्पयित्वा व्याघ्रमुखं सालोन्नतिसमोन्नतम् ।
सव्यापसव्यकोष्ठाभ्यामृजुकोष्ठेन संयुतम् ॥ १० ॥

प्रतिकोष्ठन्द्वारयुतमन्तिमद्वारमूर्धनि ।
त्रिभौमायतवेदाश्रसौधसङ्काशगोपुरम् ॥ ११ ॥

योधानान्द्वारपालानां सदावासार्थमद्रिजे ।
परितोन्तरतः कुड्यसंश्लिष्टेनातिचारुणा ॥ १२ ॥

एकपङ्क्तिस्तंभशोभि मण्डपेन मनोहरम् ।
एवं व्याघ्रमुखङ्कृत्वा तत्पूर्वापरकुड्ययोः ॥ १३ ॥

संयोजयेत्प्रान्तयुगमुपसालस्य भामिनि ।
पूर्वद्वारन्दक्षिणास्यन्दक्षिणं पश्चिमास्यकम् ॥ १४ ॥

पश्चिमन्तूत्तरमुखमुत्तरं प्राङ्मुखं भवेत् ।
एवं द्वाराणि निर्माय व्याघ्राननयुतानि वै ॥ १५ ॥

प्राग्द्वारे स्थापयेद्विघ्नराजं दक्षिणनामके ।
द्वारे संस्थापयेद्देवि भैरवं पश्चिमे पुनः ॥ १६ ॥

भद्रकाळीं प्रतिष्ठाप्य हनूमन्तं तथोत्तरे ।
संस्थाप्यैवं ततो राजा विदिक्षु चतसृष्वपि ॥ १७ ॥

क्षुद्रद्वाराणि चत्वारि व्याघ्रवक्त्रविवर्जितम् ।
कारयित्वा प्रतिद्वारङ्कवाटयुगळन्न्यसेत् ॥ १८ ॥

दृढार्गळसमोपेतञ्छन्नमायसपट्टसैः ।
अरिमत्तेभरदनविदारणविचक्षणैः ॥ १९ ॥

अयश्शङ्कुभिराकीर्णङ्कदळीपुष्पसन्निभैः ।
तत्परं खेयतरणयोग्यान्दारुविनिर्मितान् ॥ २० ॥

सङ्क्रमान् फलकाकारान् सेतून्वा कारयेदृजून् ।
शिलाभिरिष्टकाभिर्वा तत्तद्द्वाराभिमुख्यतः ॥ २१ ॥

एवं द्वाराणि निर्माय वप्रेऽगाराणि कारयेत् ।
इत्येवं द्वारनिर्माणप्रकारः कथितस्तव ॥
सङ्ग्रहेण सरोजाक्षि किमन्यच्छ्रोतुमिच्छसि ॥ २२ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
सालद्वारनिर्माणस्वरूपकथनन्नाम
षट्त्रिंशः पटलः ॥

अथ सप्तत्रिंशः पटलः ॥

सालवप्रनिर्मातव्यगृहाष्टकस्वरूपकथनम् ॥

पार्वती—शिव शङ्कर तत्सालवप्रे गेहानि कानिचित् ।
कर्तव्यानि किमर्थं वा किमाख्यानि वदाद्य मे ॥ १ ॥

श्रीशिवः—साधु पृष्टं त्वया देवि लोकरक्षणदक्षया ।
यदहं तत्प्रवक्ष्यामि सावधानमनाः शृणु ॥ २ ॥

ततस्तत्सालवलयवप्रे दिक्षु विदिक्षु च ।
युद्धादिसमये स्वस्य वासार्थङ्कल्पयेन्नृपः ॥ ३ ॥

भद्रञ्च सर्वतो भद्रन्नन्द्यावर्तञ्जयन्तकम् ।
वर्धमानं स्वस्तिकञ्च पिच्छन्दङ्कोष्ठमन्दिरम् ॥ ४ ॥

ततस्संस्थापयेद्वप्रे शतघ्नीश्च पदे पदे ।
भीमरूपाम्महादुर्गाम्भैरवञ्च भयङ्करम् ॥ ५ ॥

कालमृत्युम्महारौद्रङ्कालपाशधरं यमम् ।
अघोरमुग्रवदनं भेतालमतिभीषणम् ॥ ६ ॥

वीरभद्रम्महाभीमं कालरात्रिं भयानकाम् ।
ध्वजेष्वष्टसु संल्लिख्य वप्रे दिक्ष्वष्टसु न्यसेत् ॥ ७ ॥

ततो दुर्गाधिपान्देवीन्दुर्गस्याभ्यन्तरे नृपः ।
स्थापयित्वा चण्डिकाञ्च विघ्नेशं क्षेत्रपालकम् ॥ ८ ॥

शास्तारञ्च महालक्ष्मीं केशवं भास्करन्तथा ।
त्वष्टारञ्चैव वाग्देवीं दुर्गसंरक्षणाय वै ॥ ९ ॥

तेषाञ्च कारयेत्पूजां प्रत्यहं पुरवृद्धये ।
एवं वप्रे विनिर्माय कानिचिन्मन्दिराणि वै ॥
वस्तूनि कानिचित्सालरक्षार्थं संग्रहेन्नृपः ॥ १० ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
सालवप्रनिर्मातव्यगृहाष्टकस्वरूपकथनन्नाम
सप्तत्रिंशः पटलः ॥

---

## ॥ अथ अष्टत्रिंशः पटलः ॥

### ॥ सालसंस्थापनीयवस्तुस्वरूपकथनम् ॥

पार्वती—देवदेव महादेव सालगुप्त्यै नृपोत्तमैः ।
वस्तूनि कानि सङ्ग्राह्याण्याख्याहि वृषभध्वज ॥ १ ॥

श्रीशिवः—साधु साधु त्वया देवि यत्पृष्टञ्चारुभाषिणि ।
तत्तेऽहं सम्प्रवक्ष्यामि शृणु कल्याणि सादरम् ॥ २ ॥

ततो वस्तूनि सङ्गृह्य दुर्गसंरक्षणाय वै ।
तानि संस्थापयेद्धीमांस्तत्तत्स्थानेषु पार्थिवः ॥ ३ ॥

धनुर्दशसहस्राणि चतुर्द्वारेषु विन्यसेत् ।
अर्धचन्द्रान्क्षुरप्रांश्च करीराङ्कुरसन्निभान् ॥ ४ ॥

शरान्नानाविधाकारान्दशसाहस्रसंख्यया ।
पृथक्पृथक्सङ्गृहीतानन्तरे चान्तरे न्यसेत् ॥ ५ ॥

कुन्तान्खड्गान्भिण्डिपालांच्छक्तीश्चक्राणि मुद्गरान् ।
मुसलांश्चैव पाषाणानट्टालेषु प्रविन्यसेत् ॥ ६ ॥

घृतन्तैलं *सुरां क्षौद्रं लवणम्मरिचादिकम् ।
द्रव्याणि जीरकादीनि वचामाम्लञ्च सीसकम् ॥ ७ ॥

---

*सुधां इति पाठान्तरम् ॥

कारयित्वाऽथ पूर्वोक्तराजवीथ्या बहिः पुनः ।
वलयाकारतो देवि कल्पयेद्वीथिकाद्वयम् ॥ ९ ॥

सामन्तराजपुत्राणाममात्यानाम्पुरोधसाम् ।
दैवज्ञानान्तथा कालसूचकानाञ्च वन्दिनाम् ॥ १० ॥

धनुर्धराणां शूराणां रथिकानां विशेषतः ।
आधोरणानान्तुरगसादिनां शिल्पिनामपि ॥ ११ ॥

नटानान्नर्तकानाञ्च वारमुख्यजनस्य च ।
कारूणाञ्चर्मकाराणां वैणिकानां विशेषतः ॥ १२ ॥

तथा वैणविकानाञ्च पाणिघानामनन्तरम् ।
मार्दङ्गिकानाम्मुख्यानाङ्कारयित्वा यथोचितम् ॥ १३ ॥

मन्दिराणि विचित्राणि तत्परन्तत्र तत्र तु ।
धान्यकोष्ठान्युन्नतानि कल्पयित्वा ततस्ततः ॥ १४ ॥

देवालयांश्च कतिचिच्चत्वराणि च कानिचित् ।
कारयित्वा तथा वापीः दीर्घिकाः कल्पयेदथ ॥ १५ ॥

तटाकानि च रम्याणि सुस्वादुजलवन्ति च ।
एवन्निर्माय वप्राधो यामिकानाङ्गृहानपि ॥ १६ ॥

ततस्सालस्य परितो बहिर्देशे महीपतिः ।
ब्राह्मणक्षत्रियविशां शूद्राणामन्त्यवासिनाम् ॥ १७ ॥

शिबिराणि पृथक्तेषाङ्कारयित्वा यथोचितम् ।
अश्वशालाश्च कतिचित् गजकूटानि कानिचित् ॥ १८ ॥

आरक्षणञ्चतुर्दिक्षु निक्षिप्य समनन्तरम् ।
शुभे मुहूर्ते सुश्रोणि कारयेत्स्वस्य मन्दिरम् ॥ १९ ॥

इत्येवम्पुरनिर्माणस्वरूपं कथितम्मया ।
सङ्ग्रहेण सरोजाक्षि किमन्यच्छ्रोतुमिच्छसि ॥ २० ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
पुरनिर्माणस्वरूपकथनन्नाम
एकोनचत्वारिंशः पटलः ॥

---

अथ चत्वारिंशः पटलः ॥

राजाऽऽस्थानमण्टपादिनिर्माणस्वरूपनिरूपणम् ॥

पार्वती—शिव सर्वज्ञ भगवन्सर्वलोकहिते रत ।
निर्मातव्यङ्कथं राजमन्दिरं वद मे प्रभो ॥ १ ॥

श्रीशिवः—शृणु कल्याणि वक्ष्यामि राजमन्दिरलक्षणम् ।
तन्निर्माणविधिञ्चापि सावधानेन चेतसा ॥ २ ॥

सालस्य मध्यमे देशे क्लृप्ताम्भूमिङ्गृहस्य तु ।
शोधयित्वा हलमुखैर्लोष्ठास्थिशकलादिकान् ॥ ३ ॥

दूरे विसर्जयित्वा तु भित्तिं प्राकाररूपिणीम् ।
किष्कुद्वयपरीणाहामष्टकिष्कुसमुन्नताम् ॥ ४ ॥

किष्कुद्वितयमानेन भूमेरन्तः प्रवेशिताम् ।
शिलाभिरिष्टकाभिर्वा मृदा मर्दितयाऽथ वा ॥ ५ ॥

कल्पयित्वा तदुपरि शङ्कूंस्तीक्ष्णमुखान्नवान् ।
अयोमयान्दारवान्वा सन्दष्टांस्तु परस्परम् ॥ ६ ॥

खातयित्वा तु परितो दुर्लङ्घ्यङ्खेचरैरपि ।
विधाय पूर्वभागे वा ह्युदग्भागेऽथ वा सुधीः ॥ ७ ॥

सर्वलक्षणसम्पन्नङ्कारयेद्द्वारमुन्नतम् ।
हस्त्यश्वरथसञ्चारयोग्यञ्चित्रविचित्रितम् ॥ ८ ॥

सुदृढद्वारशाखाढ्यङ्कवाटयुगशोभितम् ।
ऊर्ध्वभागेऽधिष्ठितया गजलक्ष्म्या विराजितम् ॥ ९ ॥

विधायैवङ्गृहद्वारङ्कल्पयेत्तत्पुरो भुवि ।
आस्थानमण्टपं रम्यं सारदारुमयं पुनः ॥ १० ॥

किष्क्वष्टकसुविस्तीर्णं षट्त्रिंशद्भिस्तथाऽऽयतम् ।
पार्श्वालिन्दद्वयोपेतं वलभ्या च विराजितम् ॥ ११ ॥

सोपानपङ्क्त्या पुरतश्शोभिताञ्चित्रकुड्यकम् ।
पार्श्वद्वयलसत्क्षुद्रहर्म्यमत्युन्नतं शिवे ॥ १२ ॥

नवभिस्स्वर्णशिखरैस्सर्वतस्समलङ्कृतम् ।
तिर्य्यङ्कणन्दृढस्तम्भं सुबोधिमृदुपट्टिकम्　॥ १३ ॥

सुधासङ्घट्टिततलङ्कृत्वैवं लक्षणान्वितम् ।
तत्पार्ष्णिभागे प्रथमाङ्कक्ष्याङ्कुर्याद्विधानतः　॥ १४ ॥

चतुरश्रां चतुःपार्श्वकल्पिताच्छिन्नमण्टपाम् ।
शुभालिन्देन महता वलभ्या च समन्ततः　॥ १५ ॥

एकपङ्क्तिस्तम्भसङ्घां परितः कुड्यसंवृताम् ।
राजवाह्यगजावासयोग्यामादर्शनिर्मलाम्　॥ १६ ॥

तत्परङ्कल्पयेत्कक्ष्यान्द्वितीयां सुमनोहराम् ।
दृढद्वारकवाटाढ्यामावृत्याकारशालया　॥ १७ ॥

सुस्तम्भालिन्दवलभिरम्यया परितोऽन्विताम् ।
राजवाह्याश्ववसतियोग्यां सङ्घट्टितस्थलाम्　॥ १८ ॥

तत्परङ्कल्पयेत्कक्ष्यान्तृतीयां पूर्ववद्दृढाम् ।
रथयानादिविन्यासयोग्यां लक्षणलक्षिताम्　॥ १९ ॥

तत्परङ्कल्पयेत्कक्ष्यान्तुरीयां पूर्ववत्सुधीः ।
गणकानान्निवासार्थं वारमुख्यजनस्य च　॥ २० ॥

तत्परङ्कारयेत्कक्ष्यां पञ्चमीमतिशोभनाम् ।
कवीनान्नायकानाञ्च विबुधानां विशेषतः　॥ २१ ॥

तथा वैणिकमुख्यानाम्मन्त्रिणाञ्च पुरोधसाम् ।
निवासयोग्यां वाप्या च संयुतामुन्नतस्थलाम् ॥ २२ ॥

एवं सलक्षणं राजा कक्ष्यापञ्चकमाद्रिजे ।
कारयित्वा विधानेन शिल्पशास्त्रविशारदैः ॥ २३ ॥

दारुभिर्वेष्टकाभिर्वा तत्परं पृथिवीपतिः ।
कोणम्प्रकल्पयेद्द्वार*मुपभद्रेण शोभितम् ॥ २४ ॥

ऊर्ध्वभागे विरचितगजलक्ष्म्या विराजितम् ।
अवक्रद्वारशाखाढ्यं सकवाटन्दृढार्गलम् ॥ २५ ॥

द्वारमेवङ्कल्पयित्वा कारयेत्तत्पुरो भुवि ।
तिरस्करिणिवत्कुड्यङ्कारयित्वा तदग्रतः ॥ २६ ॥

बोधिपल्लवसमाकाराशिखराणि निधाय च ।
तत्परन्नवरङ्गादिकूटान्सम्यक्प्रकल्पयेत् ॥ २७ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
राजास्थानमण्टपादिनिर्माणस्वरूपकथनन्नाम
चत्वारिंशः पटलः ॥



---

*मुखभद्रेण इति पाठान्तरम् ॥

अथैकचत्वारिंशः पटलः ।

नवरङ्गादिकूटनिर्माणस्वरूपकथनम् ॥

पार्वती—देवदेव विरूपाक्ष लोकरक्षणतत्पर ।
कूटन्तु नवरङ्गाख्यङ्कथङ्कार्यं वदाद्य मे ॥ १ ॥

श्रीशिवः—साधु साधु जगत्पूज्ये यन्मान्त्वं परिपृच्छसि ।
तत्तेऽहं संप्रवक्ष्यामि शृणुष्व सुसमाहिता ॥ २ ॥

तत्परङ्कारयेद्राजा नवरङ्गाख्यमुत्तमम् ।
कूटम्महोन्नतं सारदारुभिस्सुदृढैः प्रिये ॥ ३ ॥

सायंप्रातः प्रतिदिनं स्वस्यास्थानोचितं शुभम् ।
महार्हस्तम्भसंयुक्तं चित्रितं राजमूर्तिभिः ॥ ४ ॥

दौवारिकशताकीर्णद्वारदुष्प्रापितान्तरम् ।
पुरोभागस्फुरद्धर्म्यं स्वच्छम्मुकुरबिम्बवत् ॥ ५ ॥

तत्परङ्कारयेत्कूटं सर्वतोभद्रनामकम् ।
चतुरश्रञ्चतुष्षष्टिस्तम्भगम्भीरसम्मुखम ॥ ६ ॥

पार्ष्णिभागे च परितः कुड्येन महता वृतम् ।
महोन्नतम्महालिन्दं सुस्निग्धवलभीपुटम् ॥ ७ ॥

सुधासङ्घट्टिततलं विस्तीर्णन्द्वारसंयुतम् ।
तत्परङ्कारयेद्राजा कूटं स्वस्तिकनामकम् ॥ ८ ॥

कारयेत्तत्परं राजा तत्र तत्र गृहान्बहून् ।
सौवर्णान्राजतान्दान्तान्नानाचित्रविचित्रितान् ॥ ९ ॥

ततः प्रकल्पयेच्छालां शुभैश्चन्दनदारुभिः ।
चन्द्रशालादिशालाश्च काश्चित्काञ्चनचित्रिताः ॥१०॥

अत्युत्सेधांस्तथा सौधान्बहुभौमसमन्वितान् ।
कांश्चिद्धर्म्यांस्तथा रम्यान्कारयित्वा महीपतिः ॥ ११ ॥

नाट्यशालां विशालाञ्च कल्पयित्वा सलक्षणाम् ।
शुद्धान्तङ्कल्पयेद्राजा वीथीभिरुपशोभितम् ॥ १२ ॥

एवन्ते नवरङ्गादिकूटलक्षणमद्रिजे ।
सङ्ग्रहेणोदितं सम्यक्किमन्यच्छ्रोतुमिच्छसि ॥ १३ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नवरङ्गकूटादिनिर्माणस्वरूपकथनन्नाम
एकचत्वारिंशः पटलः ॥

---

अथ द्विचत्वारिंशः पटलः ॥

अन्तःपुरनिर्माणकथनम् ॥

पार्वती--शिव शङ्कर सर्वज्ञ लोकनाथ दयानिधे ।
शुद्धान्तः केन विधिना कल्पनीयो वदाद्य मे ॥ १ ॥

श्रीशिवः—कल्याणि यत्त्वया पृष्टं लोकरक्षणदक्षया ।
तत्तेऽहं संप्रवक्ष्यामि शृणुष्व सुसमाहिता ॥ २ ॥

प्रथमन्तु चतुश्शालम्मन्दिरङ्कल्पयेद्दृढम् ।
अवकाशस्फुरन्मध्यं गृहाष्टकसमन्वितम् ॥ ३ ॥

राजवासोचितं रम्यं सुकवाटन्दृढार्गलम् ।
प्राच्यान्तत्र स्नानगेहमाग्नेय्यां पवनालयः ॥ ४ ॥

दक्षिणे शयनागारं नैर्ऋते शस्त्रमन्दिरम् ।
पश्चाद्भोजनशाला स्याद्वायव्ये पशुमन्दिरम् ॥ ५ ॥

उत्तरे स्वर्णशाला स्यादैशान्ये देवमन्दिरम् ।
अथ वाऽन्यप्रकारेण चतुश्शालं प्रकल्पयेत् ॥ ६ ॥

गृहषोडशकोपेतं पूर्ववल्लक्षणान्वितम् ।
प्राच्यां स्नानगृहङ्कार्यन्तत्परम्भोगमन्दिरम् ॥ ७ ॥

इत्थं गृहङ्कल्पयित्वा तत्प्रतिष्ठाञ्च कारयेत् ।
एवन्ते राजगेहस्य निर्माणविधिरीरितः ॥
सङ्ग्रहेण वरारोहे किमन्यच्छ्रोतुमिच्छसि ॥ १६ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
अन्तःपुरनिर्माणस्वरूपकथनन्नाम
द्विचत्वारिंशः पटलः ॥

---

अथ त्रिचत्वारिंशः पटलः ॥

नूतनराजगृहप्रतिष्ठाविधिकथनम् ॥

पार्वती—भगवन्देवदेवेश वात्सल्यकरुणानिधे ।
विधिं गृहप्रतिष्ठायाः वद मे वदतां वर ॥ १ ॥

श्रीशिवः—साधु साधु वरारोहे यन्मान्त्वं परिपृच्छसि ।
तत्तेहं संप्रवक्ष्यामि शृणुष्व सुसमाहिता ॥ २ ॥

अथ राजा शुभे मासे शुक्लपक्षे विशेषतः ।
मलमूढादिरहिते शुभर्क्षे शुभवासरे ॥ ३ ॥

प्रातरुत्थाय विधिवत्कृत्वा कर्म तु नैत्यकम् ।
सङ्कीर्त्य देशङ्कालञ्च प्रतिष्ठामस्य वेश्मनः ॥ ४ ॥

कारयिष्यामि विप्रेन्द्रैरिति सङ्कल्प्य सत्वरम् ।
पुण्याहं वाचयित्वाऽदौ नान्द्याह्वानञ्च तत्परम् ॥ ५ ॥

कृत्वा शास्त्रोक्तमार्गेण वृत्वाचार्यन्तथर्त्विजः ।
यूयं प्रतिष्ठां विधिवत्कुरुध्वं शास्त्रमार्गतः ॥ ६ ॥

अस्य गेहस्य शुद्ध्यर्थम्पुष्ट्यर्थङ्गृहवासिनाम् ।
नियुज्य चैवन्तान्विप्रान्स्वयन्तिष्ठेत्तदग्रतः ॥ ७ ॥

ततस्स सर्त्विगाचार्यो यजमानस्य सन्निधौ ।
सङ्कल्प्य गेहस्यैशान्ये तण्डुलैर्द्रोणमात्रकैः ॥ ८ ॥

चतुरश्रां समां वेदिं बाहुमात्रां विधाय तु ।
तस्यामेकाशीतिपदं रचयित्वा तु मण्डलम् ॥ ९ ॥

तत्र पञ्चाधिकांश्चत्वारिंशद्देवान्यथाक्रमम् ।
आवाह्य चक्रात्परितो बहिरष्टौ यथाक्रमम् ॥ १० ॥

ब्रह्मादिपिलिपिञ्छान्तान्सम्पूज्य तदनन्तरम् ।
तदुत्तरे कल्पयित्वा ग्रहचक्रं सिताक्षतैः ॥ ११ ॥

आदित्यादिग्रहांस्तत्र समावाह्य यथाक्रमम् ।
अर्चयित्वा तु विधिवत्तस्यचोत्तरतस्ततः ॥ १२ ॥

भारमात्रेण धान्येन वेदिं सम्यग्विधाय तु ।
तस्या उपरि पद्मानि चाष्टौ संलिख्य तेषु वै ॥ १३ ॥

कलशानष्ट विन्यस्य तेष्वावाह्य दिगीश्वरान् ।
तत्तन्मन्त्रैरर्चयित्वा वास्तुचक्रस्य पश्चिमे ॥ १४ ॥

कुण्डे वा स्थण्डिले वाऽपि प्रतिष्ठाप्य हुताशनम् ।
स्वगृह्योक्तविधानेन चक्षुरन्तं विधाय तु ॥ १५ ॥

ग्रहयज्ञं पुरा कृत्वा समिच्चरुघृतैः क्रमात् ।
होमशेषं समाप्याथ दिक्पालकलशोदकैः ॥ १६ ॥

यजमानं सपत्नीकमभिषिच्याम्रपल्लवैः ।
मन्त्रैः पौराणिकैस्सम्यग्वैदिकैश्च यथोचितम् ॥ १७ ॥

तेनानुगम्यमानस्सन्वास्तुदेवबलिं हरन् ।
ब्रह्मादिपिलिपिञ्छान्तानुद्दिश्य विधिवत्क्रमात् ॥ १८ ॥

नदत्सु पञ्चवाद्येषु भेरीकाहलिकादिषु ।
पठत्सु विप्रमुख्येषु स्वस्तिसूक्तञ्च शाकुनम ॥ १९ ॥

तत्तद्बलिं समर्प्याथ पादौ प्रक्षाल्य तत्परम् ।
दर्भेणावेष्टितां सूचिं सौवर्णीस्परिगृह्य तु ॥ २० ॥

तया लिखेद्गृहस्तम्भे प्रतिष्ठासीति मन्त्रकम् ।
ध्रुवा द्यौर्मन्त्रयुग्मञ्च लिखित्वाऽथ वदेत्पुनः ॥ २१ ॥

स्वस्ति चास्तु शिवञ्चास्तु श्रेयश्चास्तु निरन्तरम् ॥
इत्युक्त्वा शान्तिकाध्यायान्पठेदृत्विक्समन्वितः ॥ २२॥

ततः कर्ता नवान्यन्यान्यम्बराणि समाहितः ।
धृत्वाऽऽचम्याथ सङ्कल्प्य सम्पूज्याचार्यमृत्विजः ॥२३॥

दत्वा ताः प्रतिमास्सर्वा दक्षिणाभिस्सह क्रमात् ।
दीनान्धकृपणान्शक्त्या तोषयित्वा ततःपरम् ॥ २४ ॥

राजैवं राष्ट्रवृद्ध्यर्थमन्नन्दत्वाऽनिवारितम् ।
सहस्रं वा शतं वाऽपि दत्वा गाश्च पयस्विनीः ॥२५॥

ततोऽनुकूलसमये तूर्यघोषपुरस्सरम् ।
पत्नीपुत्रसमेतस्सन्सभृत्यपरिचारकः ॥ २६ ॥

सान्तःपुरपरीवारश्चिन्तयन्निष्टदेवताम् ।
पुरोहितं पुरस्कृत्य प्रविश्य नवमन्दिरम् ॥ २७ ॥

नदत्सु पञ्चवाद्येषु भेरीकाहलिकादिषु ।
वन्दिभिर्नन्द्यमानस्सन् जयघोषपुरस्सरम् ॥ २८ ॥

सिह्मासने समारूढस्सर्वाभरणभूषितः ।
श्वेतच्छत्रेण महता चामराभ्यां विराजितः ॥ २९ ॥

नीराजिताङ्घ्रियुगलो नमत्सामन्तमौलिभिः ।
विनयेन नयेनापि रञ्जयन्नखिलाः प्रजाः ॥ ३० ॥

पालयेदवनीं सर्वलोकानामवनाय च ।
अनेन विधिना यस्तु नववेश्मप्रवेशनम् ॥ ३१ ॥

करोति तस्य दीर्घायुर्भविष्यति न संशयः ।
धनवृद्धिर्धान्यवृद्धिः पुत्रवृद्धिश्च जायते ॥ ३२ ॥

सर्वसम्पत्समृद्धिश्च भवेदत्र न संशयः ।
इत्येवन्ते निगादितन्नववेश्मप्रवेशने ॥
विधानं सरहस्यं वै किमन्यच्छ्रोतुमिच्छसि ॥ ३३ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नवमन्दिरप्रतिष्ठास्वरूपकथनन्नाम
त्रिचत्वारिंशः पटलः ॥



॥ अथ चतुश्चत्वारिंशः पटलः ॥

॥ सिह्मासननिर्माणकथनम् ॥

पार्वती—भव भर्ग भवद्वक्त्राद्राजवेश्मप्रवेशने ।
श्रुतं विधानं विविधमन्त्रतन्त्रमनोहरम् ॥ १ ॥

इदानीं श्रोतुमिच्छामि लक्षणं शुभलक्षण ।
सिह्मासनस्य मे ब्रूहि यद्यस्ति करुणा मयि ॥ २ ॥

श्रीशिवः—भो भो देवि त्वया प्रश्नः कृतो लोकहितेच्छया ।
प्रश्नानुरूपं वक्ष्यामि शृणूत्तरमगात्मजे ॥ ३ ॥

यदासनं सिह्मरूपैः पादैरष्टभिरन्वितम् ।
तत्सिह्मासनमित्युक्तं शिल्पशास्त्रविशारदैः ॥ ४ ॥

सिह्मासनं यस्य राज्ञो वर्तते शुभलक्षणम् ।
स चिरं पालयेत्पृथ्वीमेकच्छत्रेण लीलया ॥ ५ ॥

यस्सिह्मासनमारुह्य केषुचित्पृथिवीपतिः ।
दिवसेषु विशेषेषु स्वदर्शनमहोत्सवम् ॥ ६ ॥

कल्पयत्यद्रिसम्भूते द्विसप्तत्याधिकारिणाम् ।
इतरेषाञ्च पौराणां यथोचितमतन्द्रितः ॥ ७ ॥

सिह्मासनस्थ इति स प्रोच्यते ब्रह्मवादिभिः ।
आधारः कथ्यते सिह्मासनमाधेयमुच्यते ॥ ८ ॥

सप्ताङ्गसंयुतं प्राज्यं साम्राज्यं सर्वमङ्गले ।
तस्मादावश्यकतया सार्वभौमो नराधिपः ॥ ९ ॥

मण्डलस्येश्वरो वाऽपि कारयेच्छिल्पिभिः प्रिये ।
सिह्मासनं सुवर्णेन सुवर्णेन यथाविधि ॥ १० ॥

अनर्घरत्नखचितम्मनोनयनरञ्जनम् ।
त्रिहस्तायामविस्तारश्चतुरश्रं समन्ततः ॥ ११ ॥

हस्तमात्रोन्नतं स्वच्छमादर्शतलवत्प्रिये ।
सिह्मैराधिष्ठितैः पादैरष्टदिक्ष्वष्टभिर्युतम् ॥ १२ ॥

परितस्तु बहिः पञ्च मेखलाभिस्समन्वितम् ।
सोपानतुल्याकृतिभिरुपर्युपरि भामिनि ॥ १३ ॥

एवं पीठङ्कारयित्वा तदधस्तु लिखापयेत् ।
षट्कोणरूपामाधारशक्तिन्तत्परमादिमे ॥ १४ ॥

मेखलावयवे कूर्मावयवान्कारयेत्ततः ।
द्वितीयायाम्मेखलायां वहमानानिव स्थितान् ॥ १५ ॥

दिग्गजान्कल्पयेदष्टावष्टदिक्षु यथाक्रमम् ।
तृतीयायाम्मेखलायां वहमानामिव स्वकैः ॥ १६ ॥

फणैश्शेषङ्कल्पयित्वा भोगावेष्टितपीठकम् ।
ततःपरन्तुरीयायाम्मेखलायां यथाक्रमम् ॥ १७ ॥

अष्टदिक्ष्वष्टदुर्गाणां ब्राह्मयादीनां वरानने ।
प्रतिमाः कारयित्वाऽथ पञ्चम्याङ्कारयेत्क्रमात् ॥ १८ ॥

दिगष्टके कालिकानामष्टानां प्रतिमास्ततः ।
पीठस्योपरि देवेशि शतपत्रं सरोरुहम् ॥ १९ ॥

लिखापयित्वा खचितन्नवरत्नैस्तु कारयेत् ।
ततस्तूपरि कुड्याभैः फलकैस्स्वर्णनिर्मितैः ॥ २० ॥

अनर्घरत्नखचितैर्विचित्रशिखरान्वितैः ।
पार्श्वयोः पार्ष्णिभागे च घटितङ्कारयेन्नृपः ॥ २१ ॥

एवं सिह्मासनं रम्यङ्कारयित्वा सुशिल्पिभिः ।
पुरोधसं समाहूय सर्वागमविशारदम् ॥ २२ ॥

वदेदेवम्महीपालः प्राञ्जलिर्विनयान्वितः ।
भो भो पुरोहित श्रीमन् सर्वशास्त्रविशारद ॥ २३ ॥

अस्य सिह्मासनस्याद्य प्रतिष्ठान्त्वं यथाविधि ।
कारयस्वेति तं राजा तत्कर्मणि नियोजयेत् ॥ २४ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
सिह्मासननिर्माणकथनन्नाम
चतुश्चत्वारिंशः पटलः ॥

---

अथ पञ्चचत्वारिंशः पटलः ॥

सिह्मासनप्रतिष्ठाविधिकथनम् ॥

श्रीशिवः—ततः पुरोहितो देवि शुभे मासे शुभेऽहनि ।
स्नात्वा धौताम्बरधरः प्राणायामपुरस्सरम् ॥ १ ॥

सङ्कीर्त्य देशङ्कालञ्च धार्मिष्ठस्यास्य भूपतेः ।
कीर्तिप्रतापसिद्ध्यर्थं साम्राज्यस्थैर्यसिद्धये ॥ २ ॥

प्रकल्पितस्य पीठस्य प्रतिष्ठां प्रकरोम्यहम् ।
इति सङ्कल्प्य तत्पीठं विन्यस्यास्थानमण्टपे ॥ ३ ॥

तस्य पश्चिमदिग्भागे स्वगृह्योक्तविधानतः ।
संस्थाप्याग्निन्तदीशानदिशि द्रोणमितैर्नवैः ॥ ४ ॥

कृत्वा राशिं व्रीहिभिस्तु तत्र विन्यस्य नूतनम् ।
मृन्मयङ्कलशन्देवि सुधाधवलितञ्छुभम् ॥ ५ ॥

पञ्चत्वक्पल्लवोपेतङ्गव्यरत्नसमन्वितम् ॥
सकूर्चं सफलं सूक्ष्मशुभ्रतन्तुप्रवेष्टितम् ॥ ६ ॥

पूरितम्पुण्यतीर्थेन गन्धमाल्यैरलङ्कृतम् ।
तत्र वस्त्रं सम्प्रसार्य तस्मिन्विन्यस्य वारुणीम् ॥ ७ ॥

प्रतिमां लक्षणोपेतां सौवर्णीन्नक्रवाहनाम् ।
कृत्वा सुस्थापनन्तस्या मन्त्रैस्तान्त्रिकवैदिकैः ॥ ८ ॥

सम्पूज्य मन्त्रैर्गन्धाद्यैर्वरुणन्तत्प्रकाशकैः ।
वारुणानि च सूक्तानि जपित्वा कानिचित्प्रिये ॥ ९ ॥

ततस्तत्पीठनिकटङ्गत्वा प्राङ्मुखमास्थितः ।
तत्रत्याधारशक्त्यादिदेवतानां यथाक्रमम् ॥ १० ॥

कृत्वा सुस्थापनन्तत्तन्नाममन्त्रैर्यथाक्रमम् ।
सम्पूज्य गन्धपुष्पाद्यैर्दत्वा धूपञ्च दीपकम् ॥ ११ ॥

बह्वन्नं बहुशाकाढ्यं बहुभक्ष्यफलान्वितम् ।
क्षुद्रध्वजपताकाढ्यन्दीपैर्बहुभिरन्वितम् ॥ १२ ॥

दत्वा बलिं भद्रपीठदेवताभ्यस्ततः परम् ।
गत्वाऽग्निनिकटं पात्रसादनादिकमद्रिजे ॥ १३ ॥

कृत्वा कर्म यथाशास्त्रं प्रधाने होममाचरेत् ।
पालाशैः पायसेनाज्येनाष्टाविंशतिसङ्ख्यया ॥ १४ ॥

प्रतिदैवं प्रतिद्रव्यन्नाममन्त्रैर्नमोऽन्तकैः ।
एवं होमं विनिर्वर्त्य कृत्वा स्विष्टकृदादिकम् ॥ १५ ॥

शङ्खदुन्दुभिनिर्घोषैर्ब्रह्मघोषैश्च संयुतः ।
जलैर्वारुणकुम्भस्थैरब्लिङ्गैर्वारुणैरपि ॥ १६ ॥

मन्त्रैश्शुचीव इत्याद्यैस्तत्सिंह्मासनमद्रिजे ।
पुरोहितोऽभिषिच्याथ ध्रुवाद्यौरिति मन्त्रतः ॥ १७ ॥

अभिमन्त्र्य प्रतिष्ठासीत्येतन्मन्त्रन्तदासने ।
कुर्वचित्स्वर्णलेखिन्या विलिख्य प्रोक्ष्य तत्पुनः ॥ १८ ॥

जलैर्वारुणकुम्भस्थैस्तत्परं कुसुमाञ्जलिम् ।
तत्राधारशक्त्यादिदेवताभ्यो यथाक्रमम् ॥ १९ ॥

दत्वा सिंह्मासनायाथ वक्ष्यमाणेन पार्वति ।
मन्त्रेण दद्यात्प्रयतः पुष्पाञ्जलिमनेकधा ॥ २० ॥

त्वयि स्थितश्शिवस्साक्षात्त्वयि शक्रस्सुरेश्वरः ।
त्वयि स्थितो हरिर्देव त्वदर्थन्तप्यते तपः ॥ २१ ॥

नमस्ते सर्वतो भद्र भद्रदो भव भूपतेः ।
त्रैलोक्यजयसर्वस्व सिंह्मासन नमोऽस्तु ते ॥ २२ ॥

इति पुष्पाञ्जलिन्दत्वा बहुधा वरवर्णिनि ।
कृत्वा गोभूहिरण्यादिदानान्यपि च कानिचित् ॥ २३ ॥

दीनान्धकृपणादींश्च सन्तर्प्य स्वस्य शक्तितः ।
भोजयित्वा द्विजवरान्सहस्रं सम्यगद्रिजे ॥ २४ ॥

सर्वं विज्ञापयेद्राज्ञे तद्वृत्तान्तं पुरोहितः ।
इत्येवं सिह्मपीठस्य लक्षणं शुभलक्षणे ॥
प्रतिष्ठाकर्म चाप्यस्य मया सम्यक्प्रकीर्तितम् ॥ २५ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
सिह्मासनप्रतिष्ठास्वरूपनिरूपणन्नाम
पञ्चचत्वारिंशः पटलः ॥



॥ अथ षट्चत्वारिंशः पटलः ॥

॥ सिह्मासनारोहणस्वरूपनिरूपणम् ॥

श्रीशिवः—ततो नृपस्समाकर्ण्य तत्प्रतिष्ठाविधिं प्रिये ।
तत्परं शुभनक्षत्रे शुभवारे शुभे दिने ॥ १ ॥

लग्ने शुभग्रहैर्युक्ते वीक्षिते वा वरानने ।
स्नात्वा धौताम्बरधरो धृत्वा पुण्ड्रं यथोचितम् ॥ २ ॥

नित्यकर्म विनिर्वर्त्य लक्ष्मीं साम्राज्यदायिनीम् ।
सम्पूज्यारुह्य कलभमासाद्यास्थानमण्डपम् ॥ ३ ॥

शङ्खदुन्दुभिनिर्घोषैर्जयघोषैश्च वन्दिनाम् ।
समाक्रान्ते दिशाचक्रे गृहीत्वा कुसुमाञ्जलिम् ॥ ४ ॥

त्रिःप्रदक्षिणमावृत्य तत्पीठं भूपुरन्दरः ।
पुराधसोक्तमार्गेण मन्त्रैः पुष्पाञ्जलिं क्षिपेत् ॥ ५ ॥

सिंहासन नमस्तुभ्यन्त्वामारुह्य किलाखिलाः ।
मान्धातृप्रमुखा भूपाः प्रापुस्साम्राज्यमूर्जितम् ॥ ६ ॥

इन्द्रोऽपि त्वामधिष्ठाय निर्जित्याखिलदानवान् ।
त्रैलोक्यैश्वर्यमद्यापि भुङ्क्ते शच्या समन्वितः ॥ ७ ॥

त्वामास्थाय किलाद्यापि ब्रह्मविष्णुमहेश्वराः ।
सृष्टिपालनसंहारान्सम्यक्कुर्वन्ति लीलया ॥ ८ ॥

भद्रपीठ त्वदायत्तमखिलं राजकं सदा ।
राजन्यकञ्च साम्राज्यस्थैर्यकाङ्क्षी महीतले ॥ ९ ॥

तस्मादीदृक्प्रभावस्त्वं कुरु मामपि सर्वदा ।
अव्याहतप्रतापाग्निनिर्दग्धाखिलकण्टकम् ॥ १० ॥

श्रीमन्तङ्कीर्तिमन्तञ्च समानेषु महोन्नतम् ।
इति सम्प्रार्थ्य तद्भद्रपीठन्दत्वा सुमाञ्जलिम् ॥ ११ ॥

ततस्तत्पीठसिंहेभ्यः प्रदद्यात्कुसुमाञ्जलिम् ।
प्राचीन्दिशं समारभ्य दिक्ष्वष्टसु यथाक्रमम् ॥ १२ ॥

बाह्यान्विजेतुमखिलानरीनुरुबलानहम् ।
विजयाख्याय सिंहाय दास्यामि कुसुमाञ्जलिम् ॥१३॥

आन्तरानखिलान्जेतुमरीनत्यन्तदारुणान् ।
जयदाख्याय सिद्धाय दास्यामि कुसुमाञ्जलिम् ॥१४॥

बाह्यांश्चैवान्तरान्जेतुमेकदैव रिपूनहम् ।
जेतेति नाम्ने सिद्धाय ददामि कुसुमाञ्जलिम् ॥ १५ ॥

बहिर्मित्राण्यन्तरतश्शत्रून्हन्तुङ्कुपूरुषान् ।
शत्रुघात्याख्यसिद्धाय प्रयच्छामि सुमाञ्जलिम् ॥ १६ ॥

प्रियङ्कराणां वस्तूनां लाभाय मम सर्वदा ।
प्रियङ्कराख्यसिद्धाय दास्यामि कुसुमाञ्जलिम् ॥ १७ ॥

सर्वदुःखक्षयार्थाय दुःखहेति जगत्त्रये ॥
प्रविख्याताय सिद्धाय दास्यामि कुसुमाञ्जलिम् ॥१८॥

समस्तधर्मसिद्ध्यर्थन्धर्मधीरिति भूतले ।
विख्यातनाम्ने सिद्धाय ददामि कुसुमाञ्जलिम् ॥१९॥

सर्वारिष्टविनाशार्थं सर्वारिष्टविनाशकः ।
इति ख्याताय सिद्धाय ददामि कुसुमाञ्जलिम् ॥२०॥

एवं पुष्पाञ्जलिन्दत्वा सिद्धेभ्यस्तदनन्तरम् ।
तत्तत्याधारशक्त्यादि देवताभ्यो यथाक्रमम् ॥ २१ ॥

दद्यात्पुष्पाञ्जलीन्राजा मन्त्रैर्मदिरलोचने ।
आधाराणां समस्तानामप्याधारतया ह्यसि ॥ २२ ॥

आधारशक्तिपूज्या त्वं कुरु त्वामिव मामपि ।
आदिकूर्मावतारस्त्वमादिविष्णो भवानपि ॥ २३ ॥

वोढुं भुवं माञ्च भुवो भारं वोढुं क्षमङ्कुरु ।
अनन्तानन्तकल्याणगुणानन्तां ससागराम् ॥ २४ ॥

परिपालयितुं शक्तं मामद्य कुरु मानद ।
भो भो दिक्करिणस्त्वीयकरोत्ताम्भितभूतलाः ॥ २५ ॥

भूभारं लीलया धर्तुन्दक्षम्माङ्कुरुताधुना ।
भो भोऽष्टदुर्गा ब्राह्मयाद्या गिरिदुर्गादिभेदतः ॥ २६ ॥

दुर्गाणामष्टभेदानामधिपङ्कुरुताद्य माम् ।
हे कालिका मां काल्याद्याः कालकालमिवानिशम्॥२७

सदाऽष्टैश्वर्यसम्पन्नङ्कुरुताद्य महीतले ।
एवं पुष्पाञ्जलिन्दत्वा तत्सिह्मासनमद्रिजे ॥ २८ ॥

त्रिः परिक्रम्य सम्पूज्य ब्राह्मणान्ब्रह्मनिष्ठितान् ।
शङ्खदुन्दुभिनिर्घोषैर्जयघोषैश्च वन्दिनाम् ॥ २९ ॥

दिशाचक्रे मुखरिते समारुह्य नृपासनम् ।
श्वेतच्छत्रेण महता चामराभ्यां विराजितः ॥ ३० ॥

नमद्विपक्षभूपालकोटिकोटीरकोटिभिः ।
निघृष्टपादपीठस्संश्चिन्तयान्निष्टदेवताम् ॥ ३१ ॥

साम्राज्यलक्ष्मीं हृदये पौनःपुन्येन पार्थिवः ।
द्विसप्तत्यधिकारिभ्यः पुरुषेभ्यो यथोचितम् ॥ ३२ ॥

तद् येभ्यश्च पौरेभ्यो मुहूर्तं वरवर्णिनि ।
स्वदर्शनङ्कल्पयित्वा ततो भूमिपुरन्दरः ॥ ३३ ॥

दृष्ट्वा नानाविधाकारान्विनोदान्विबुधैरसह ।
बहुमान्य ततस्तांस्तान्वस्त्रताम्बूलचन्दनैः ॥ ३४ ॥

नीराजितः पुरन्ध्रीभिर्विप्राशीर्भिर्विवर्धितः ।
ततोऽवरुह्य तद्भद्रपीठादालम्ब्य चाप्तयोः ॥ ३५ ॥

चेलाञ्चलावृतौ हस्तौ बहिर्निर्गत्य भूपतिः ।
आरुह्य कलभं कर्णचामराद्युपशोभितम् ॥ ३६ ॥

पुरतो गीतकलया मिश्रिते वाद्यनिस्वने ।
विजृम्भत्यातिगम्भीरम्मन्दयानेन पार्वति ॥ ३७ ॥

प्रविश्यान्तःपुरं रम्यं स्त्रीरत्नशतसङ्कुलम् ।
पुत्रपौत्रैः परिवृतो लक्ष्मीं साम्राज्यदायिनीम् ॥ ३८ ॥

संपूज्य निवसेत्सर्वाः प्रजा धर्मेण पालयन् ।
एवं समग्रगुणवान्यदि राजाऽन्वहं प्रिये ॥ ३९ ॥

सिह्मासनं समारुह्य पालयेदवनीञ्चिरम् ।
गुणैः कतिपयैर्हीनो यदि स्यात्पृथिवीपतिः ॥ ४० ॥

दिवसेषु विशेषेषु समारुह्य नृपासनम् ।
समस्तैश्वर्यसम्पूर्णः पालयेदखिलाः प्रजाः ॥ ४१ ॥

यदि स्वल्पगुणो राजा स्पृष्ट्वा सिह्मासनं प्रिये ।
करेण पालयेत्पृथ्वीं पृथ्वीं पृथुललोचने ॥ ४२ ॥

एवन्नृपः स्वाधिकारं विचार्य बहुधा प्रिये ।
स्वाधिकारानुरूपेण भद्रपीठं समारुहेत् ॥ ४३ ॥

पुरा मनुर्महीपालो मान्धाता नहुषश्शिबिः ।
ययातिर्धुन्धुमारश्च कार्तवीर्यः पुरूरवाः ॥ ४४ ॥

रघुर्दिलीपो देवेशि पृथुः पृथुयशा नृपः ।
नाभागश्चाम्बरीषश्च गयो रुक्माङ्गदस्तथा ॥ ४५ ॥

शर्यातिर्भरतश्चैव मरुत्तः परवीरहा ।
इक्ष्वाकुस्सर्वधर्मज्ञश्शन्तनुर्गाधिरेव च ॥ ४६ ॥

रामो निमिश्च जनको धर्ममूर्तिर्युधिष्ठिरः ।
एते चान्ये च भूपालास्सिह्मासनमनुत्तमम् ॥ ४७ ॥

समारुह्याखिलाम्पृथ्वीन्तत्प्रभावेन लीलया ।
पालयामासुरवनीं चिरकालं वरानने ॥ ४८ ॥

तस्मादावश्यकतया धर्मशीलैर्नृपोत्तमैः ।
साम्राज्यलक्ष्मीस्थैर्यार्थं कीर्तिस्फूर्त्यर्थमद्रिजे ॥ ४९ ॥

आव्याहतप्रतापार्थमैश्वर्याष्टकसिद्धये ।
सम्पादनीयं सहसा सिंहपीठं सलक्षणम् ॥ ५० ॥

नवरत्नमयं हैमं पादपीठञ्च पार्वति ।
इत्येवं सिंहपीठस्य समारोहक्रमोऽधुना ।
सम्यङ्मया निगदितस्संक्षेपात्ते वरानने ॥ ५१ ॥

इत्याकाशभैरवाख्य महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
सिंहासनारोहणस्वरूपनिरूपणन्नाम
षट्चत्वारिंशः पटलः ॥



॥ अथ सप्तचत्वारिंशः पटलः ॥

॥ नृपपट्टाभिषेकाङ्गमण्टपस्वरूपनिरूपणम् ॥

पार्वती—शिव सर्वज्ञ भगवञ्श्रुतस्त्वन्मुखपङ्कजात् ।
सिंहासनारोहणस्य विधिर्विधिमतां वर ॥ १ ॥

इदानीं नृपपट्टाभिषेकस्य विधिमुत्तमम् ।
श्रोतुमिच्छामि तत्सर्वं वद मे वदतां वर ॥ २ ॥

श्रीशिवः—साधु साधु वरारोहे यन्मान्त्वं परिपृच्छसि ।
तत्तेहं सम्प्रवक्ष्यामि शृणुष्व सुसमाहिता ॥ ३ ॥

प्रजापालनशीलस्य कुलीनस्य वरानने ।
विद्याविनयचारित्रसम्पन्नस्य महीपतेः ॥ ४ ॥

पितृपैतामहस्थाने कर्तुं पट्टाभिषेचनम् ।
पुरोहितस्समुद्युक्तस्साकं सम्मन्त्र्यमन्त्रिभिः ॥ ५ ॥

शुभमासे शुक्लपक्षे मलमूढादिवर्जिते ।
प्रशस्ततिथिवारेषु पुष्यर्क्षे श्रवणेऽपि वा ॥ ६ ॥

रोहिण्यां पौष्णभे वाऽपि ह्यभिषेकार्थमद्रिजे ॥
लग्नान्निश्चित्य गुर्वादिसुशुभग्रहवीक्षितम् ॥ ७ ॥

तस्माद्द्वित्रदिनेभ्यस्तु पूर्वमेव शुभे दिने ।
विष्णोरायतने रम्ये मण्टपङ्कारयेच्छुभम् ॥ ८ ॥

दशहस्तप्रमाणेन चतुरश्रं समन्ततः ।
षोडशस्तम्भसंयुक्तश्चतुर्द्वारं सुतोरणम् ॥ ९ ॥

उपर्यत्युन्नतं वर्षवारणार्थन्नवैः कटैः ।
वंशजैर्नारिकेळोत्थैरथ वा मुञ्जसम्भवैः ॥ १० ॥

आच्छादितमधस्तात्तु पारतः पद्मलोचने ।
दर्भमालापरिवृतन्त्यक्त्वा द्वारचतुष्टयम् ॥ ११ ॥

एवं सुशिल्पिभिस्सम्यक्कारयित्वा तु मण्टपम् ।
लोकपालपताकाभिः पञ्चवर्णध्वजेन च ॥ १२ ॥

तोरणैश्चामरादर्शैरलङ्कृत्य ततःपरम् ।
तन्मध्ये कारयेद्वेदिं पञ्चहस्तप्रमाणतः ॥ १३ ॥

विस्तीर्णामायताञ्चैव चतुरश्रां समन्ततः ।
एवं वेदिं विधायाथ तस्यास्तु परितः प्रिये ॥ १४ ॥

कुण्डानि कारयेद्दिक्षु चत्वारि चतसृष्वथ ।
चतुरश्राणि वृत्तानि पद्माकाराणि वाऽद्रिजे ॥ १५ ॥

दिक्कुण्डान्यथ वा हस्तमात्राणि च यथाक्रमम् ।
चतुरश्रं पूर्वदिशि दक्षिणेऽर्धेन्दुसन्निभम् ॥ १६ ॥

वृत्तं पश्चिमदिग्भागे पद्ममुत्तरदिश्युमे ।
मेखलायोनियुक्तानि कुण्डान्येवं यथाविधि ॥ १७ ॥

कारयित्वा गोमयेन लेपयित्वा सवारिणा ।
पञ्चवर्णरजोभिस्तमलङ्कृत्य तु मण्टपम् ॥ १८ ॥

प्रतिद्वारं पार्श्वयुगरचितालिन्दयुग्मके ।
विन्यस्य धान्यपीठेषु पूर्णकुम्भान्सलक्षणान् ॥ १९ ॥

शरावान्साङ्कुरान्धूपपात्राणि विविधानि च ।
तत्र तत्र विनिक्षिप्यालङ्कुर्यात्पुष्पदामभिः ॥ २० ॥

कूर्मासनानि चत्वारि दीपस्तम्भांश्च कांश्चन ।
कारयित्वा तत्र तत्र पुरोधा विनिधापयेत् ॥ २१ ॥

एवं सोपस्करं रम्यं कारयित्वाथ मण्टपम् ।
गुर्वादिवरणं राज्ञा कारयेत्तत्पुरोहितः ॥ २२ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नृपपट्टाभिषेकाङ्गमण्टपस्वरूपनिरूपणन्नाम
सप्तचत्वारिंशः पटलः ॥

---

## अथाष्टचत्वारिंशः पटलः ॥

### नृपपट्टाभिषेकाङ्गाचार्यर्त्विग्वरणस्वरूपनिरूपणम् ॥

श्रीशिवः—ततो राजा स्वाभिषेकादिनात्पूर्वदिने शुभे ।
प्रातरुत्थाय शयनात्पादौप्रक्षाळ्य वाग्यतः ॥ १ ॥

आचम्य प्राङ्मुखो भूत्वा कृत्वा वै दन्तधावनम् ।
जाम्बूनदकटाहस्थैः पुण्यतीर्थैर्वरानने ॥ २ ॥

स्नातश्शुक्लाम्बरधरः फाले धृत्वोर्ध्वपुण्ड्रकम् ।
कृत्वा तात्कालिकङ्कर्म यथाविधि समाहितः ॥ ३ ॥

पुरोहितं पुरस्कृत्य चतुर्भिर्ब्राह्मणोत्तमैः ।
पुण्याहं वाचयित्वाथ नान्दीश्राद्धं यथाविधि ॥ ४ ॥

स्वयङ्कृत्वाऽभिषेकाङ्गपूजाहोमादिकं प्रिये ।
कर्म कर्तुङ्कारयितुं वेदवेदाङ्गपारगम् ॥ ५ ॥

आचारवन्तन्धर्मज्ञं सत्यसन्धमलोलुपम् ।
कुटुम्बिनङ्कुलीनञ्च दयालुञ्च बहुश्रुतम् ॥ ६ ॥

वृत्वाऽऽचार्यमथाष्टौ च वृणुयादृत्विजः पुनः ।
ब्रह्माणमेकं वृणुयात्पात्रलक्षणलक्षितम् ॥ ७ ॥

एवं वृत्वा तु तान्सर्वानाचार्यादीन्महीपतिः ।
आन्दोलिकासु चारोप्य तूर्यघोषपुरस्सरम् ॥ ८ ॥

प्रापयित्वाऽभिषेकार्थं कल्पितम्मण्टपं शुभम् ।
स्वपुरोहितमानीय वदेदेवं महीपतिः ॥ ९ ॥

भो भो पुरोहित श्रीमन्नाचार्यादीन् यथाविधि ।
मधुपर्केण सम्पूज्य दत्वा धौताम्बरादिकम् ॥ १० ॥

तैस्सर्वमभिषेकाङ्गपूजाहोमजपादिकम् ।
कारयस्व यथाशास्त्रमिति तं प्रेरयेत्प्रिये ॥ ११ ॥

ततः पुरोहितो राज्ञा प्रेरितः प्राप्य मण्टपम् ।
गुर्वादीन्मधुपर्केण पूजयित्वा यथाविधि ॥ १२ ॥

हेमकुम्भैः पुण्यतीर्थैर्जलमानाय्य भूसुरैः ।
शङ्खदुन्दुनिर्घोषैर्ब्रह्मघोषैस्सहाद्रिजे ॥ १३ ॥

ततो देशिकमाहूय होतृन्ब्रह्माणमेव च ।
तान्प्रत्येवं वदेद्राज्ञा चोदितस्स पुरोहितः ॥ १४ ॥

यूयं सर्वे महात्मानो वेदवेदाङ्गपारगाः ।
कृपालवस्सत्यसन्धा राज्ञा धर्मानुवर्तिना ॥ १५ ॥

चिकीर्षितेऽभिषेकाख्ये कर्मण्यस्मिन्यथाविधि ।
दिक्पालपूजां होमञ्च तदन्यद्यच्चकिञ्चन ॥ १६ ॥

कृत्यमस्ति तदप्यद्य कुरुध्वमिति सादरम् ।
विनियुज्य स्वयन्तत्र वसेदालोकयन्क्रियाम् ॥ १७ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नृपपट्टाभिषेकाङ्गाचार्यर्त्विग्ब्रह्मवरणस्वरूपनिरूपणन्नाम
अष्टचत्वारिंशः पटलः ॥

---

अथैकोनपञ्चाशः पटलः ॥

नृपपट्टाभिषेकाङ्गसम्भारसम्पादनप्रकारः ॥

श्रीशिवः—ततोऽपराह्णे सुश्रोणि होतृभिस्सह देशिकः ।
पुण्याहवाचनङ्कृत्वा वास्तुपूजां यथाविधि ॥ १ ॥

कृत्वा मण्टपमध्यस्थवेदिकायां सितैर्नवैः ।
तण्डुलैर्वेदिकाङ्कृत्वा चतुरश्रां समन्ततः ॥ २ ॥

तन्मध्ये कलशं हैमं राजतं वाऽथ ताम्रजम् ।
सलक्षणं विनिक्षिप्य चतुर्दिक्षु सलक्षणान् ॥ ३ ॥

चतुरस्ताम्रकलशान्विन्यस्य तदनन्तरम् ।
पलपञ्चकमानेन सुवर्णेन विनिर्मिताम्  ॥ ४ ॥

प्रतिमाल्लँक्षणोपेतां लक्ष्मीनारायणस्य वै ।
तदर्धपरिमाणेन सुवर्णेन विनिर्मिताः  ॥ ५ ॥

चतस्रो दिक्पतीनाञ्च प्रतिमाः पद्मलोचने ।
विन्यस्यैकत्र पूजाया गन्धपुष्पफलादिकाम्  ॥ ६ ॥

सामग्रीं होमसामग्रीं समिच्चरुघृतादिकाम् ।
सम्पाद्य तत्र तत्राथ विन्यस्य वरवर्णिनि  ॥ ७ ॥

प्रागाद्यासु चतुर्दिक्षु न्यसेत्कुम्भचतुष्टयम् ।
प्राच्यां दधिघटन्देवि याम्यां क्षौद्रघटन्तथा  ॥ ८ ॥

वारुण्यां घृतकुम्भञ्च जलकुम्भमुदग्दिशि ।
पीठमौदुम्बरं हस्तमात्रं वेदाश्रमद्रिजे  ॥ ९ ॥

प्रादेशोत्सेधमानाप्य रचितं तत्सुशिल्पिना ।
विन्यस्यैकत्र वैयाघ्रञ्चर्म तत्र प्रसार्य तु ॥  १० ॥

शङ्खञ्च दक्षिणावर्तं वृषश्रृङ्गञ्च गोमुखम् ।
पात्रं हिरण्मयं शाखामुदुम्बरतरूद्भवाम्  ॥ ११ ॥

सम्पाद्य च प्रतिसरं हैमं हेमविनिर्मिते ।
पात्रे निधाय रुचिरास्सर्वाभरणभूषिताः  ॥ १२ ॥

कन्याश्चाष्टावथानाय्य उपवेश्य च कुत्रचित ।
सुवर्णकक्ष्याग्रैवेयमौपवाह्यम्महागजम् ॥ १३ ॥

मण्टपस्य बहिर्देशे निधाय वरवर्णिनि ।
गन्धकर्पूरकस्तूरीपुष्पताम्वूलकादिकम् ॥ १४ ॥

शोभनद्रव्यजातञ्च विन्यस्यैकत्र भामिनि ।
एवं सम्भृतसम्भारः प्राणानायम्य देशिकः ॥ १५ ॥

भूशुद्धिं भूतशुद्धिञ्च मातृकान्यासमेव च ।
कृत्वा कुम्भे प्रतिष्ठाञ्च कृत्वा शास्त्रोक्तमार्गतः ॥ १६॥

पञ्चत्वक्पल्लवादीनि तत्तन्मन्त्रैर्निधाय तु ।
हेमकुम्भाहृतैस्तीर्थजलैरापूर्य तद्घटान् ॥ १७ ॥

तेष्वावाह्य जलाधीशं पूजयित्वा यथाविधि ।
नालिकेरानि कूर्चानि प्रतिकुम्भन्निधाय तु ॥ १८ ॥

गङ्गादिसर्वतीर्थानि समावाह्य ततःपरम् ।
क्षौमानि तेषु वस्त्राणि प्रसार्य कलशेष्वथ ॥ १९ ॥

विन्यस्य मध्यमे कुम्भे लक्ष्मीनारायणस्य तु ।
सुवर्णेन कृतां रम्यां प्रतिमाल्लँक्षणान्विताम् ॥ २० ॥

दिक्कुम्भेष्वथ दिक्पालप्रतिमा लक्षणान्विताः ।
चतुर्षु क्रमशो देवि निधाय तदनन्तरम् ॥ २१ ॥

प्राणप्रतिष्ठाङ्कृत्वाथ मन्त्रैर्वैदिकतान्त्रिकैः ।
ततस्तत्प्रतिमापूजान्देशिकः कर्तुमारभेत ॥ २२ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नृपपट्टाभिषेकसम्भारसम्पादनप्रकारकथनन्नाम
एकोनपञ्चाशः पटलः ॥

---

## अथ पञ्चाशः पटलः ॥

### नृपपट्टाभिषेकाङ्गहोमविधिस्वरूपनिरूपणम् ॥

श्रीशिवः—अथाचार्यो देशकालौ सङ्कीर्त्यर्त्विक्समन्वितः ।
गोत्रनामविशिष्टेन राज्ञा धर्मानुवर्तिना ॥ १ ॥

चिकीर्षितेऽभिषेकाख्यकर्मण्यस्मिन्यथाविधि ।
लक्ष्मीनारायणस्याहङ्करिष्याम्यर्चनं हरेः ॥ २ ॥

इति सङ्कल्प्य सूक्तेन पौरुषेण वरानने ।
गन्धैः पुष्पैश्च नैवेद्यैः पूजयित्वा यथाविधि ॥ ३ ॥

ऋत्विजावथ देवेन्द्रपूजार्थं विनियोजयेत् ।
ऋग्वेदवेदिनौ द्वौ तु यमपूजार्थमद्रिजे ॥ ४ ॥

यजुर्वेदविदौ द्वौ तु द्वावेव वरुणार्चने ।
सामवेदविदौ सोमपूजार्थन्द्वावथर्वणौ ॥ ५ ॥

ततो द्वौ द्वावृत्विजौ तौ प्राणायामपुरस्सरम् ।
सङ्कीर्त्य देशङ्कालञ्च स्वस्ववेदोदितैः प्रिये ॥ ६ ॥

दिक्पालकप्रकाशैश्च तत्तन्मन्त्रैर्यथाक्रमम् ।
सम्पूज्य गन्धैः पुष्पैश्च नैवेद्यैर्विविधैरपि ॥ ७ ॥

तत्तद्दिक्पालसूक्तानि स्वस्ववेदोदितानि वै ।
जपेतां पञ्चवारं वा त्रिवारं वा वरानने ॥ ८ ॥

ततो गुरुर्देशकालौ पुनस्सङ्कीर्त्य वाग्यतः ।
राज्ञा चिकीर्षिते ह्यस्मिन्नभिषेकाख्यकर्मणि ॥ ९ ॥

लक्ष्मीनारायणप्रीत्यै दिक्पालप्रीणनाय च ।
*होमङ्करिष्यमाणोहमग्निं संस्थापयाम्यहम् ॥ १० ॥

इति सङ्कल्प्य पूर्वादिकुण्डेषु च चतुर्ष्वथ ।
अग्निं संस्थाप्य विधिवन्मुखान्तङ्कर्म चस्वयम् ॥११॥

कृत्वा विष्णोर्नुकमिति मन्त्रेण ब्रह्मवृक्षजैः ।
समिद्वरैः पायसेन सर्पिषा च पृथक्पृथक् ॥ १२ ॥

अष्टोत्तरं शतं हुत्वा तत्पश्चात्तत्तदृत्विजौ ।
तत्तद्वेदोक्तदिक्पालमन्त्रैर्होमं यथाविधि ॥ १३ ॥

पलाशसमिदन्नाज्यैरष्टोत्तरशताहुतीः ।
कुरुतं सम्यगित्युक्त्वा तद्धोमन्त्रैर्यथाविधि ॥ १४ ॥

---

*होमङ्करिष्यमाणस्सन्नग्निं इति युक्तः पाठः ॥

कारयित्वा स्वयं पश्चाद्ब्रह्मणा सहितः पुनः ।
प्रायश्चित्ताहुतीः कृत्वा होमशेषं समापयेत् ॥ १५ ॥

एवङ्कृत्वा होमकर्म कारयित्वा च होतृभिः ।
निवेदयेच्च तत्सर्वं यथार्थन्तत्पुरोधसे ॥ १६ ॥

ततः पुरोहितो राजनिकटं प्राप्य सत्वरम् ।
स्वामिन् त्वदीयपट्टाभिषेकाङ्ग हवनादिकम् ॥ १७ ॥

सम्यगाचरितं देव होतृभिर्देशिकेन च ।
श्वः प्रातरभिषेकार्थमागन्तव्यन्त्वयानघ ॥ १८ ॥

इत्युक्त्वा मण्टपम्भूयः प्रविश्य तु पुरोहितः ।
आचार्यर्त्विग्ब्रह्मभिस्तैस्साकन्तद्रात्रिमद्द्विजे ॥ १९ ॥

पुराणपठनेनाथ वेदपारायणेन च ।
नीत्वा परेद्यवि प्रातः स्नात्वा तद्देशिकादिभिः ॥ २० ॥

साकं सन्ध्यादिकङ्कर्म नित्यन्तद्विनिवर्त्य च ।
प्रविश्य मण्टपन्देवि लक्ष्मीनारायणं विभुम् ॥ २१ ॥

इन्द्रादीनपि दिक्पालान्पुनस्संपूज्य पूर्ववत् ।
राजागमनमाकाङ्क्षन्वसेत्तत्र पुरोहितः ॥ २२ ॥

एवन्ते राजपट्टाभिषेकाङ्गं हवनादिकम् ।
कर्म सम्यङ्निगदितं संक्षेपेण मयाधुना ॥ २३ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नृपपट्टाभिषेकाङ्गहोमस्वरूपवर्णनन्नाम
पञ्चाश पटल ॥

॥ अथ एकपञ्चाश पटल ॥

॥ नृपाभिषेकप्रयुक्तनृपकर्तव्यपूजास्वरूपनिरूपणम् ॥

श्रीशिवः—ततो नृपस्स्वाभिषेकादिने प्रातस्समुत्थितः ।
पादौ प्रक्षाल्य चाचम्य कृत्वा वै दन्तधावनम् ॥ १ ॥

स्नात्वा हेमकटाहस्थैस्सलिलैरतिपावनैः ।
क्षौमे च वाससी धृत्वा पुण्ड्रङ्कृत्वाऽलिकस्थले ॥ २ ॥

नैत्यं सन्ध्यादिकङ्कर्म कृत्वा तात्कालिकं प्रिये ।
नदत्सु पञ्चवाद्येषु भेरीकाहलिकादिषु ॥ ३ ॥

साम्राज्यलक्ष्मीं सम्पूज्य नत्वा गुरुजनानपि ।
बहिर्निर्गत्य भद्रेभमारुह्य स्वकुलागतम् ॥ ४ ॥

शङ्खदुन्दुभिनिर्घोषैर्जयघोषैश्च वान्दिनाम् ।
साकन्तन्मण्टपम्प्राप्य भद्रेभादवरुह्य तु ॥ ५ ॥

मण्टपान्तः प्रविश्याथ नत्वा देशिकमृत्विजः ।
ब्रह्माणञ्च वरारोहे त्रिःपरिक्रम्य तत्परम् ॥ ६ ॥

आचम्यप्राङ्मुखो भूत्वा प्राणायामपुरस्सरम् ।
पुरोधसोपदिष्टेन मार्गेण मदिरेक्षणे ॥ ७ ॥

देशङ्कालञ्च सङ्कीर्त्य ममारिष्टनिवृत्तये ।
इष्टप्राप्त्यैच साम्राज्यलक्ष्मीस्थैर्यार्थमेव च ॥ ८ ॥

सर्वाः प्रजाः पालयितुं योग्यतासिद्धयेऽपि च ।
मया चिकीर्षिते सम्यक्कर्मण्यस्मिन्यथाविधि ॥ ९ ॥

लक्ष्मीनारायणन्देवन्दिक्पालांश्चतुरोपि च ।
पूजयिष्याम्यहं शश्वदिति सङ्कल्प्य पार्थिवः ॥ १० ॥

पौरुषेण तु सूक्तेन मन्त्रेणाष्टाक्षरेण च ।
तथैव विष्णुगायत्र्या लक्ष्मीनारायणं विभुम् ॥ ११ ॥

सम्पूज्याथ दिगीशांश्च तत्तन्मन्त्रैर्यथाविधि ।
वैदिकैस्तान्त्रिकैश्चैव पुराणोक्तैश्च पूर्ववत् ॥ १२ ॥

सम्पूज्य वक्ष्यमाणैस्तु मन्त्रैः पुष्पाञ्जलिं क्षिपेत् ।
नमस्ते देवदेवेश लक्ष्मीनारायण प्रभो ॥ १३ ॥

महालक्ष्म्याः स्थैर्यसिद्ध्यै साम्राज्यप्राप्तयेऽपि च ।
विजयाय विशेषेण दास्यामि कुसुमाञ्जलिम् ॥ १४ ॥

एवं पुष्पाञ्जलिन्दत्वा लक्ष्मीनारायणाय तु ।
दिक्पालेभ्यस्ततो दद्यात्पार्थिवः कुसुमाञ्जलीन् ॥१५॥

नमस्तेऽस्तु सदा शक्रदैत्यदानवमर्दन ।
पुष्पाञ्जालिमहन्तुभ्यन्दास्यामीष्टार्थसिद्धये ॥ १६ ॥

समवर्तिन्नमस्तुभ्यं सदा सत्पुरुषप्रिय ।
पुष्पाञ्जलिमहन्तुभ्यं प्रयच्छामीष्टसिद्धये ॥ १७ ॥

पाशहस्त नमस्तेऽस्तु सर्वदा शान्तमानस ।
उुष्पाञ्जलिमहन्तुभ्यन्दास्यामीष्टार्थसिद्धये ॥ १८ ॥

सोम सोमाशिरोरत्न नमस्तेऽस्तु सदाशशिन् ।
पुष्पाञ्जलिमहन्तुभ्यन्दास्यामीष्टार्थसिद्धये ॥ १९ ॥

एवं पुष्पाञ्जलिन्दत्वा तत्परङ्गुरुणा नृपः ।
पूर्णाहुतिङ्कारयित्वा कृत्वाचाग्नेः प्रदक्षिणम् ॥
पुरोहितं पुरस्कृत्य स्वयन्तिष्ठेत्तदग्रतः ॥ २० ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नृपाभिषेके नृपकर्तव्यपूजास्वरूपनिरूपणन्नाम
एकपञ्चाशः पटलः ॥

अथ द्विपञ्चाशः पटलः ॥

नृपाभिषेकप्रकारकथनम् ॥

श्रीशिवः—ततः पुरोधा गुरुणा होतृभिश्च समन्वितः ।
नदत्सु पञ्चवाद्येषु भेरीकाहलिकादिषु ॥ १ ॥

गायन्तीषु पुरन्ध्रीषु पठत्सु ब्राह्मणेषु च ।
स्वस्तिसूक्तं शाकुनञ्च शान्तिसूक्तानि कानिचित् ॥२॥

नृत्यन्तीषु वरारोहे वारमुख्यासु सङ्घशः ।
नृपमौदुम्बरे पीठे स्वास्तीर्णव्याघ्रचर्मणि ॥ ३ ॥

उपवेश्य प्राङ्मुखन्तं बृहत्सामेति मन्त्रतः ।
हैमं प्रतिसरम्बध्वा ह्यश्मनस्तेज इत्युमे ॥ ४ ॥

अञ्जनन्नेत्रयुगळे विन्यस्य तदनन्तरम् ।
इन्द्रबुद्ध्या नृपन्ध्यात्वा गन्धमाल्यैर्विभूषणैः ॥ ५ ॥

अलङ्कृत्य घटन्दध्ना पूर्णमादाय देशिकः ।
साकं पुरोधसा दक्षिणावर्तेन वरानने ॥ ६ ॥

शङ्खेन तु सुशुभ्रेण तद्दध्ना पूर्वभूभुजः ।
शिरस्युरुयशःप्राप्त्यै ह्यभिषिञ्चेत्प्रदाक्षिणम् ॥ ७ ॥

दधिक्राव्ण इति प्रोच्य मन्त्रम्मधुरभाषिणि ।
प्राचीतिष्ठत्यादधतीत्युक्त्वा तत्परमद्रिजे ॥ ८ ॥

तत्पीठन्दक्षिणे भागे विन्यस्य नृपकुञ्जरम् ।
तत्रोपवेश्य स गुरुर्दक्षिणाभिमुखं प्रिये ॥ ९ ॥

गन्धमाल्यैरलङ्कृत्य ध्यात्वा तं समवर्तिनम् ।
मधुनाऽऽपूर्य वृषभश‍ृङ्गम्मदिरलोचने ॥ १० ॥

मधुवाता इति प्रोच्य मन्त्रन्तद्राजवक्षसि ।
अभिषिञ्चेत्प्रतापार्थन्देशिकस्तदनन्तरम् ॥ ११ ॥

तन्दक्षिणेति मन्त्रञ्च पठेत्प्रयतमानसः ।
तत्परन्तद्भद्रपीठं पश्चिमायान्दिशि प्रिये ॥ १२ ॥

विन्यस्य तत्र राजानमुपवेश्य स देशिकः ।
पश्चिमाभिमुखङ्कृत्वा ह्यलङ्कृत्याम्बरादिभिः ॥ १३ ॥

राजानं वरुणन्ध्यात्वा गोमुख्यादाय वै घृतम् ।
पात्र्या पापप्रशान्त्यर्थं पार्थिवस्योदरे प्रिये ॥ १४ ॥

अभिषिञ्चेच्छुक्रमसीत्येतन्मन्त्रेण तत्परम् ।
तं प्रत्यञ्चमिति प्रोच्य मन्त्रम्मन्त्रस्वरूपिणि ॥ १५ ॥

तत्परन्तद्भद्रपीठं विन्यस्योत्तरदिश्युमे ।
तत्रोपवेश्य राजानमभ्यर्च्य कुसुमादिभिः ॥ १६ ॥

तं सोममेव सञ्चिन्त्य जलकुम्भजलेन तु ।
अभिषिञ्चेद्गुरुस्सम्यक्तमुदुम्बरशाखया ॥ १७ ॥

अब्लिङ्गैर्वारुणैर्मन्त्रैः पावमानीभिरेव च ।
ऋग्भिश्चैव वरारोहे तत्परं समुदीरयेत् ॥ १८ ॥

तमुदीच इति श्रेष्ठम्मन्त्रन्तत्परमाद्रिजे ।
तत्पीठं वेदिकामध्ये निधाय तदुपर्युमे ॥ १९ ॥

उपवेश्य महीपालमलङ्कृत्याम्बरादिभिः ।
जाम्बूनदमयम्पट्टम्फाले बध्वा वदेद्गुरुः ॥
देवि सोमेन राज्ञेति मन्त्रमत्यन्तपावनम् ॥ २० ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नृपपट्टाभिषेकप्रकारकथनन्नाम
द्विपञ्चाशः पटलः ॥

---

अथ त्रिपञ्चाशः पटलः ॥

॥ नृपपट्टबन्धस्वरूपनिरूपणम् ॥

श्रीशिवः—स्वरूपं पट्टबन्धस्य वक्ष्यामि तव पार्वति ।
सार्धैकाङ्गुलविस्तारमायतन्तु षडङ्गुलैः ॥ १ ॥

सुशिल्पिना कारयित्वा शुद्धस्वर्णेन तत्र तु ।
वक्ष्यमाणप्रकारेण विलिखेच्छ्लोकपञ्चकम् ॥ २ ॥

सुरैर्महीसुरैश्चैव पुरैवन्निर्णयः कृतः ।
यस्य कस्यापि नृपतेस्साम्राज्यङ्कर्तुमिच्छतः ॥ ३ ॥

यो दुष्टान् शिक्षितुं शिष्टान्परिपालयितुं क्षमः ।
गोदेवद्विजभक्तश्च पालयेत्स वसुन्धराम् ॥ ४ ॥

यो राजा वर्णसाङ्कर्यराहित्यमखिलाः प्रजाः ।
व्यवस्थापयितुं शक्तस्स राज्यङ्कर्तुमर्हति ॥ ५ ॥

यो रक्षणार्थं षष्ठांशमात्रं स्वीकर्तुमिच्छति ।
फलेद्विजक्षेत्रभवे स राज्यङ्कर्तुमर्हति ॥ ६ ॥

प्रजासुखे सुखं यस्य तत्क्लेशे क्लेशितश्च यः ।
योऽमोघक्रोधहर्षश्च स शास्ति हि वसुन्धराम् ॥ ७ ॥

सत्यन्दया दमश्शौचमहिंसौदार्यमार्जवम् ।
सन्ततं वर्तते यस्मिन्स महीम्पातुमर्हति ॥ ८ ॥

एवं सल्लिँख्य तत्पट्टे पुरोधाश्श्लोकपञ्चकम् ।
राज्ञे विज्ञाप्य तद्भाले बध्वा तत्पट्टमद्रिजे ॥ ९ ॥

आमूरजेतिमन्त्रेण ताडयित्वाथ दुन्दुभिम् ।
सलिलैर्हेमकुम्भस्थैः पुण्यतीर्थसमाहृतैः ॥ १० ॥

पुरोधा गुरुणा साकं होतृभिर्ब्रह्मणापि च ।
औदुम्बरार्द्रशाखाभिरेकहेळ्या हिमाद्रिजे ॥ ११ ॥

अब्लिङ्गैर्वारुणैर्मन्त्रैरभिषिच्य ततः परम् ।
दिव्याम्बरैर्दिव्यगन्धैर्दिव्यमाल्यैश्च तन्नृपम् ॥ १२ ॥

अलङ्कृत्यार्चितं विप्रैरानाय्याग्निसमप्रभम् ।
जाम्बूनदमयन्नानारत्नजालपरिष्कृतम् ॥ १३ ॥

किरीटं विन्यसेन्मूर्ध्नि सूक्तमायुष्यमुच्चरन् ।
पूर्णचन्द्रनिभञ्छत्रं हेमदण्डोपशोभितम् ॥ १४ ॥

अच्छमुक्तागुच्छरम्यं कयाचित्कमनीयया ।
कन्यया कञ्जपत्राक्ष्या तस्योपरि निवेशयेत् ॥ १५ ॥

यथाम्बुदा भावयन्तीत्येतन्मन्त्रमुदीरयेत् ।
ततो द्वाभ्याङ्कन्यकाभ्याङ्ग्राहयित्वा तु चामरे ॥ १६ ॥

शशाङ्ककरसङ्काशेत्येतन्मन्त्रमुदीरयन् ।
सम्यग्वीजयतं राज्ञः पार्श्वयोरिति चोदयेत् ॥ १७ ॥

एकया कन्यया रत्नकरण्डं वाहयेत्प्रिये ।
वेत्रखड्गावपरया धारयेद्धरणीभृतः ॥ १८ ॥

अन्यया कन्यया शश्वद्दर्शयेन्मणिदर्पणम् ।
एकान्नियोजयेत्कन्यां वहेतिजलकुण्डिकाम् ॥ १९ ॥

कलाचीन्धारयेत्येकाङ्कन्यकाम्प्रेरयेत्प्रिये ।
इत्येवमष्टकन्याभिः कारयित्वोपचारकान् ॥
ततः पट्टाभिषेकाङ्गत्तत्तद्दानानि कारयेत् ॥ २० ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नृपपट्टबन्धस्वरूपनिरूपणन्नाम
त्रिपञ्चाशः पटलः ॥

---

॥ अथ चतुःपञ्चाशः पटलः ॥

॥ नृपपट्टाभिषेकाङ्गदानस्वरूपनिरूपणम् ॥

श्रीशिवः—ततो राजा पुरस्कृत्य पुरोधसमतन्द्रितः ।
प्राणानायम्य सङ्कीर्त्य देशङ्कालञ्च तत्परम् ॥ १ ॥

ममारिष्टनिरासार्थमिष्टप्राप्त्यै मयाधुना ।
पितृपैतामहपदे स्थातुञ्च सकलार्थदे ॥ २ ॥

ममाधिकारसिद्ध्यर्थम्मया सङ्कल्पिते शुभे ।
अस्मिन्पट्टाभिषेकाख्ये कर्मण्यङ्गतयोदितम् ॥ ३ ॥

दिक्पालप्रतिमादानं लक्ष्मीनारायणस्य च ।
दानङ्गोभूहिरण्यादिदानानि विविधानि च ॥ ४ ॥

करिष्येहमिति प्रोच्य कृत्वा दानानि तानि तु ।
दानसाद्गुण्यसिद्ध्यर्थमृत्विग्भ्यो गुरवेपि च ॥ ५ ॥

सहस्रदक्षिणाङ्ग्रामान्रथानश्वान्गजानपि ।
दासी दासांश्च बहुशो दत्वा तत्परमद्रिजे ॥ ६ ॥

गुरुम्पुरोहितञ्चैव सम्पूज्य बहुमान्य च ।
ततो बहिर्विनिर्गत्य मण्टपात्पृथिवीपतिः ॥ ७ ॥

दीनान्ध कृपणान्देवि तोषयित्वा यथोचितम् ।
पुरोधसोक्तमार्गेण रथसूक्तेन पार्थिवः ॥ ८ ॥

अभिमन्त्र्य रथम्पश्चादश्वसूक्तेन वाजिनम् ।
गजञ्च गजसूक्तेन ह्यभिमन्त्र्य स्वलङ्कृतः ॥ ९ ॥

इभमारुह्यौपवाह्यञ्जयघोषपुरस्सरम् ।
वन्दिभिर्नन्द्यमानस्सन्नुद्बाहुभिरुदारधीः ॥ १० ॥

रथैर्ध्वजैस्तोरणैश्च सर्वतस्समलङ्कृतम् ।
पुरं प्रदक्षिणीकृत्य पौरैरालोकितः प्रिये ॥ ११ ॥

अन्तःपुरं प्रविश्याथ महिष्याचाभिषिक्तया ।
साकं रत्नमये पीठे समासीनो हृदम्बुजे ॥ १२ ॥

साम्राज्यलक्ष्मीमसकृच्चिन्तयन्निष्ट देवताम् ।
कर्पूरदीपैः कनकपात्रस्थैः कामिनीजनैः ॥ १३ ॥

## ॥ अथ पञ्चपञ्चाशः पटलः ॥

### ॥ पुरातननृपपट्टाभिषेकस्वरूपनिरूपणम् ॥

पार्वती—शम्भो शङ्कर सर्वज्ञ त्वन्मुखाम्भोजतश्शुभम् ।
नृपपट्टाभिषेकस्य विधानं विधिवन्दित ॥ १ ॥

इदानीं श्रोतुमिच्छामि येऽभिषिक्ता महीतले ।
पुरा महर्षिभिर्भूपास्तान्वै कथय मेऽनघ ॥ २ ॥

श्रीशिवः—देवि सम्यक्त्वया प्रश्नः कृतो लोकहितेच्छया ।
प्रश्नानुरूपं वक्ष्यामि शृणूत्तरमतन्द्रिता ॥ ३ ॥

ऋग्ब्राह्मणेऽभिविहिता पुराणेषु च केषु चित् ।
अभिषिक्ता महीपाला मुनिभिस्तान्वदामि ते ॥ ४ ॥

येषां श्रुत्वा पुरावृत्तं राज्ञां सकृदगात्मजे ।
आजन्मकृतपापौघैस्सद्यो मुच्येत मानवः ॥ ५ ॥

तुरेण कावषेयेण पुरा पारिक्षितः प्रिये ।
अभिषिक्तो यथाशास्त्रं पार्थिवो जनमेजयः ॥ ६ ॥

जित्वा समन्ततः पृथ्वीं कृत्वा वाजिमखान्बहून् ।
लीलया पालयामास नयेन निखिलाः प्रजाः ॥ ७ ॥

भार्गवेण पुरा देवि च्यवनेन महात्मना ।
शार्यातो मानवो नाम राजा परमधार्मिकः ॥ ८ ॥

अभिषिक्तो विधानेन भुवमाक्रम्य लीलया ।
कृत्वाऽश्वमेधम्परमम्पदं प्राप्त इति श्रुतम् ॥ ९ ॥

वाजिरत्नायनेनाथ मुनिना सोमशुष्मणा ।
सात्राजितश्शतानीकनामा राजा यथाविधि ॥ १० ॥

अभिषिक्तः पुरा देवि पृथिवीं स्ववशन्नयन् ।
साम्राज्यं सत्वरं प्राप्य कृत्वा वाजिमखान्बहून् ॥११॥

सायुज्यम्ब्रह्मणः प्राप्त इति श्रुतमगात्मजे ।
पुराऽम्बष्ठ्यः पर्वतेन नारदेन च भामिनि ॥ १२ ॥

अभिषिक्तो यथाशास्त्रङ्कृत्वा राजन्वतीम्भुवम् ।
जित्वा सपत्नसन्दोहमिष्ट्वा वाजिमखेन च ॥ १३ ॥

देहान्ते ब्रह्मसायुज्यम्मया गत इति श्रुतम् ।
ताभ्यामेव युधां श्रेष्ठिरौग्रसैन्यः प्रतापवान् ॥ १४ ॥

पुराऽभिषिक्तस्सुश्रोणि परिक्रम्यावनीन्नृपः ।
जित्वा सपत्नसन्दोहङ्कृत्वा वाजिमखम्पुनः ॥ १५ ॥

जगामाकुण्ठवैकुण्ठमिति वार्ता श्रुता मया ।
भौवनो विश्वकर्माख्यः कश्यपेन महात्मना ॥ १६ ॥

अभिषिक्तः पुरा देवि परिक्रम्याखिलाम्महीम् ।
जित्वाऽरिनिवहङ्कृत्वा हयमेधं यथाविधि ॥ १७ ॥

सत्यं ज्ञानमनन्तञ्चेत्युदितम्ब्रह्मवादिभिः ।
ध्यायन्ब्रह्महृदम्भोजे तस्मिल्लीन इति श्रुतम् ॥ १८ ॥

सुदाः पैजवनो देवि वसिष्ठेन महर्षिणा ।
अभिषिक्तोऽचिरेणैव परिक्रम्यावनीमरीन् ॥ १९ ॥

विजित्य समरे चेष्ट्वा हयमधेन पार्थिवः ।
कृत्वा ब्रह्मानुसन्धानं स्वरूपङ्गतवानुमे ॥ २० ॥

संवर्तेन पुरा देवि मरुत्तो नाम पार्थिवः ।
अभिषिक्तो महीञ्जित्वा कृत्वा वाजिमखान्बहून् ॥२१

भुक्त्वा बहुविधान्भोगान्गतो लोकाननुत्तमान् ।
आत्रेयेणाभिषिक्तोऽङ्गस्सर्वतः पृथिवीमिमाम् ॥ २२ ॥

जित्वा वाजिमखान्कृत्वा गतो लोकाननुत्तमान् ।
दक्षिणावर्तशङ्खेन श्रीकृष्णेन महात्मना ॥ २३ ॥

अभिषिक्तो यथाशास्त्रन्धर्ममूर्तिर्युधिष्ठिरः ।
कृत्वा बहुविधान्यज्ञान्पालयित्वाऽखिलाः प्रजाः ॥२४॥

सशरीरो गतस्स्वर्गमिति श्रुतमगात्मजे ।
रामोऽपि परमोदारस्सत्यसन्धोऽनसूयकः ॥ २५ ॥

इक्ष्वाकुवंशतिलकस्सर्वभूतहिते रतः ।
वसिष्ठवामदेवाद्यैरभिषिक्तो महात्मभिः ॥ २६ ॥

दशवर्षसहस्राणि दशवर्षशतानि च ।
राज्यं सम्प्राप्य सकलाः प्रजाश्च परिपाल्य वै ॥ २७ ॥

पुनस्स्वं सच्चिदानन्दस्वरूपं रूपमास्थितः ।
इन्द्रोऽपि देवैरखिलैर्बृहस्पतिपुरोगमैः ॥ २८ ॥

अभिषिक्तः पुरा देवि विमुक्तो वृत्रहत्यया ।
सम्प्राप्य सकलैश्वर्याण्यतिवेलमतान्द्रितः ॥ २९ ॥

अद्याप्यखिलदेवैस्तु साकं साम्राज्यसम्पदम् ।
अनुभुङ्क्तेऽद्रिसम्भूते शच्या सह पुरन्दरः ॥ ३० ॥

एवमन्ये नृपतयः ययातिनहुषादयः ।
अभिषिक्ताः पुरोधोभिर्मुनिभिश्च महात्मभिः ॥ ३१ ॥

साम्राज्यम्प्राप्य सुचिरं पालयित्वा वसुन्धराम् ।
देहान्ते दिव्यमारुह्य विमानं सूर्यसन्निभम् ॥ ३२ ॥

हंसबर्हिणसंयुक्तं प्राताश्च परमाङ्गतिम् ।
इत्येवन्ते निगादितः पुरातनमहीभुजाम ॥
पट्टाभिषेचनविधिः किमन्यच्छ्रोतुमिच्छसि ॥ ३३ ॥

इत्याकाशभैरवाख्ये महाशिवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
पुरातननृपपट्टाभिषेकस्वरूपवर्णनन्नाम
पञ्चपञ्चाशः पटलः ॥



॥ अथ षट्पञ्चाशः पटलः ॥

॥ नृपनैमित्तिकाभिषेकार्थङ्कर्तव्यमण्टपकुण्डवेदिकास्वरूपकथनम् ॥

पार्वती—शिव सर्वज्ञ भगवन्स्त्वन्मुखाम्भोजतश्श्रुतः ।
नृपपट्टाभिषेकस्य विधिर्विधिमतां वर ॥ १ ॥

नैमित्तिकाभिषेकस्य विधानमधुनोच्यताम् ।
श्रीशिवः—सम्यगुक्तन्त्वया देवि लोकरक्षणदक्षया ॥ २ ॥

प्रश्नानुरूपं वक्ष्यामि शृणूत्तरमतन्द्रिता ।
प्रतिवर्षम्प्रकर्तव्यं राज्ञो जन्मदिने शुभे ॥ ३ ॥

अभिषेचनकर्मेदम्प्राज्ञेन तु पुरोधसा ।
यदा पुरे वा राष्टे वा दुर्निमित्तसमुद्भवः ॥ ४ ॥

महामारी मसूरी वा यदा वा बाधते प्रजाः ।
यदा वा पीड्यते देशः पुरं वा शत्रुराजभिः ॥ ५ ॥

यदा वा नृपनक्षत्रमाक्रान्तन्दारुणैर्ग्रहैः ।
यदा वा नृपनक्षत्रे ग्रहकूटो वरानने ॥ ६ ॥

यदा वा मालिकाकारग्रहयोगस्तुलादिषु ।
षट्सु राशिषु मेषादिष्वथ वा षट्सु राशिषु ॥ ७ ॥

दशाच्छिद्रो यदा राज्ञः क्रूरग्रहदशा यदा ।
यदा रोगादिपीडा स्यात्पार्थिवस्य भयङ्करी ॥ ८ ॥

यदाऽपमृत्युभीतिर्वा यदा दुस्स्वप्नदर्शनम् ।
तदा पुरोधसा राज्ञः कर्तव्यमभिषेचनम् ॥ ९ ॥

निमित्तानन्तरङ्कार्यन्नैमित्तिकमिति स्मृतम् ।
मलमूढादिरहिते शुभमासे शुभे दिने ॥ १० ॥

मण्टपङ्कारयेद्रम्यमभिषेकार्थमद्रिजे ।
दशहस्तप्रमाणेन चतुरश्रं समस्थलम् ॥ ११ ॥

षोडशस्तम्भगम्भीरञ्चतुर्द्वारं सुतोरणम् ।
वितस्तिमात्रोन्नतया वेद्या सर्वत्र संयुतम् ॥ १२ ॥

परितो दर्भमालाभिर्वेष्टितन्नारिकेलजैः ।
वंशजैर्वा कटैरूर्ध्वमाच्छादितमगात्मजे ॥ १३ ॥

लोकपालपताकाभिर्ध्वजेन च विराजितम् ।
प्रतिद्वारम्प्रविन्यस्तपूर्णकुम्भमनोहरम् ॥ १४ ॥

नानाङ्कुरशरावैश्च सर्वतस्समधिष्ठितम् ।
एवम्प्रकल्पितस्यास्य मण्टपस्य तु मध्यमे ॥ १५ ॥

पञ्चहस्तप्रमाणेन कारयेद्वेदिकां शुभाम् ।
पादाधिककरोत्सेधां स्निग्धामादर्शबिम्बवत् ॥ १६ ॥

तद्वेद्याः पश्चिमे भागे होमार्थं हस्तसम्मितम् ।
कुण्डं प्रकल्पयेद्रम्यम्मेखलात्रयशोभितम् ॥ १७ ॥

अश्वत्थदलसङ्काशद्वादशाङ्गुलयोनिकम् ।
एवङ्कुण्डं वेदिकाञ्च कारयित्वा सुशिल्पिभिः ॥ १८ ॥

लेपयित्वा गोमयेन रजोभिः पञ्चवर्णकैः ।
अलङ्कृत्य पुरोधास्तदाभिषेचनिकन्दिनम् ॥ १९ ॥

प्रतीक्षमाणः प्रयतः पार्थिवस्य शुभं हृदि ।
चिन्तयन्निवसेद्देवि पौनःपुन्येन सादरम् ॥ २० ॥

एवं राजाभिषेकार्थं कर्तव्यस्य तलोदरि ।
मण्टपस्य स्वरूपन्ते सम्यक्सङ्कथितं मया ॥ २१ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नृपनैमित्तिकाभिषेकार्थङ्कर्तव्यमण्टपकुण्डवेदिकास्वरूपकथनन्नाम
षट्पञ्चाशः पटलः ॥

अथ सप्तपञ्चाशः पटलः ॥

नृपनैमित्तिकाभिषेकार्थमाचार्यर्त्विग्वरणम् ॥

श्रीशिवः—अथ राजा स्वानुकूले दिने स्वस्याभिषेचनम् ।
निश्चित्य तस्मात्पूर्वस्मिन् दिने प्रातस्समुत्थितः ॥ १ ॥

स्नात्वा नद्यां तटाके वा परिधायाथ वाससी ।
धृत्वोर्ध्वपुण्ड्रमलिके कृत्वा तात्कालिकीं क्रियाम् ॥ २ ॥

आरुह्य शिबिकां राजा प्रविश्य निजमन्दिरम् ।
पुरोहितम्पुरस्कृत्य तस्यानुज्ञामवाप्य च ॥ ३ ॥

प्राणानायम्य सङ्कीर्त्य देशङ्कालञ्च तत्परम् ।
मम पापक्षयार्थाय सर्वाभीष्टार्थसिद्धये ॥ ४ ॥

साम्राज्यस्थैर्यसिद्ध्यर्थं श्वः पुण्यदिवसे मया ।
चिकीर्षिताभिषेकस्य ह्यङ्गत्वेन द्विजातिभिः ॥ ५ ॥

पुण्याहं वाचयित्वाऽद्य नान्दीश्राद्धं करोम्यहम् ।
इति सङ्कल्प्य पुण्याहङ्कारयित्वा द्विजन्मभिः ॥ ६ ॥

नान्दीश्राद्धं स्वयङ्कृत्वा वृणुयादृत्विजो गुरुम् ।
ब्रह्माणं वक्ष्यमाणेन प्रकारेण वरानने ॥ ७ ॥

मया सङ्कल्पिते सम्यगभिषेकाख्यकर्मणि ।
पूजाहोमादिकङ्कर्तुम्परैः कारयितुन्द्विज ॥ ८ ॥

विद्याविनयसम्पन्नन्त्वामाचार्यं वृणीमहे ।
अस्मिन्कर्मणि दिक्पालहोमङ्कर्तुन्द्विजोत्तमाः ॥ ९ ॥

भवतोऽष्टावृत्विजश्च वृणीमह इति ब्रुवन् ।
ब्राह्मणं वृणुयात्सर्वकर्मसन्धानासिद्धये ॥ १० ॥

एवं वृत्वा तु तान्विप्रान्भूपगैरम्बरादिभिः ।
तोषयित्वा पूजयित्वा मधुपर्केण तान्द्विजान् ॥ ११ ॥

साकन्तूर्यनिनादेन ह्यारोप्य शिबिकादिषु ।
स्वयम्पश्चाद्गजारूढो जयघोषपुरस्सरम् ॥ १२ ॥

वन्दिभिर्नन्द्यमानस्सन्प्रापयित्वाऽथ मण्टपम् ।
पश्चिमद्वारमार्गेण मण्टपान्तः प्रविश्य तु ॥ १३ ॥

आचार्यमृत्विजश्चैव ब्रह्माणञ्च पुरोधसम् ।
त्रिःप्रदक्षिणमावृत्य वदेदेवम्महीपतिः ॥ १४ ॥

भो भो द्विजवरा यूयं वेदशास्त्रविशारदाः ।
कृपालवस्सत्यसन्धा धर्मज्ञाश्च जितेन्द्रियाः ॥ १५ ॥

मया चिकीर्षिते सम्यगभिषेकाख्यकर्मणि ।
मन्त्रलोपः क्रियालोपो यथेदानीन्न सम्भवेत् ॥ १६ ॥

वर्तितव्यन्तथा सर्वैर्युष्माभिरनसूयकैः ।
मयाऽभिषेककर्माङ्गपूजाहोमार्थमादरात् ॥ १७ ॥

सम्पादितं वस्तुजातं फलपुष्पघृतादिकम् ।
तस्यै तस्यै देवतायै न ममेत्युच्चरन्नृपः ॥ १८ ॥

पुनः प्रदक्षिणीकृत्य नत्वा तान्द्विजपुङ्गवान् ।
पुरोहितन्तान्निकटे विनिवेश्य महीपतिः ॥ १९ ॥

निर्गत्य मण्टपात्तस्माद्भद्रेभमधिरुह्य वै ।
तूर्यघोषेण महता जयघोषेण चारुणा ॥ २० ॥

आक्रान्तेषु दिगन्तेषु प्रविश्य निजमन्दिरम् ।
स्वेष्टदेवं हृदि ध्यायन्पौनःपुन्येन पार्थिवः ॥ २१ ॥

पाषण्डपतितम्लेच्छनीचसम्भाषणादिकम् ।
वर्जयित्वा मौनशीलो ध्यानयोगं समाश्रितः ॥ २२ ॥

यावत्तत्कर्मसम्पूर्तिस्तावदेवं वसेन्नृपः ।
एवन्नृपाभिषेकार्थङ्गुर्वादिवरणक्रमः ॥
सम्यङ्मया निगदितस्संक्षेपात्तव भामिनि ॥ २३ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां नृपनैमित्तिकाभिषेकाङ्गाचार्यर्त्विग्वरणस्वरूपनिरूपणन्नाम सप्तपञ्चाशः पटलः ॥

## ॥ अथ अष्टपञ्चाशः पटलः ॥

### ॥ नैमित्तिकाभिषेकार्थं कलशस्थापनम् ॥

श्रीशिवः—अथाचार्यस्सहर्त्विग्भिर्ब्राह्मणाच हिमाद्रिजे ।
विधाय मण्टपे तस्मिन्वास्तुपूजां यथाविधि ॥ १ ॥

ततः पठन्याः प्रवत इत्येतामृचमुत्तमाम् ।
गत्वा नदीन्तु प्रसुव आप इत्युच्चरन्नृचम् ॥ २ ॥

आपूर्यतन्नदीतोयं हेमकुम्भेषु पञ्चसु ।
तानारोप्य गजस्कन्धेष्वग्रतो वरवर्णिनि ॥ ३ ॥

नदत्सु पञ्चवाद्येषु भेरीकाहलिकादिषु ।
वारमुख्यासु नृत्यन्तीष्वनेकाभिनयैस्सह ॥ ४ ॥

प्राप्यतन्मण्टपन्देवि ब्रह्मघोषपुरस्सरम् ।
तांस्तीर्थकुम्भानेकत्र विन्यस्य तदनन्तरम् ॥ ५ ॥

वेदीमध्ये भारमात्रैस्सुशुभ्रैश्शालितण्डुलैः ।
चतुरश्रां पुनर्वेदिं रचयित्वा नवान्नव ॥ ६ ॥

ताम्रान्वा मृण्मयान्वाऽपिकुम्भाँल्लक्षणलक्षितान् ।
सुधाधवलितान्सूक्ष्मतन्तुभिः परिवेष्टितान् ॥ ७ ॥

आनीय मध्ये तद्वेद्यासेकं विन्यस्य दिक्षु च ।
अष्टावष्टसु संस्थाप्य प्रागादिषु यथाक्रमम् ॥ ८ ॥

देशिकःप्राङ्मुखो भूत्वा प्राणायामपुरस्सरम् ।
सङ्कीर्त्य देशङ्कालञ्च राज्ञा धर्मानुवर्तिना ॥ ९ ॥

नाम गोत्रविशिष्टेन स्वस्यानिष्टनिवृत्तये ।
इष्टप्राप्त्यै च देवेशि साम्राज्यस्थैर्यसिद्धये ॥ १० ॥

सङ्कल्पितेऽभिषेकाख्ये कर्मण्यस्मिन्यथाविधि ।
कलशस्थापनन्तत्तन्मन्त्रैरद्य करोम्यहम् ॥ ११ ॥

इति सङ्कल्प्य तान्कुम्भान्प्रतिष्ठासीति मन्त्रतः ।
प्रतिष्ठाप्य मृदः पञ्चपल्लवाःपञ्च च त्वचः ॥ १२ ॥

रत्नानि पञ्चगव्यानि पञ्च सौगन्धिकानि च ।
पञ्चामृतानि नीवारं वैणवन्धान्यमेव च ॥ १३ ॥

दूर्वाः फलानि निक्षिप्य तत्तन्मन्त्रैर्यथाक्रमम् ।
हेमकुम्भाहृतनदीतोयेन कलशान्नव ॥ १४ ॥

सम्पूर्य तेषु कुम्भेषु इमम्म इति मन्त्रतः ।
गङ्गाञ्च यमुनाञ्चैव शतद्रुञ्च सरस्वतीम् ॥ १५ ॥

असिक्नीञ्चैव कावेरीङ्कृष्णवेणीञ्च नर्मदाम् ।
गोदावरीञ्च तापिञ्च ताम्रपर्णीम्महानदीम् ॥ १६ ॥

सागरान्सप्त चावाह्य तीर्थान्यन्यानि तत्परम् ।
सूर्यमण्डलमध्यस्थान्याकृष्यावाह्य तज्जले ॥ १७ ॥

वरुणन्तेषु कुम्भेषु समावाह्य जलाधिपम् ।
वस्त्रैरावेष्ट्य तान्कुम्भान्सकूर्चान्व्याममालकैः ॥ १८ ॥

फलानि नालिकेरस्य निक्षिप्य कलशेष्वथ ।
पूजाया गन्धपुष्पादिसामग्रीं हवनस्य च ॥ १९ ॥

समिदाज्यस्रुक्स्रुवादिसामग्रीञ्च यथाबलम् ।
सम्पाद्येन्द्रादिदिक्पालप्रतिमा लक्षणान्विताः ॥ २० ॥

पलत्रयप्रमाणेन तदर्धार्धेन वा कृताः ।
सुवर्णेन तथा विष्णोः प्रतिमान्द्विगुणाम्प्रिये ॥ २१ ॥

पञ्चामृतैः पञ्चगव्यैस्संशोध्य स्वपुरो भुवि ।
निधायैवं विधायाथ पूजासङ्कल्पमाचरेत् ॥ २२ ॥

एवन्नृपाभिषेकार्थङ्कलशस्थापनक्रमः ।
सम्यगुक्तस्तवापर्णे सङ्ग्रहेण मयाऽधुना ॥ २३ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नृपनैमित्तिकाभिषेकप्रयुक्तकलशस्थापनस्वरूपनिरूपणन्नाम
अष्टपञ्चाशः पटलः ॥

---

## ॥ अथैकोनषष्टितमः पटलः ॥

## ॥ नृपनैमित्तिकाभिषेककर्तव्यदिक्पालपूजाहोमस्वरूपम् ॥

श्रीशिवः—अथाचार्यो देशकालौ सङ्कीर्त्यर्त्विक्समन्वितः ।
प्रतिष्ठितेषु कुम्भेषु क्षौमवस्त्राणि पार्वति ॥ १ ॥

प्रसार्य तेषु दिक्पालप्रतिमाश्चाष्ट चाष्टसु ।
विन्यस्य मध्यमे कुम्भे विष्णुमूर्तिन्निधाय तु ॥ २ ॥

राज्ञा सङ्कल्पिते चास्मिन्नभिषेकाख्यकर्मणि ।
दिक्पालप्रतिमापूजाङ्कारयिष्यामि होतृभिः ॥ ३ ॥

इति सङ्कल्प्य दिक्पालप्रतिमानां यथाविधि ।
प्राणप्रतिष्ठाङ्कृत्वाथ विष्णुमूर्तेरनन्तरम् ॥ ४ ॥

कृत्वा सुस्थापनन्देवि मन्त्रैर्वैदिकतान्त्रिकैः ।
पूजयित्वा पौरुषेण सूक्तेन विधिपूर्वकम् ॥ ५ ॥

दिव्यगन्धैर्दिव्यमाल्यैर्नैवेद्यैर्विविधैरपि ।
ततो दिक्पालपूजाञ्च मन्त्रैस्तत्तत्प्रकाशकैः ॥ ६ ॥

वैदिकैस्तान्त्रिकैश्चैव पुराणोक्तैर्हिमाद्रिजे ।
ऋत्विग्भिः कारयित्वाऽथ तत्तत्सूक्तजपानपि ॥ ७ ॥

कारयित्वाऽथ तैरेव जपित्वा स्वयमप्युमे ।
वैष्णवानि च सूक्तानि कानिचिच्छ्रद्धयाऽन्वितः ॥८॥

कुण्डेऽनलम्प्रतिष्ठाप्य स्वगृह्योक्तविधानतः ।
चक्षुरन्तङ्कर्म कृत्वा प्रधानं होममाचरेत् ॥ ९ ॥

ब्रह्मवृक्षसमिद्भिश्च परमान्नेन सर्पिषा ।
तिलैश्चैव प्रतिद्रव्यमष्टोत्तरसहस्रकम् ॥ १० ॥

अष्टोत्तरशतं वाऽपि तद्विष्णोरिति मन्त्रतः ।
हुत्वाऽऽहुतीर्होतृभिश्च साकन्देशिकसत्तमः ॥ ११ ॥

पश्चात्तैरेव तत्कुण्डे द्रव्यैः पूर्वोदितैः प्रिये ।
दिक्पालमन्त्रैः प्रत्येकमष्टोत्तरशताहुतीः ॥ १२ ॥

कारयित्वा ततस्स्विष्टकृदादिकमगात्मजे ।
होमशेषं समाप्याथ पुनःपूजां यथाविधि ॥ १३ ॥

कृत्वा तत्तद्दैवतानाङ्गन्धपुष्पफलादिभिः ।
पूर्णाहुतिं विना सर्वमेवङ्कृत्वा ततःपरम् ॥ १४ ॥

तत्तद्दिक्पालसूक्तानि जपध्वमिति देशिकः ।
ऋत्विजो विनियुज्याथ स्वयं सूक्तानि कानिचित् ॥ १५

वैष्णवानि जपंस्तिष्ठेत्प्रार्थयन्मङ्गळम्प्रभोः ।
ततःपुरोधा होमार्थम्मण्टपे कुत्रचित्स्थले ॥ १६ ॥

प्राणानायम्य सङ्कीर्त्य देशङ्कालञ्च भामिनि ।
स्वगृह्योक्तविधानेन प्रतिष्ठाप्यानलन्ततः ॥ १७ ॥

तदग्नेस्तु पुरोदेशे कलशन्नूत्नमव्रणम् ।
प्रतिष्ठाप्याराधनञ्च कृत्वा पूर्ववदादरात् ॥ १८ ॥

तस्मिन्नब्देवतान्देवीं वरुणञ्च यथाक्रमम् ।
अब्लिङ्गैर्वारुणैर्मन्त्रैरावाह्याराध्य तत्परम् ॥ १९ ॥

पुनस्तदग्नेर्निकटे स्थित्वा राजपुरोहितः ।
चक्षुरन्तङ्कर्म कृत्वा प्रधानं होममाचरेत् ॥ २० ॥

स्थालीपाकविधानेन चरुणा पाचिते ततः ।
आपोहिष्ठेति नवभिः ऋग्भिर्हुत्वा हिमाद्रिजे ॥ २१ ॥

पञ्चवारन्त्रिवारं वा ह्युद्दिश्याब्देवताम्प्रिये ।
तत्त्वायामीति मन्त्रेण वरुणाय च तञ्चरुम् ॥ २२ ॥

हुत्वाऽऽज्यमिश्रितन्तद्वदष्टाविंशतिसङ्ख्यया ।
होमशेषं समाप्याथ सूक्तान्यब्दैवतान्युमे ॥ २३ ॥

वारुणानि च सूक्तानि जपंस्तिष्ठेत्समाहितः ॥
एवन्नृपाभिषेकार्थम्पूजाहोमादिकम्मया ॥
कथितङ्कर्म सुश्रोणि संक्षेपेण तवाधुना ॥ २४ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नृपाभिषेककर्तव्यदिक्पालपूजाहोमादिस्वरूपनिरूपणन्नाम
एकोनषष्टितमःपटलः ॥

---

## अथ षष्टितमः पटलः ॥

### नृपाभिषेकसंरम्भस्वरूपकथनम् ॥

श्रीशिवः—ततः पुरोधास्तद्राज्ञो निकटम्प्राप्य सत्वरम् ।
राज्ञे विज्ञापयेत्सर्वं वक्ष्यमाणक्रमेण तु ॥ १ ॥

भो भूवलारे विजितनिखिलारे त्वयाऽधुना ।
वृतस्सदेशिकस्सर्त्विग्ब्रह्मणा च समन्वितः ॥ २ ॥

श्वःकर्तव्याभिषेकाङ्गपूजाहोमादिकर्म यत् ।
तत्सर्वङ्कृतवान्देव यथाशास्त्रं समाहितः ॥ ३ ॥

श्वः प्रभाते त्वया राजन्नभिषेकार्थमादरात् ।
आगन्तव्यमिति प्रोच्य पुनः प्राप्यतु मण्टपम् ॥ ४ ॥

तां रात्रिमृत्विगाचार्यब्रह्मभिस्सह भामिनि ।
अतिवाह्य पुरोधास्तु पुराणपठनादिभिः ॥ ५ ॥

ततःप्रभाते स्नानादिकर्म कर्तव्यमद्रिजे ।
कृत्वा नृपाभिषेकार्थन्दारुणौदुम्बरेण तु ॥ ६ ॥

निर्मितम्भद्रपीठन्तन्मण्टपे विनिवेश्य तु ।
तस्मिन्प्रसार्य त्वैणेयञ्चर्म वैयाघ्रमेव वा ॥ ७ ॥

प्राग्ग्रीवमूर्ध्वलोमाथ शाखामौदुम्बरीन्तथा ।
शङ्खञ्च दक्षिणावर्तन्दूर्वाङ्गोरोचनन्तथा ॥ ८ ॥

तद्वच्च गोमुखम्पात्रं शुद्धस्वर्णविनिर्मितम् ।
धौतवस्त्रद्वयङ्गन्धान्पुष्पाणि विविधानि च ॥ ९ ॥

ताम्बूलानि च चित्राणि दधि क्षीरं घृतम्मधु ।
अक्षतांश्चैव सम्पाद्य तत्र तत्र निधाय तु ॥ १० ॥

राजागमनमाकांक्षंस्तत्र तिष्ठेत्पुरोहितः ।
ततो राज्ञा स्वानुकूलं लग्नन्निश्चित्य पार्वति ॥ ११ ॥

तल्लग्नात्पूर्वमेवाच्छैर्हैमकुम्भस्थवारिभिः ।
स्नापितो वाससी धृत्वा धौते धृत्वोर्ध्वपुण्ड्रकम् ॥ १२॥

साम्राज्यलक्ष्मीं सम्पूज्य नत्वा चात्मेष्टदेवताम् ।
शङ्खदुन्दुभिनिर्घोषैर्जयघोषैश्च वन्दिनाम् ॥ १३ ॥

आलोकशब्दैर्गम्भीरैर्वेत्रहस्तसमीरितैः ।
साकम्बहिर्विनिर्गत्य नगरान्तःसन्निभाकृतिम् ॥ १४ ॥

समारुह्य सहस्रांशुरुदयाद्रिमिव प्रिये ।
तन्मण्टपस्य निकटम्प्राप्य भूमिपुरन्दरः ॥ १५ ॥

अन्तःप्रविश्य तान्विप्रानाचार्यादीन्पुरोहितम् ।
नत्वा प्रदक्षिणीकृत्य दत्वा पुष्पाञ्जलीनपि ॥
हृदि बद्धाञ्जलिपुटो नम्रस्तिष्ठेत्तदग्रतः ॥ १६ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नृपाभिषेकसंरम्भस्वरूपनिरूपणन्नाम
षष्टितम पटल ॥

---

## अथैकषष्टितम पटल ॥

### नृपाभिषेककर्मकलापनिरूपणम् ॥

श्रीशिवः—अथ राजा शुभे लग्ने पुरस्कृत्य पुरोहितम् ।
प्राङ्मुखः प्रयतो भूत्वा प्राणायामपुरस्सरम् ॥ १ ॥

सङ्कीर्त्य देशङ्कालञ्च ममारिष्टनिवृत्तये ।
इष्टप्राप्त्यै च साम्राज्यलक्ष्म्याश्च स्थैर्यसिद्धये ॥ २ ॥

पुरे मदीये राष्ट्रे च क्षामक्षोभनिवृत्तये ।
प्रजानां क्षेमलाभार्थम्मया सङ्कल्पितं शुभे ॥ ३ ॥

अस्मिन्मदीयाभिषेककर्मण्यद्य यथाविधि ।
श्रीविष्णुपूजां दिक्पालपूजाञ्चैव यथाक्रमम् ॥ ४ ॥

करिष्यामीति सङ्कल्प्य पुरोहितमुखोद्गतैः ।
वैदिकैस्तान्त्रिकैर्मन्त्रैः पुराणोक्तैश्च भामिनि ॥ ५ ॥

सम्पूज्य वक्ष्यमाणैस्तु मन्त्रैः पुष्पाञ्जलिं क्षिपेत् ।
सर्वलोकशरण्याय विष्णवे प्रभविष्णवे ॥ ६ ॥

पुष्पाञ्जलिं प्रयच्छामि सर्वाभीष्टार्थसिद्धये ।
इन्द्राय देवराजाय प्राग्दिगीशाय वज्रिणे ॥ ७ ॥

पुष्पाञ्जलिं प्रयच्छामि शौर्यवीर्यविवृद्धये ।
वैश्वानराय वर्याय सर्वैश्वर्यप्रदाय च ॥ ८ ॥

पुष्पाञ्जलिं प्रयच्छामि ममैश्वर्यविवृद्धये ।
यमाय दक्षिणाशाधिपतये दण्डपाणये ॥ ९ ॥

अपमृत्युविनाशार्थन्ददामि कुसुमाञ्जलिम् ।
नमो रक्षोधिपतये नैर्ऋताय च खड्गिने ॥ १० ॥

रक्षोभयनिवृत्यर्थन्दास्यामि कुसुमाञ्जलिम् ।
पश्चिमाशाधिपतये वरुणाय च पाशिने ॥ ११ ॥

पुष्पाञ्जलिम्प्रदास्यामि चित्तनैर्मल्य सिद्धये ।
धाक्द्वारिणसंस्थाय वायवे ध्वजपाणये ॥ १२ ॥

अत्यन्तबलपुष्ट्यर्थन्दास्यामि कुसुमाञ्जलिम् ।
उत्तराशाधिपतये सोमाय च गदाभृते ॥ १३ ॥

अष्टैश्वर्यविवृद्ध्यर्थन्दास्यामि कुसुमाञ्जलिम् ।
ईशानाय वृषस्थाय शूलिने च कपालिने ॥ १४ ॥

ज्ञानविज्ञानसिद्ध्यर्थन्दास्यामि कुसुमाञ्जलिम् ।
एवं पुष्पाञ्जलिन्दत्त्वा तत्परन्देशिकेन तु ॥ १५ ॥

पूर्णाहुतिङ्कारयित्वा कृत्वाऽग्नेश्च प्रदक्षिणम् ।
नत्वा तदन्तिकन्यस्तभद्रपीठे मनोहरे ॥ १६ ॥

अभ्यर्चिते गन्धपुष्पैरास्तीर्णव्याघ्रचर्मणि ।
न्यस्तदृष्टिर्नृपस्तिष्ठेच्चिन्तयन्निष्टदेवताम् ॥ १७ ॥

ततः पुरोहितस्सार्त्विगाचार्यो ब्रह्मणा सह ।
उपवेश्य नृपम्भद्रपीठे रत्नपरिष्कृते ॥ १८ ॥

दिव्याम्बरैर्दिव्यगन्धैर्दिव्यमाल्यैश्च भूषणैः ।
अलङ्कृत्य महीपाले तस्मिन्विष्णुं सनातनम् ॥ १९ ॥

अष्टदिक्पालकांश्चैव समावाह्याथ तत्करे ।
हैमं प्रतिसरं बद्ध्वा बृहत्सामेति मन्त्रतः ॥ २० ॥

भो भो नृपवर श्रीमन् तव सर्वाघशान्तये ।
अलक्ष्मीपरिहारार्थं साम्राज्यस्थैर्यसिद्ध्ये ॥ २१ ॥

सर्वशत्रुक्षयार्थाय सर्वत्र विजयाय च ।
आरोग्यदृढकायत्वसिद्ध्यै चामितायुषे ॥ २२ ॥

अभिषेकङ्करिष्याम इति सङ्कल्प्य तत्परम् ।
शङ्खेन क्षीरमापूर्य मूर्ध्नि तत्पृथिवीपतेः ॥ २३ ॥

आप्यायस्वेति मन्त्रेण ह्यभिषिञ्चेयुरायुषे ।
ततस्तेनैव शङ्खेन दध्यादाय धराभृतः ॥ २४ ॥

उरोदेशे दधिक्राव्ण इति मन्त्रेण ते पुनः ।
अभिषिञ्चेयुरारोग्यसिद्ध्यै बुद्ध्येऽपि च ॥ २५ ॥

ततो गोमुखपात्रेण हैमेनादाय वै मधु ।
नाभिदेशे नरपतेर्मधुवातेति मन्त्रतः ॥ २६ ॥

अभिषिञ्चेयुरणिमाद्यष्टैश्वर्याभिवृद्धये ।
ततस्तेनैव पात्रेण घृतमादाय ते पुनः ॥ २७ ॥

पादयोः पार्थिवेन्द्रस्य घृतमग्नेरिति प्रिये ।
मन्त्रेण त्वभिषिञ्चेयुर्बलपुष्ट्यर्थमादरात् ॥ २८ ॥

ततो दिक्पालकुम्भस्थैर्विष्णुकुम्भस्थितैरपि ।
सलिलैस्सकलाभीष्टसिद्ध्यै तन्महीभृतः ॥ २९ ॥

सर्वाङ्गेषु सरोजाक्षि शाखयौदुम्बरोत्थया ।
दूर्वाभिराम्रशाखाभिराब्लिङ्गैर्वारुणैरपि ॥ ३० ॥

मन्त्रैश्च वैष्णवैस्सूक्तै रक्षोघ्नैश्च विशेषतः ।
दिक्पालसूक्तैरायुष्यसूक्तेन वरवर्णिनि ॥ ३१ ॥

सञ्जीवनाख्यसूक्तेन श्रीसूक्तेन विशेषतः ।
भूसूक्तेन च राजानमभिषिञ्चेयुरादरात् ॥ ३२ ॥

शङ्खदुन्दुभिनिर्घोषैर्जयघोषैश्च वन्दिनाम् ।
ब्राह्मणब्रह्मघोषैश्च पुरन्ध्रीगीतनिस्वनैः ॥ ३३ ॥

समाक्रान्ते दिशाचक्रे कृत्वैवमभिषेचनम् ।
युवं वस्त्राणीति मन्त्रमुच्चरन् तत्पुरोहितः ॥ ३४ ॥

क्षौमवस्त्रद्वयं दद्यादुपवीतञ्च काञ्चनम् ।
यज्ञोपवीतमित्येतन्मन्त्रेण मदिरेक्षणे ॥ ३५ ॥

दत्वा गन्धैश्च माल्यैश्च भूषणैर्विविधैरपि ।
अलङ्कृत्याथ तद्विष्णुदिक्पालप्रतिमादिकम् ॥ ३६ ॥

दापयित्वा द्विजातिभ्यस्समन्त्रं साक्षतोदकम् ।
गोभूतिलहिरण्यादिदानान्यपि विशेषतः ॥ ३७ ॥

कारयित्वाऽथ गुरवे दानसाद्गुण्यसिद्धये ।
शतनिष्कांस्तदर्धं वा दापयित्वाऽथ दक्षिणाम् ॥ ३८॥

ऋत्विग्भ्यो ब्रह्मणे चैव दापयेदर्थक्लृप्तितः ।
एवं पुरोधा दानानि कारत्विा महीभृता ॥ ३९ ॥

कन्याभिरष्टभिः पश्चाद्राजचिह्नानि कानिचित् ।
धारयेद्राजसिह्मस्य साम्राज्यस्थैर्यसिद्धये ॥ ४० ॥

एका छत्रमतिस्वच्छम्बिभृयात्तस्य मूर्धनि ।
सितचामरधारिण्यौ द्वे कन्ये तस्य पार्श्वयोः ॥ ४१ ॥

कलाचीम्बिभृयादेका ह्येका च जलकुण्डिकाम् ।
भवेदेका वेत्रधरा स्यादेका पादुकाधरा ॥ ४२ ॥

करण्डवाहिन्यप्येका भवेत्तस्य महीभृतः ।
ततश्श्रिये जात इति मन्त्रेण तु महीपतिम् ॥ ४३ ॥

नीराजयित्वा कर्पूरदीपैः कनकपात्रगैः ।
पुरन्ध्रीभिस्ततः पश्चात्साम्राज्यम्भोज्यमित्युमे ॥ ४४ ॥

ऋग्ब्राह्मणेन राजानमभिमन्त्र्य पुरोहितः ।
तत्परं पर्वत इवाविचाचलिरिति प्रिये ॥ ४५ ॥

मन्त्रेण वर्धयित्वा तं ऋध्यास्मेति च मन्त्रतः ।
दत्वाऽऽशीरक्षतात्राज्ञे बन्धुमित्रादिभिस्ततः ॥ ४६ ॥

मन्त्रिभिः कविभिश्चैव विद्वद्भिर्विविधैः प्रिये ।
सामन्तराजपुत्रैश्च कारयित्वाऽक्षतार्पणम् ॥ ४७ ॥

ततस्तदुत्सवे राजदर्शनार्थं समागतान् ।
करासक्तकरान्देवि द्विसप्तत्याधिकारिणः ॥ ४८ ॥

पुरुषान्गन्धताम्बूलचित्रवस्त्रादिभिः पुनः ।
बहुमान्य पुरोधास्तमाशीर्भिर्वर्धयेन्नृपम् ॥ ४९ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे सामाज्यलक्ष्मीपीठिकायां
नृपाभिषेकादिकर्मकलापस्वरूपनिरूपणन्नाम
एकषष्टितमः पटलः ॥



॥ अथ द्विषष्टितमः पटलः ॥

॥ नृपनगरप्रवेशकथनम् ॥

श्रीशिवः—तथा नृपो भद्रपीठादवरुह्याप्तयोः करौ ।
अवलम्ब्य शनैस्तस्मान्मण्टपाद्बहिरद्रिजे ॥ १ ॥

निर्गत्यालङ्कृतं भद्रमिभमारुह्य सत्वरम् ।
नानाविधरथैश्चित्रध्वजैः पल्लवतोरणैः ॥ २ ॥

अलङ्कृतेषु रम्येषु राजमार्गेषु सङ्घशः ।
तत्र तत्र स्थितैः पौरजनैस्सन्द्रष्टुमुत्सुकैः ॥ ३ ॥

पुनःपुनर्वीक्ष्यमाणः परिक्रम्य स्वकम्पुरम् ।
शङ्खभेरीनिनादैश्च जयकाहलिकास्वनैः ॥ ४ ॥

रथनेमिनिनादैश्च गजानां बृंहितैरपि ।
अश्वहेषारवैः पत्तिसिंहनादैश्च पार्वति ॥ ५ ॥

प्रतिध्वनति दिक्चक्रे प्रविश्यान्तःपुरन्नृपः ।
कर्पूरदीपैः कनकपात्रस्थैरतिपावनैः ॥ ६ ॥

नीराजितः पुरन्ध्रीभिरासीनः कनकासने ।
ब्राह्मणानां सहस्रस्य दापयित्वाऽन्नमादरात् ॥ ७ ॥

दधिक्षीरगुडोपेतन्तत्परं पृथिवीपतिः ।
पुत्रैः पौत्रैः प्रपौत्रैश्च साकम्मधुरपूर्वकम् ॥ ८ ॥

भुक्त्वा स्वीकृत्य ताम्बूलं स्त्रीभिस्सह सुखी वसेत् ।
एवं यः पृथिवीपालः प्रतिवर्षं वरानने ॥ ९ ॥

वर्धयन्तीदिनेऽन्यस्मिन्दुर्निमित्तेऽपि वा पुनः ।
पुरोधसाऽभिषिक्तश्चेद्यथाशास्त्रं वरानने ॥ १० ॥

स श्रीमान्कीर्तिमान्धीमान्कान्तिमान्स्थैर्यवानपि ।
भूत्वेह सकलाम्पृथ्वीञ्चिरं पालयति ध्रुवम् ॥ ११ ॥

कदाचिदपि साम्राज्यलक्ष्मीस्तन्न विमुञ्चति ।
एवङ्कृताभिषेकस्य विधानं वरवर्णिनि ॥
संक्षेपात्ते निगदितं किमन्यच्छ्रोतुमिच्छसि ॥ १२ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नृपनगरप्रवेशनिरूपणन्नाम
द्विषष्टितमः पटलः ॥

---

## त्रिषष्टितमः पटलः ॥

### ॥ द्विसप्ततिराज्याङ्गविनियोगाः ॥

पार्वती—भगवन् भगनेत्रघ्न श्रुतस्त्वन्मुखपङ्कजात् ।
नृपाभिषेकस्य विधिः प्राज्यसाम्राज्यदायकः ॥ १ ॥

इदानीं श्रोतुमिच्छामि विनियुक्तान्द्विसप्ततिम् ।
तत्तत्कार्येषु पुरुषान्राजभी राज्यवृद्धये ॥ २ ॥

तान्विस्तरेण वद मे यद्यस्ति करुणा मयि ।
श्रीशिवः—साधु साधु जगत्पूज्ये यन्मान्त्वं परिपृच्छसि ॥ ३ ॥

तत्तेऽहं संप्रवक्ष्यामि शृणु कल्याणि सादरम् ।
मन्त्री सेनाधिपः पश्चादुपाध्यायः पुरोहितः ॥ ४ ॥

पौराणिका ज्यौतिषिका विद्वांसः कवयस्तथा ।
वैणिका गायकाश्चैव नटाश्च परिहासकाः ॥ ५ ॥

लेखका गणकाश्चैव भिषजः कालसूचकाः ।
देवार्चकाः प्राड्विवाकास्समयाशंसिनस्तथा ॥ ६ ॥

द्वारपालास्सौविदल्लास्सूदाश्च करदीपिनः ।
धनकोशाधिपा धान्यकोष्ठाध्यक्षा वरानने ॥ ७ ॥

वस्त्रकोशाधिपास्तद्वद्गन्धकोशाधिपाः प्रिये ।
नेता चायुधशालायाः यानशालाधिपस्तथा ॥ ८ ॥

अधिपो गजकूटानाम्मन्दुरापरिपालकः ।
गोष्ठाधिपो वरारोहे दिनकृत्यव्ययाधिपः ॥ ९ ॥

पुरपाला यामिकाश्च वनपाला वरानने ।
आरक्षरक्षकाश्चैव मल्लाश्चैवाङ्गरक्षकाः ॥ १० ॥

शिबिकावाहकाश्छत्रधराः फलकपाणयः ।
राजचिह्नध्वजधरा वन्दिनो वाद्यवादकाः ॥ ११ ॥

कलाचिकाधरः पश्चात्कुञ्चिकावीजकः प्रिये ।
करण्डवाहको हेमकुण्डिकाविलसत्करः ॥ १२ ॥

पादुकावाहको रत्नकम्बलादिप्रसारकाः ।
मालाकाराश्चित्रकारास्सुधाकर्मविचक्षणाः ॥ १३ ॥

रुक्मकारास्ताम्रकांस्यकरा लोहकरास्तथा ।
दारुकर्मकराश्चैव तथा पाषाणतक्षकाः ॥ १४ ॥

सौचिकाश्चर्मकाराश्च कुम्भकाराश्च नापिताः ।
निर्मातारो गृहादीनाञ्चाराश्च वरवर्णिनि ॥ १५ ॥

गुलिका कार्मुकधराः पालका मृगपक्षिणाम् ।
दाशाश्च विविधाकाराः कूटमुद्गरपाणयः ॥ १६ ॥

गृहाङ्गणस्थले चर्मभस्त्रिका जलसेचकाः ।
नानाविधा विटाश्चैव गणिकाः पीठमर्दकाः ॥ १७ ॥

एवन्द्विसप्ततिः प्रोक्ता विनियुक्ता वरानने ।
एभिर्विराजते राजा नक्षत्रैरिव चन्द्रमाः ॥ १८ ॥

पुरा मनुर्महीपालो ययातिर्नहुषश्शिबिः ।
मान्धाता धुन्धुमारश्च हरिश्चन्द्रः पुरूरवाः ॥ १९ ॥

एते चान्ये च भूपाला विनियुज्य यथाक्रमम् ।
तत्तत्कार्येषु पुरुषान् तैरेव प्राप्य सत्वरम् ॥ २० ॥

साम्राज्यं सम्पदं लक्ष्मीं सन्ततिं सन्ततं यशः ।
पालयामासुरवनीञ्चिरकालं वरानने ॥ २१ ॥

एवन्द्विसप्ततिर्देवि विनियोगा यथाक्रमम् ।
सम्यङ्मया निगदिताः किमन्यच्छ्रोतुमिच्छसि ॥ २२ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
द्विसप्ततिराज्याङ्गविनियोगस्वरूपनिरूपणन्नाम
त्रिषष्टितमः पटलः ॥

---

## ॥ अथ चतुष्षष्टितमः पटलः ॥

### ॥ चतुष्षष्टिकलास्वरूपनिरूपणम् ॥

पार्वती—मन्नाथ देशिक स्वामिन् शिव सर्वज्ञ शङ्कर ।
श्रुता मया भवद्वक्त्राद्विनियोगा द्विसप्ततिः ॥ १ ॥

साम्राज्यार्हैर्भूमिपालैः साम्राज्यस्थैर्यसिद्धये ।
अभ्यस्तानाञ्चतुष्षष्टिकलानाम्मे क्रमं वद ॥ २ ॥

श्रीशिवः—देवि सम्यक्त्वया प्रश्नः कृतो लोकहितेच्छया ।
प्रश्नानुरूपं वक्ष्यामि प्रत्युत्तरमगात्मजे ॥ ३ ॥

याभिर्विराजते राजा राजेव वरवर्णिनि ।
ताः कलाः कथयिष्यामि सावधानमनाश्शृणु ॥ ४ ॥

आदिमाक्षरविद्या स्यात्तद्वाचककला वरा ।
तद्विलेखनविद्या च ऋग्विद्याऽथ यजुःकला ॥ ५ ॥

सामविद्याऽथर्वविद्या शिक्षाविद्या ततःपरम् ।
कल्पविद्या व्याकरणकला नैरुक्तिकी कला ॥ ६ ॥

ज्योतिर्विद्या छान्दसी च कला प्रोक्ता ततःपरम् ।
तर्कविद्या समाख्याता तथा वैशेषिकी कला ॥ ७ ॥

मीमांसाख्या कला देवि वेदान्ताख्या कला ततः ।
साङ्ख्यविद्या योगविद्या काव्यविद्या ततः परा ॥ ८ ॥

नानानाटकविद्या च ह्यलङ्कारकला ततः ।
कवित्वविद्या देवेशि मन्त्रयन्त्रकला ततः ॥ ९ ॥

आयुर्विद्या धनुर्विद्या शिल्पविद्या हिमाद्रिजे ।
सङ्ग्रामविद्या भेतालविद्याऽनङ्गकला ततः ॥ १० ॥

सूदविद्या च गान्धर्वविद्या वीणाकला प्रिये ।
वेणुविद्या तालकला तथा मार्दङ्गिकी कला ॥ ११ ॥

नृत्तविद्या गीतविद्या चित्रकर्मकला तथा ।
रथलक्षणविद्या च ह्यश्वलाक्षणिकी कला ॥ १२ ॥

गजलक्षणविद्या च नरलक्षणलक्षिता ।
पक्षिलक्षणविद्या च भूलक्षणकला ततः ॥ १३ ॥

नवरत्नपरीक्षाख्या गतिस्तम्भकरी कला ।
अग्निस्तम्भकरीविद्या जलस्तम्भकरी ततः ॥ १४ ॥

दृष्टिस्तम्भकरी विद्या खड्गस्तम्भनकारिणी ।
जिह्वास्तम्भकरी विद्या शुक्रस्तम्भविधायिनी ॥ १५ ॥

रसवादकरी विद्या धातुवादकरी कला ।
अदृश्यविद्या वश्याख्या परकायप्रवेशिका ॥ १६ ॥

तथा गारुडविद्या च कृषिविद्या ततः परा ।
आकर्षविद्या विद्वेषविद्या मरणकारिणी ॥ १७ ॥

उच्चाटविद्या देवेशि चतुष्षष्टिकलास्स्मृताः ।
यः कश्चन चतुष्षष्टिकलाः कलयते नृपः ॥ १८ ॥

स कलानिधिवल्लोकं सकलं रञ्जयेत्प्रिये ।
तस्मादावश्यकतया भूपालैस्सकलाः कलाः ॥ १९ ॥

अध्येतव्याः प्रयत्नेन साम्राज्यस्थैर्यसिद्धये ।
अभ्यसेदसमर्थश्चेत्कलाः काश्चिद्धिमाद्रिजे ॥ २० ॥

ताभिरेवैति विख्यातिं सर्वज्ञ इति भूतले ।
तस्मादभ्यस्य नृपतिः कलाः काश्चिद्यथामति ॥ २१ ॥

पालयेदवनीन्धैर्यस्थैर्यवीर्यसमन्वितः ।
इत्येवन्ते चतुष्षष्टिकलाः प्रोक्ता मयाऽधुना ॥
सङ्ग्रहेण वरारोहे किमन्यच्छ्रोतुमिच्छसि ॥ २२ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
चतुष्षष्टिकलास्वरूपनिरूपणन्नाम
चतुष्षष्टितमः पटलः ॥

---

|| अथ पञ्चषष्टितमः पटलः ||

|| राजकृत्यस्वरूपनिरूपणम् ||

पार्वती–भगवन्भगनेत्रघ्न शिव सर्वज्ञ शङ्कर ।
श्रुतञ्चतुष्षष्टिकलास्वरूपन्त्वन्मुखान्मया || १ ||

इदानीं श्रोतुमिच्छामि राजकृत्यानि कानिचित् ।
तानि विस्तरतो मेऽद्य वदस्व वदतां वर || २ ||

श्रीशिवः–साधु साधु जगत्पूज्ये यन्मान्त्वं परिपृच्छसि ।
तत्तेऽहं सम्प्रवक्ष्यामि शृणुष्व सुसमाहिता || ३ ||

न्यायानुवर्तिनां राज्ञामितरेषाञ्च पार्वति ।
परोपकृतिरेकैव पुण्यमाहुर्महर्षयः || ४ ||

परस्त्रीषु परार्थेषु परिशुद्धिरिति द्वयम् ।
परलोकस्य पाथेयमिति शंसन्ति सज्जनाः || ५ ||

सत्यं शौचमपारुष्यमिति त्रीणि महीभुजाम् ।
त्रिवर्गसाधकान्याहुर्वेदवेदाङ्गपारगाः || ६ ||

शोभाकराणि चत्वारि राज्ञामाहुः पदे पदे ।
क्षौरमभ्यङ्गमच्छानि वस्त्राण्याभरणानि च || ७ ||

पञ्च लक्ष्मीकराण्याहुः पार्थिवानामुरस्स्थले ।
सन्ततञ्चन्दनालेपः कण्ठे हारोऽतिनिर्मलः || ८ ||

कर्पूरवीटिका वक्त्रे कस्तूरीतिलकोऽलिके ।
माला च मालतीपुष्पमालिकाजृम्भणोन्मुखी ॥ ९ ॥

आयुष्कराणि भूपानां षडेतानि विदुर्बुधाः ।
भक्तिस्सर्वोत्तमे विष्णौ विश्वासस्स्वगुरौ सदा ॥ १० ॥

द्विजेषु देवताबुद्धिश्श्रद्धा च पितृकर्मसु ।
शुश्रूषाकरणञ्जेषु सर्वभूतेष्वहिंसनम् ॥ ११ ॥

सप्तारोग्यकराण्याहुस्सन्तस्सर्वमहीभुजाम् ।
प्रत्यहम्भास्करोपास्तिरार्तानामौषधार्पणम् ॥ १२ ॥

भीताभयप्रदानञ्च छेकानाम्मृगपक्षिणाम् ।
विमोचनं विरुद्धानां वस्तूनामपि वर्जनम् ॥ १३ ॥

सेवा च श्रुतवृद्धानां सर्वभूतदयाऽपि च ।
अष्टावैश्वर्यदान्याहुरग्न्याराधनमाद्रिजे ॥ १४ ॥

मत्पूजा च त्रयोदश्यां प्रदोषे प्रत्यहन्तु वा ।
आराधनम्महालक्ष्म्याः प्रतिभार्गववासरम् ॥ १५ ॥

दिवसेषु विशेषेषु सुवासिन्याश्च पूजनम् ।
सत्पात्रदानं सर्वेशि त्वन्माहात्म्यपरिश्रमः ॥ १६ ॥

नवरात्रे शरत्काले नियमेन त्वदर्चनम् ।
रत्नवर्षीन्द्रमन्त्रस्य जपश्च वरवर्णिनि ॥ १७ ॥

अथाभिधास्ये सप्ताङ्गनामानि क्रमशोऽधुना ।
आन्दोलिकाम्बरं हैमं भूषणानि च वाहनम् ॥ १८ ॥

ग्रामाश्च गन्धकस्तूरी ताम्बूलञ्च वरानने ।
सप्ताङ्गानीति विद्वद्भिः कथितान्युत्सवादिषु ॥ १९ ॥

कृतश्रमाणामाप्तानान्दातव्यानि नृपोत्तमैः ।
धनन्धान्यङ्कुमाराश्च बान्धवा वाहनानि च ॥ २० ॥

वस्तूनि दास्यो दासाश्च ह्यष्टैश्वर्याणि पार्वति ।
मृष्टान्नं मृदुवस्त्रञ्च गन्धाः पुष्पाणि कामिनी ॥ २१ ॥

सङ्गीतं पुष्पतल्पञ्च ताम्बूलञ्च यथाक्रमम् ।
अष्टभोगा इति प्रोक्ता मुनिभिस्तत्त्वचिन्तकैः ॥ २२॥

कुलं रूपङ्गुणो विद्या धनञ्च बलमद्रिजे ।
राज्यम्प्रतापो भूपानाम्मदाश्चाष्टौ समीरिताः ॥ २३ ॥

एवन्ते राजकृत्यानि कानिचित्कमलेक्षणे ।
गदितानि मया सम्यक्किमन्यच्छ्रोतुमिच्छसि ॥ २४ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
राजकृत्यस्वरूपनिरूपणन्नाम
पञ्चषष्टितमः पटलः ॥

---

॥ अथ षट्षष्टितमः पटलः ॥

॥ सम्राट्शुभलक्षणानि ॥

पार्वती—शिव सर्वज्ञ भगवन्भव भक्ताभयप्रद ।
श्रुतानि राजकृत्यानि त्वन्मुखाम्भोजतो मया ॥ १ ॥

इदानीं श्रोतुमिच्छामि कीदृग्भूतैश्च लक्षणैः ।
समेतो मनुजस्सम्राड्भवेद्ब्रूहि वृषध्वज ॥ २ ॥

श्रीशिवः—शृणु पार्वति वक्ष्यामि लक्षणानि शुभानि ते ।
सम्राट्त्वहेतुभूतानि समुद्रकथितानि वै ॥ ३ ॥

यस्य पादतले रक्ते पद्ममत्स्यध्वजाङ्किते ।
प्रवालमृदुले स्निग्धे स सम्राड्भवति ध्रुवम् ॥ ४ ॥

प्रपदे यस्य कूर्माभे लीनङ्गुल्फद्वयं शिवे ।
तूणीरसदृशे जङ्घे स सम्राड्भवति ध्रुवम् ॥ ५ ॥

ह्रस्वं जानुयुगं यस्य चोरू करिकरोपमौ ।
समम्मुष्कयुगन्दीर्घं स सम्राड्भवति ध्रुवम् ॥ ६ ॥

यस्य प्रजननं ह्रस्वमृजु स्निग्धङ्कृशाकृति ।
अपर्वरक्तवर्णञ्च स सम्राड्भवति ध्रुवम् ॥ ७ ॥

पञ्चधारश्चतुर्धारन्त्रिधारं वा पतेद्यदि ।
यस्य प्रदक्षिणम्मूत्रं स सम्राड्भवति ध्रुवम् ॥ ८ ॥

विस्तीर्णमुन्नतं यस्य कटिद्वन्द्वं समं शिवे।
नाभिः प्रदक्षिणावर्तस्स सम्राड्भवति ध्रुवम् ॥ ९ ॥

गम्भीरमुदरं यस्य यस्येषत्तनुमध्यमम्।
विस्तीर्णमुन्नतं वक्षः स सम्राड्भवति ध्रुवम् ॥ १० ॥

युगायतौ यस्य बाहू सूक्ष्मरेखाञ्चितौ करौ।
अतीव कठिनौ रक्तौ स सम्राड्भवति ध्रुवम् ॥ ११ ॥

यस्य दीर्घास्सुपर्वाणस्स्निग्धास्साशिखराः प्रिये।
ईषद्रक्ता नखा यस्य स सम्राड्भवति ध्रुवम् ॥ १२ ॥

अंसौ यस्योन्नतौ स्थूलौ कक्षौ निम्नविवर्जितौ।
गूढौ च जत्रुणी यस्य स सम्राड्भवति ध्रुवम् ॥ १३ ॥

यस्य पृष्ठं लीनवंशमवक्रं पृथु मांसलम्।
विशिरं पार्श्वयुगळं स सम्राड्भवति ध्रुवम् ॥ १४ ॥

ग्रीवा शङ्खनिभा यस्य रेखात्रयसमन्विता।
ईषदुच्चः ककुद्देशस्स सम्राड्भवति ध्रुवम् ॥ १५ ॥

चुबुकन्द्व्यङ्गुलं वृत्तमधरम्बिम्बसन्निभम्।
संरक्ते सृक्विणी यस्य स सम्राड्भवति ध्रुवम् ॥ १६ ॥

सूक्ष्ममास्यबिलं यस्य शुभ्राश्शिखरिणो रदाः।
जिह्वा दीर्घा पल्लवाभा स सम्राड्भवति ध्रुवम् ॥ १७ ॥

दश द्वादशभिर्हीनो द्वित्रिग्रामाधिपो भवेत् ।
इत्येवन्ते समाख्यातं सम्राजश्शुभलक्ष्मणाम् ॥
स्वरूपन्तव देवेशि किमन्यच्छ्रोतुमिच्छसि ॥ २७ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
सम्राटछुभलक्षणस्वरूपकथनन्नाम
षटषष्टितमः पटलः ॥

---

॥ अथ सप्तषष्टितमः पटलः ॥

॥ राज्यार्हराजगुणस्वरूपनिरूपणम् ॥

पार्वती—देवदेव विरूपाक्ष कीदृग्रूपैर्गुणैर्युतः ।
नरो भवति राज्यार्हो ब्रूहि मे वृषभध्वज ॥ १ ॥

श्रीशिवः—साधु साधु जगद्वन्द्ये यन्मात्वं परिपृच्छसि ।
तत्तेऽहं संप्रवक्ष्यामि शृणुष्व सुसमाहिता ॥ २ ॥

यस्य देवि दृढा भक्तिरैहिकामुष्मिकप्रदे ।
सर्वदेवमये विष्णौ स राज्यार्हो भवेन्नरः ॥ ३ ॥

येन राज्ञा गुरोराज्ञा मनोज्ञा शिरसा धृता ।
विज्ञाय सकलन्देवि स राज्यार्हो भवेन्नरः ॥ ४ ॥

यस्य चित्तं सदायत्तं शुश्रूषार्थमगात्मजे ।
ब्राह्मणानाङ्गवाञ्चैव स राज्यार्हो भवेन्नरः ॥ ५ ॥

सत्यं वचसि नैर्मल्यञ्चेतस्युरसि धृष्टता ।
अनिशं वर्तते यस्य स राज्यार्हो भवेत्प्रिये ॥ ६ ॥

यस्य वित्तान्द्विजेन्द्रेषु चित्तं ब्रह्मणि शाश्वते ।
विनियुज्येत सततं स राज्यार्हो भवेत्प्रिये ॥ ७ ॥

यस्य कोपः प्रसादश्च स्वानुरूपफलप्रदः ।
भवेद्यदि भवत्येव स राज्यार्हो न संशयः ॥ ८ ॥

सुखं परसुखे यस्य तद्दुःखे दुःखमद्रिजे ।
हृदयं सदयं यस्य स राज्यार्हो भवेत्प्रिये ॥ ९ ॥

यस्य चित्तमनायत्तं परार्थे परयोषिति ।
परापवादे देवेशि स राज्यार्हो भवेन्नरः ॥ १० ॥

स्वजने यस्य दाक्षिण्यं शाठ्यं शत्रुजनेऽनिशम् ।
दया परिजने देवि स राज्यार्हो भवेन्नरः ॥ ११ ॥

यस्यानिशं रुचिर्धर्मेऽधर्मे त्वस्वरसाऽनिशम् ।
अस्ति सत्कर्मसु श्रद्धा स राज्यार्हो भवेन्नरः ॥ १२ ॥

मनोऽनुरूपा वाग्यस्य कर्म वागनुरूपकम् ।
कायेन्द्रियकृतन्देवि स राज्यार्हो भवेन्नरः ॥ १३ ॥

सुखे महति दुःखे च सम्पद्यापदि च प्रिये ।
स्वधर्मन्न त्यजेद्यस्तु स राज्यार्हो भवेन्नरः ॥ १४ ॥

देवर्षिपितृकृत्येषु नित्यनैमित्तिकेषु च ।
श्रद्धा यस्यास्ति देवेशि स राज्यार्हो भवेन्नरः ॥ १५ ॥

यस्य दित्सा सदा पात्रे पुण्यक्षेत्रनिषेवणे ।
यियासा सन्ततन्देवि स राज्यार्हो भवेन्नरः ॥ १६ ॥

इत्येवङ्कथितास्सम्यक्साम्राज्यप्राप्तिहेतवः ।
सद्गुणास्तव देवेशि किमन्यच्छ्रोतुमिच्छसि ॥ १७ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
राज्यार्हराजगुणस्वरूपनिरूपणन्नाम
सप्तषष्टितमः पटलः ॥

---

॥ अथाष्टषष्टितमः पटलः ॥

॥ सामान्यनृपलक्षण निरूपणम् ॥

श्रीपार्वती—भव भक्तजनाधीन श्रुतन्त्वन्मुखपङ्कजात् ।
श्रोतुश्श्रोत्रानन्दकरं राज्यार्हनृपलक्षणम् ॥ १ ॥

इदानीं श्रोतुमिच्छामि सामान्यनृपलक्षणम् ।
वक्तुमर्हसि देवेश यद्यस्ति करुणा मयि ॥ २ ॥

श्रीशिवः—शृणु कल्याणि वक्ष्यामि सामान्यनृपलक्षणम् ।
यस्य श्रवणमात्रेण श्रोत्रानन्दवशो भवेत् ॥ ३ ॥

स धन्यो यस्सुचरितः सर्वविद्याविशारदः ।
सदा सत्सङ्गनिरतस्सत्कथाश्रवणोत्सुकः ॥ ४ ॥

समस्तराजधर्मज्ञस्स्वदोषपरदोषवित् ।
अमोघक्रोधहर्षश्च सम्यक्परपुरञ्जयः ॥ ५ ॥

सर्वशस्त्रास्त्रकुशलोऽदीर्घसूत्रोऽनसूयकः ।
परेङ्गितज्ञस्तेजस्वी गभीरः परधर्मवित् ॥ ६ ॥

सदाऽनुरक्तप्रकृतिः प्रजापालनतत्परः ।
आधारस्सर्वभूतानामप्रकम्प्योऽमरैरपि ॥ ७ ॥

दानक्षात्रसमुत्पन्नकीर्तिव्याप्तदिगन्तरः ।
गुप्तमन्त्रस्स्थिरप्रज्ञस्सर्वलक्षणलक्षितः ॥ ८ ॥

दीर्घनेत्रो दीर्घबाहुर्दीर्घनासो वरानने ।
दीर्घवक्षाश्च दीर्घोरुर्ह्रस्वजानुयुगान्वितः ॥ ९ ॥

ह्रस्वग्रीवो ह्रस्वपृष्ठो ह्रस्वालिङ्गसमान्वितः ।
सूक्ष्माङ्गुलिपरुस्सूक्ष्मकेशस्सूक्ष्मरदावळिः ॥ १० ॥

सूक्ष्मत्वक्सूक्ष्मनखरश्चोन्नतस्कन्धशोभितः ।
तथैवोन्नतवक्षाश्च कुक्षौ घ्राणेऽपि चोन्नतः ॥ ११ ॥

तथोन्नतललाटश्च ह्युन्नतः कक्षमूलयोः ।
उन्नतस्कन्धयुगळो रक्तपाणितलद्वयः ॥ १२ ॥

रक्तनेत्रान्तयुगळो रक्ततालुयुगान्वितः ।
रक्तजिह्वो रक्तनखो रक्तोष्ठो रक्तपद्युगः ॥ १३ ॥

गम्भीरनाभिर्गम्भीरस्वरो गम्भीरसत्त्ववान् ।
विस्तीर्णोरश्शिरोभालो विस्तीर्णकटिपादयुक् ॥ १४ ॥

स्निग्धनेत्रस्स्निग्धदन्तस्स्निग्धत्वक्स्निग्धपादवान् ।
कराङ्गुष्ठोदरभ्राजद्यवरेखोऽङ्कुशेन च ॥ १५ ॥

रेखारूपेण मत्स्येन चक्रेण च दरेण च ।
अङ्कतपाणितलः पादतलश्च वरवर्णिनि ॥ १६ ॥

पञ्चरेखोल्लसत्फालस्त्रिरेखाळिलसद्गळः ।
गूढजत्रुर्गूढगुल्भो मध्योन्नतशिराः प्रिये ॥ १७ ॥

अस्विन्नपाणिरस्विन्नपादः पद्मनिभेक्षणे ।
अश्वारोहेऽतिनिपुणो गजारोहे गभीरधीः ॥ १८ ॥

रथचर्यास्वातिरथस्सन्नद्धो युद्धकर्मणि ।
इन्द्रवद्बलभिद्देवि वह्निवत्पावकस्सदा ॥ १९ ॥

समवर्ती शमनवन्निर्ऋतिः कोणपालवत् ।
प्रचेताः पाशिवन्नित्यं वायुवच्च सदागतिः ॥ २० ॥

श्रीदवद्धनदोऽजस्रमीशान इव शङ्करः ।
विशेषसृष्टौ विधिवद्विष्णुवद्विश्वरक्षणे ॥ २१ ॥

रुद्रवद्दुष्टसंहारे सदोद्युक्तस्तलोदरि ।
विद्वत्प्रियो विशुद्धात्मा कविगायकपोषकः ॥ २२ ॥

गुरुदेवद्विजपरः पुरोहितमतानुगः ।
मन्त्रविन्मन्त्रिचित्तज्ञश्चारचक्षुश्च सन्ततम् ॥ २३ ॥

दयादाक्षिण्यसंयुक्तो ज्ञातिस्वजनबन्धुषु ।
अनर्घरत्नखचितभूषणैर्भूषितस्सदा ॥ २४ ॥

दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः ।
ललाटपट्टविलसत्कस्तूरीतिलकोऽनिशम् ॥ २५ ॥

कर्पूरवीटिकापूर्णवक्त्रो वारिजलोचने ।
कम्बुकण्ठलसद्धारः कमनीयतराकृतिः ॥ २६ ॥

रथेभवाजिपत्त्याख्य चतुरङ्गबलान्वितः ।
राजचिह्नधरैः कैश्चित्कैश्चिदायुधधारिभिः ॥ २७ ॥

उच्चावचकथाऽभिज्ञैः कैश्चिच्च परिहासकैः ।
नटैश्च नर्तकैः कैश्चिद्वीणावेणुविशारदैः ॥ २८ ॥

गायकैः कविभिर्दोवि योगिभिश्च नियोगिभिः ।
मन्त्रिभिर्मन्त्रकुशलैस्सेव्यमानो दिवानिशम् ॥ २९ ॥

राजा राजेव जगतां नयनानन्ददायकः ।
यस्मिन्देशे प्रजास्सर्वाः पालयन्निवसत्युमे ॥ ३० ॥

स राजन्वानिति सदा प्रोच्यते ब्रह्मवादिभिः ।
इत्येवन्ते समाख्यातं सम्यक्सद्राजलक्षणम् ॥
सङ्ग्रहेण वरारोहे किमन्यच्छ्रोतुमिच्छसि ॥ ३१ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
सामान्यराजलक्षणस्वरूपनिरूपणन्नाम
अष्टषष्टितमः पटलः ॥

---

॥ अथ एकोनसप्ततितमः पटलः ॥

॥ राजमहिषीलक्षणनिरूपणम् ॥

पार्वती—शिव सर्वज्ञ सर्वेश त्वन्मुखाम्भोजतश्श्रुतम् ।
श्रोतुरानन्दजनकं राज्यार्हनृपलक्षणम् ॥ १ ॥

इदानीं श्रोतुमिच्छामि महिष्या अपि लक्षणम् ।
वक्तुमर्हसि देवेश यद्यस्ति करुणा मयि ॥ २ ॥

श्रीशिवः—साधु साधु वरारोहे यन्मान्त्वं परिपृच्छसि ।
तत्तेहं संप्रवक्ष्यामि शृणुष्व सुसमाहिता ॥ ३ ॥

विशुद्धवंशजा साध्वी शुभलक्षणलक्षिता ।
सम्भृतोपस्करा नित्यं युक्तहस्ता च सद्व्यये ॥ ४ ॥

अन्तःपुरजनानन्दजननी च जगद्धिता ।
शुभव्रतपरा नित्यं शुभाचारा शुभप्रिया ॥ ५ ॥

पतिशुश्रूषणपरा पतिचित्तानुवर्तिनी ।
कुब्जवामनषण्डादिशुद्धान्तजनपोषका ॥ ६ ॥

भूतधात्रीव धात्रीषु क्षमावत्यानिशं प्रिये ।
सपत्नीष्वपि सस्नेहा सदा धर्मपरायणा ॥ ७ ॥

सुललाटा सुकेशाढ्या सुनासाऽतिशुचिस्मिता ।
पूर्णेन्दुरम्यवदना पद्मपत्रनिभेक्षणा ॥ ८ ॥

बिम्बोष्ठी मञ्जुदशना कम्बुसङ्काशकन्धरा ।
कुम्भिकुम्भोपमकुचा तनुवृत्तसुमध्यमा ॥ ९ ॥

आवर्तनाभिरानीलरोमराजिविराजिता ।
तनुदीर्घमृदुस्निग्धभुजवल्लीसमन्विता ॥ १० ॥

पुलिनाकारजघना कटीतटपटीयसी ।
करीन्द्रकरकाण्डाभकमनीयोरुशोभिता ॥ ११ ॥

तनुजङ्घा गूढगुल्फा कमलाभपदद्वया ।
शिञ्जन्मञ्जीरकटककिङ्किण्यञ्चत्पदाम्बुजा ॥ १२ ॥

अनर्घरत्नघटितमेखलादामशोभिता ।
रत्नाङ्गुलीयकटकविचित्राङ्गदभूषिता ॥ १३ ॥

अनर्घरत्नखचितमनोज्ञोरोजबन्धना ।
सुधाकरकराकारहारवारमनोहरा　　॥ १४ ॥

मुक्ताताटङ्कसंशोभिकर्णशष्कुलिकान्विता ।
शुकाकारसमाकारनासामौक्तिकरञ्जिता　　॥ १५ ॥

दिव्याम्बरधरा दिव्यप्रावाराङ्कुरसंवृता ।
मल्लिकामालिकाराजत्सुस्निग्धकबरीभरा　　॥ १६ ॥

कर्पूरवीटीरम्यास्या कस्तूरीतिलकोज्ज्वला ।
प्रकृष्टलीलागमनपराजितमरालिका　　॥ १७ ॥

कलाचीकुञ्चिकामुख्यराजचिह्नानि लीलया ।
बिभ्रतीभिरसंख्याभिः परिचारीभिरन्विता　　॥ १८ ॥

वधूरेवंविधा तादृङ्नृपेण सह पार्वति ।
यथाविध्यभिषिक्ताचेन्महिषीत्युच्यते बुधैः　　॥ १९ ॥

महिष्येवंविधा यस्य राजा भवति शोभने ।
स त्वष्टैश्वर्यसम्पन्नः पुत्रपौत्रसमन्वितः　　॥ २० ॥

अव्याहतप्रतापश्च कीर्तिमान् जनवल्लभः ।
नमत्सामन्तभूपालमौलिमाणिक्यकान्तिभिः　　॥ २१ ॥

नीराजितनिजाङ्घ्रिश्च भवेद्देवि न संशयः ।
यत्र चैवंविधा देवी देवि तिष्ठति शोभना　　॥ २२ ॥

साम्राज्यलक्ष्मीस्तत्रैव नृत्यत्यैश्वर्यसंयुता ।
तस्मादावश्यकतया सर्वकर्माणि पार्थिवः ॥ २३ ॥

महिष्या सह कुर्वीत साम्राज्यस्थैर्यसिद्धये ।
इत्येवं राजमहिषीलक्षणं वरवर्णिनि ॥
संक्षेपात्कथितन्देवि किमन्यच्छ्रोतुमिच्छसि ॥ २४ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
राजमहिषीलक्षणस्वरूपनिरूपणन्नाम
एकोनसप्ततितमः पटलः ॥

॥ अथ सप्ततितमः पटलः ॥

॥ राजधर्मस्वरूपनिरूपणम् ॥

पार्वती—शम्भो शङ्कर सर्वज्ञ त्वन्मुखाम्भोजतः श्रुतम् ।
संक्षेपाद्राजमहिषीलक्षणं शुभलक्षण ॥ १ ॥

इदानीं श्रोतुमिच्छामि राजधर्माननुत्तमान् ।
वक्तुमर्हसि देवेश कांश्चित्कामनिपूदन ॥ २ ॥

श्रीशिवः—साधु पृष्टन्त्वया देवि लोकरक्षणदक्षया ।
यत्तद्वक्ष्यामि सुश्रोणि सावधानमनाश्शृणु ॥ ३ ॥

सर्वस्य जगतो हेतुर्वृद्धेर्वृद्धाप्रियो नृपः ।
लोचनानन्दजनकः पूर्णचन्द्र इवोदधेः ॥ ४ ॥

धार्मिको नीतिशास्त्रज्ञः पालयन्नृपतिः प्रजाः ।
पुरे जनपदे चापि पुरुहूत इवामरान् ॥ ५ ॥

रक्षेत्प्रजा यदि नृपस्ताः पुनर्वर्धयन्ति तम् ।
तासां प्रणाशे स्वस्यापि नाशस्स्याद्वरवर्णिनि ॥ ६ ॥

राजा प्रथममात्मानं योजयेद्विनयेन तु ।
ततः पुत्रांस्ततोऽमात्यांस्ततो भृत्यांस्ततः प्रजाः ॥ ७ ॥

राज्ञि धर्मिणि धर्मिष्ठाः पापे पापास्समे समाः ।
राजानमनुवर्तन्ते यथा राजा तथा प्रजाः ॥ ८ ॥

यथा सस्याङ्कुरास्सूक्ष्माः प्रयत्नेनाभिवर्धिताः ।
भवेयुः फलदाः काले तथा लोकास्सुरक्षिताः ॥ ९ ॥

वाहनानि च वस्तूनि भूषणानि विशेषतः ।
धनधान्यादिकं सर्वं प्रजाभ्यस्स्यान्महीपतेः ॥ १० ॥

नेक्षुवत्पीडयेद्राष्ट्रं स्तनवन्न विकर्षयेत् ।
जलूकावदविज्ञातखेदं रक्तकरो भवेत् ॥ ११ ॥

रोपयन्पुनरुत्खातांश्छिन्वन्कुसुमिताल्लँघून् ।
वर्जयन्नमयन्नुच्चांस्ततान्समुदयन्पुनः ॥ १२ ॥

विश्लेषयन्संहतांश्च क्षुद्रान्कण्टकिनो बहिः ।
विनयन्सेचयन्म्लानान्माल्यकार इवानिशम् ॥ १३ ॥

योलोकाननुवर्तेत तन्नमन्त्यमरा अपि ।
नरेन्द्राणान्नराणाञ्च केवलन्तुल्यमूर्तिता ॥ १४ ॥

दानक्षात्रक्षमाधैर्यैराधिक्यं स्यान्महीभुजाम् ।
नृपेण निजवासार्थन्निर्मातव्यम्पुरम्महत् ॥ १५ ॥

सोत्सेधवप्रप्राकारं खातेन महता वृतम् ।
शतघ्नीशतसम्बाधङ्गजाश्वरथसङ्कुलम् ॥ १६ ॥

नानाशिल्पिजनाकीर्णन्नानाऽऽपणविराजितम् ।
नानावणिग्वरोपेतन्नानावेश्योपशोभितम् ॥ १७ ॥

नानाविधजनैर्जुष्टं हृष्टपुष्टैस्समन्ततः ।
योजनेनायतं रम्यं विस्तृतञ्चार्धमानतः ॥ १८ ॥

तत्पुरस्य वरारोहे परितः पत्तनानि च ।
नानावस्तुसमृद्धानि निर्मातव्यानि भूभुजा ॥ १९ ॥

पत्तनेषु पुरे चैव नानारूपाणि पार्वति ।
गिरिदुर्गादिदुर्गाणि कल्पितव्यानि सर्वतः ॥ २० ॥

तेषु विश्वसनीयास्तु भटवर्याश्चिरन्तनाः ।
स्थापनीयाः प्रयत्नेन स्वाम्यर्थे त्यक्तजीवनाः ॥ २१ ॥

मदहीनो यथा दन्ती विषहीनो यथोरगः ।
सर्वेषां वश्यतां याति दुर्गहीनस्तथा नृपः ॥ २२ ॥

धर्मज्ञो नीतिनिपुणो देशकालविशेषवित् ।
स्वाम्यर्थे स्वात्मनः पुत्रानपि दण्डयितुं क्षमः ॥ २३ ॥

बह्वायोपायनिपुणस्स्वल्पव्ययकृदद्विजे ।
अमात्यः पार्थिवेन्द्रेण सङ्ग्राह्यो राज्यवृद्धये ॥ २४ ॥

पुष्पहीनो यथावृक्षो दीपहीनो यथाऽऽलयः ।
अमात्यहीनो नृपतिस्तथैव वरवर्णिनि ॥ २५ ॥

अमात्यस्त्वप्रियम्ब्रूयात्परिणामसुखावहम् ।
परिणामक्लेशकरन्नब्रूयात्प्रियमप्युमे ॥ २६ ॥

परीक्षितेन बहुधा सुस्निग्धेन सुबुद्धिना ।
मन्त्रिणा धार्यते राज्यं शेषेणेव महीतलम् ॥ २७ ॥

तस्मादमात्यस्सङ्ग्राह्यो राज्ञाऽऽत्महितकाङ्क्षिणा ।
सङ्ग्रामकेलिनिपुणश्चतुरङ्गबलान्वितः ॥ २८ ॥

शूरोऽर्थसिद्धिनिपुणः कार्यस्सेनापतिः प्रिये ।
स च स्वस्वामिकार्यार्थं परसेनाग्रवर्तिनम् ॥ २९ ॥

आत्मजम्भ्रातरं वाऽपि हन्यादेवाविचारयन् ।
नचेदेवङ्कथल्लोके सेनापतिरितीर्यते ॥ ३० ॥

लता यथा निरालम्बा तटहीना यथाऽऽपगा ।
सेनापतिविहीनाऽपि तथा सेना न शोभते ॥ ३१ ।

तस्मादावश्यकतया नृपेण जयमिच्छता ।
कल्पनीयः प्रयत्नेन सेनापतिरगात्मजे ॥ ३२ ॥

वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः ।
यथार्थवादी धीरश्च चिरकालङ्कुलागतः ॥ ३३ ॥

प्रवीणस्सर्वभावज्ञो मन्त्रतन्त्रविशेषवित् ।
आशीर्वादपरोऽजस्रङ्कल्पनीयः पुरोहितः ॥ ३४ ॥

पुर एव हितं यस्मादाचरत्यवनीपतेः ।
तस्मान्निगद्यते सद्भिः पुरोहित इति प्रिये ॥ ३५ ॥

पुरोहितोपदिष्टेन मार्गेण पृथिवीपतिः ।
नित्यनैमित्तिकादीनि सर्वकर्माणि साधयेत् ॥ ३६ ॥

क्रमागताः कुलीनाश्च शौर्यवीर्यसमन्विताः ।
ताडिताश्च दुरुक्ताश्च दण्डिताश्चात्मनाऽसकृत् ॥ ३७ ॥

न चिन्तयन्ति ये पापं ते भृत्यास्स्युर्महीभुजः ।
येऽनाहूतास्समभ्येत्य द्वारि तिष्ठन्ति सर्वदा ॥ ३८ ॥

पृष्टास्तु सत्यं ब्रुवते ते भृत्यास्स्युर्महीभुजः ।
अप्रगल्भान्व्यसनिनः क्रूराल्लुब्धांस्तथाऽऽकुलान् ॥ ३९ ॥

असन्तुष्टानभक्तांश्च त्यजेद्भृत्यान्नराधिपः ।
स्वामिभक्ताः प्रवीणाश्च वाग्मिनस्सत्यवादिनः ॥ ४० ॥

येऽलुब्धाश्च प्रिये कुर्युस्तान्भाण्डागारिकान्प्रभुः ।
जितेन्द्रियोऽतिमेधावी धीरो लघुकरः प्रिये ॥ ४१ ॥

दौवारिकः प्रकर्तव्यो राज्ञा शास्त्रार्थतत्त्ववित् ।
कुलीना धर्मशास्त्रज्ञास्सततं सत्यवादिनः ॥ ४२ ॥

समा मित्रेऽप्यमित्रे च कार्या राज्ञा सभासदः ।
बान्धवा बहुधा देवि माननीया महीभुजा ॥ ४३ ॥

न कार्यो ज्ञातिभिस्सार्कं विरोधस्तु कदाचन ।
आश्रिता बहवो राज्ञा सङ्ग्राह्यास्सर्वमङ्गळे ॥ ४४ ॥

नानामतप्रविष्टाश्च नानाविद्याविशारदाः ।
राज्ञाऽपराधः क्षन्तव्योऽप्यल्पज्ञस्याश्रितस्य तु ॥ ४५

न हि सर्वत्र पाण्डित्यं सुलभम्पुरुषे क्वचित् ।
चारा राज्ञा विधातव्याश्शीघ्रगा दीर्घदर्शिनः ॥ ४६॥

यथार्थवादिनो दक्षाः परेङ्गितविदः प्रिये ।
अतिदूरस्थमज्ञातमदृष्टिपथमप्युमे ॥ ४७ ॥

ज्ञातुं शक्यं वस्तुजातं भूभुजा चारचक्षुषा ।
तस्मादावश्यकतया चारचक्षुर्नृपो भवेत् ॥ ४८ ॥

स्थिरचित्तोऽतिगम्भीरः पराविज्ञातचेष्टितः ।
वाक्पटुः कार्यतत्त्वज्ञो दूतः कार्यो महीभुजा ॥ ४९ ॥

आपद्यपि न वै हन्याद्दूतं वध्यमपि प्रिये ।
व्यङ्गन्तं कारयेद्राजा हन्ता चेन्नरकं व्रजेत् ॥ ५० ॥

नियोगिभिर्विना राज्यन्नास्ति राज्ञो हि केवलम् ।
तस्माद्राज्ञा विधातव्यास्ते प्रिये बुद्धिशालिनः ॥ ५१ ॥

भूषणैरम्बरैर्नित्यन्तान्राजा परितोषयेत् ।
नेत्रहीनं यथा वक्त्रं पद्महीनं यथा सरः ॥ ५२ ॥

तथा नियोगिभिर्हीनं राज्यं वै न प्रकाशते ।
अतो नियोगिनो वृद्धास्सत्यसन्धाः क्रमागताः ॥ ५३॥

ऊहापोहविचारज्ञा माननीया महीभुजा ।
कौ देशकालौ विषमास्समा वा मम विद्विषः ॥ ५४ ॥

के मे सहायाः का शक्तिः कोऽभ्युपायः फलं कियत् ।
कीदृशी दैवसम्पच्चेत्येवं सञ्चिन्तयन्सदा ॥ ५५ ॥

असिधारानुवर्तीव प्रजा राजाऽनुपालयेत् ।
सन्धिश्च विग्रहो यानमासनं संश्रयस्तथा ॥ ५६ ॥

द्विधाकरणमित्येते षड्गुणास्स्युर्महीभुजः ।
उत्साहप्रभुमन्त्राणां तिस्रश्शक्तय ईरिताः ॥ ५७ ॥

सामदाने भेददण्डावित्युपायचतुष्टयम् ।
हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम् ॥ ५८ ॥

मनःप्रसादजननं स्नानमाहुर्महीभुजाम् ।
पापालक्ष्मीप्रशमनञ्चन्दनाद्यनुलेपनम् ॥ ५९ ॥

वक्त्रालङ्कारकरणन्ताम्बूलन्नृपतेस्स्मृतम् ।
दुष्टारिसङ्घभयदन्नृपाणां शस्त्रधारणम् ॥ ६० ॥

राज्यलक्ष्म्यास्स्थैर्यकरम्भूपानाञ्छत्रधारणम् ।
राज्ञां श्रीकरमाख्यातं सितचामरवीजनम् ॥ ६१ ॥

सिंहासनं स्थिरैश्वर्यकरं राज्ञामुदीरितम् ।
सुमनोवररत्नानान्धारणन्दिव्यरूपदम् ॥ ६२ ॥

देवतातिथिविप्राणाम्पूजनम्पापनाशनम् ।
दानन्धर्मप्रदम्प्राहुरार्यास्सर्वमहीभुजाम् ॥ ६३ ॥

माणिक्यभूषणं राज्ञा धार्यमादित्यवासरे ।
मौक्तिकाभरणं सोमवारेऽङ्गारकवासरे ॥ ६४ ॥

विद्रुमाभरणं सौम्यवारे मरकतोद्भवम् ।
गुरुवारे पुष्परागमयम्भार्गववासरे ॥ ६५ ॥

वज्ररत्नमयन्देवि भूषणन्धारयेन्नृपः ।
नीलरत्नमयन्देवि भूषणम्मन्दवासरे ॥ ६६ ॥

सूर्यादिग्रहवारेषु तत्तद्रत्नविधारणम् ।
ग्रहपीडाहरम्प्राहुः प्राज्ञा राज्ञां वरानने ॥ ६७ ॥

यस्मिन्नेवाधिकञ्चक्षुरारोपयति पार्थिवः ।
सुतेऽमात्येऽप्युदासीने स लक्ष्म्या ध्रियते नरः ॥ ६८ ॥

धवलान्यातपत्राणि वाजिनश्च मनोरमाः ।
सदा मत्ताश्च मातङ्गाः प्रसन्ने सति भूपतौ ॥ ६९ ॥

तस्मादेवि महीभागे राजा प्रत्यक्षदैवतम् ।
स हि श्वसनसंयुक्तन्नात्र कार्या विचारणा ॥ ७० ॥

इत्येवं राजनीतिस्ते कथिता सम्यगद्रिजे ।
सङ्ग्रहेण सरोजाक्षि किमन्यच्छ्रोतुमिच्छसि ॥ ७१ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
राजधर्मस्वरूपनिरूपणन्नाम
सप्ततितमः पटलः ॥

---

अथैकसप्ततितमः पटलः ॥

॥ राज्ञउषःकालकर्तव्यकर्मस्वरूपनिरूपणम् ॥

पार्वती—भव भक्तजनाधीन शिव शाश्वत शङ्कर ।
मयाऽखिला राजधर्माश्श्रुतास्त्वद्वदनाम्बुजात् ॥ १ ॥

इदानीं श्रोतुमिच्छामि राज्ञो धर्मानुवर्तिनः ।
कर्तव्यङ्किमुषःकाले कर्म तद्वक्तुमर्हसि ॥ २ ॥

श्रीशिवः—साधु साधु वरारोहे यन्मान्त्वं परिपृच्छसि ।
तत्तेऽहं सम्प्रवक्ष्यामि श‍ृणु कल्याणि सादरम् ॥ ३ ॥

अन्तःपुरेऽतिविस्तीर्णे सारैश्चन्दनदारुभिः ।
कल्पिते काञ्चनमयैः कुड्यैरुच्चैस्समावृते ॥ ४ ॥

मौक्तिकस्तम्भगम्भीरे माणिक्यवलभीपुटे ।
प्रवालमयसोपाने वैडूर्यमयवेदिके ॥ ५ ॥

प्रतिस्तम्भोल्लसच्छातकुम्भरम्भापरिष्कृते ।
सर्वत्रालङ्कृते रत्नतोरणैश्शुभकारणैः ॥ ६ ॥

कालागरुरजःक्लृप्तधूपधूममनोहरे ।
अनर्घरत्नघटितकवाटद्वारशोभिते ॥ ७ ॥

चतुश्शाले चकोराक्षि मध्ये मन्दरश‍ृङ्गवत् ।
सुधाऽनुलिप्ते सुग्रीवकपिसैन्यवदाद्रिजे ॥ ८ ॥

सगवाक्षे द्वारपार्श्वन्यस्तचापशरासिभिः ।
दुर्निरीक्षेऽतिविपुले शुभे शयनमन्दिरे ॥ ९ ॥

महार्हहेमपर्यङ्के हंसतूलपरिच्छदे ।
शयितं परितस्स्त्रीभिस्स्वपन्तीभिस्सह प्रभुम् ॥ १० ॥

प्राबोधयेदुषःकाले धात्र्येवंवादिनी सती ।
प्राप्तुन्त्वन्नेत्रयोस्साम्यमिव त्वद्गृहकल्पिते ॥ ११ ॥

सरोवरे सरोजानि विकसन्ति महीतले।
त्वच्छय्यास्तीर्णपुष्पाणि तव देहस्य मार्दवम् ॥ १२ ॥

सौरभ्यञ्च प्राप्तुमिव त्वद्वावासज्ञितान्यहो।
हीरकुट्टिममध्यस्थमुक्तापर्यङ्कमध्यमे ॥ १३ ॥

शयानश्शेषशायीव क्षीराब्धौ त्वं हि लक्ष्यसे।
इतीरयन्त्या नृपतिस्तथा धात्र्या प्रबोधितः ॥ १४ ॥

उत्थाय शयनात्तूर्णन्निमील्यैव तु लोचने।
स्वेष्टदेवं हृदि ध्यायन्पौनःपुन्येन पार्थिवः ॥ १५ ॥

श्रोत्रचित्तकरं स्वस्य चरित्रन्त्वचित्स्थले।
कीर्तयत्स्वतिगम्भीरं सूतमागधवन्दिषु ॥ १६ ॥

वीणावेणुमृदङ्गादिनानावाद्यानि कानिचित्।
वधूषु वादयन्तीषु क्वचिद्गीतकलान्वितम् ॥ १७ ॥

विप्रेषु भगवद्भक्तेष्वेकत्र स्वेष्टदेवताम्।
स्तुवत्सु नानाश्लोकौघैर्नानारागरसान्वितम् ॥ १८ ॥

क्वचिद्दुग्धघटादर्शशुकगन्धसुमादिकम्।
कान्ताजने करतलैः कलयत्यतिसम्भ्रमम् ॥ १९ ॥

श्रोत्रियं सुभगान्धेनुमाग्निमग्निचितान्द्विजम्।
सौखशायनिकौ द्वौ च विप्रौ पश्येद्विभूतये ॥ २० ॥

ततः काचित्सरोजाक्षी धृत्वाऽऽदर्शं कराब्जयोः।
देव त्वद्रूपसदृशरूपो ना नास्ति भूतले ॥ २१ ॥

मृषा ते यदि मद्वाक्यं पश्यादर्शे त्वदाकृतिम्। 
इत्येवमीरयन्तीव दर्शयेत्तस्य दर्पणम् ॥ २२ ॥

अन्या पुष्पस्रजम्पात्रादुद्धृत्य स्वकरस्थितात्।
त्वमप्येतादृशीं वृद्धिम्भजस्वाचन्द्रतारकम् ॥ २३ ॥

इति संसूचयन्तीव राज्ञे तां दर्शयेत्स्रजम्।
अपरा शुकमादाय नृपतेः पुरतस्स्थिता ॥ २४ ॥

स्वामिंस्त्वदन्तःपुरिका वाञ्छाधुर्यहरोऽप्ययम्।
त्वत्पादमूलमानीतो माननीयश्शुकस्त्वया ॥ २५ ॥

इति तन्नाथयन्तीव तस्मै तं दर्शयेच्छुकम्।
काचिद्दुग्धघटङ्कान्ता धृत्वाऽऽत्मकरयोस्तथा ॥ २६॥

देव त्वत्कीर्तिकामिन्या लङ्घितः कलशाम्बुधिः।
लज्जयैव स्वमत्यन्तं सङ्कुच्यैतद्घटान्तरे ॥ २७ ॥

सल्लीनस्त्वावमानन्तद्वक्तुकाम इवागतः।
इति विज्ञापयन्तीव तस्मै तं दर्शयेद्घटम् ॥ २८ ॥

ततस्स राजा पर्यङ्कादवरुह्यासयोः करम्।
अवलम्ब्य शनैर्गत्वा महीपो मज्जनालयम् ॥ २९ ॥

पादौ करौ च प्रक्षाळ्य दन्तान्संशोध्य तत्परम् ।
ब्राह्मे मुहूर्ते च पुनः कुर्यात्स्नानादिकन्नृपः ॥ ३० ॥

ब्राह्मे मुहूर्ते नृपतिर्यो निद्राङ्कुरुते प्रिये ।
स सर्वदाऽशुचिर्भूत्वा सर्वकर्मसु नार्हति ॥ ३१ ॥

ब्राह्मे मुहूर्ते नृपतिस्त्यजेन्निद्रां विशेषतः ।
पद्मं प्रातःप्रबुद्धं हि श्रयते श्रीगुणाश्रयम् ॥ ३२ ॥

तस्मादावश्यकतया साम्राज्यस्थैर्यसिद्धये ।
त्यजेन्निद्राम्महीपालो मुहूर्ते ब्राह्मसंज्ञके ॥ ३३ ॥

इत्येवन्ते समाख्यातमुषःकालोचिताम्प्रिये ।
नृपाणाङ्कर्म संक्षेपात्किमन्यच्छ्रोतुमर्हसि ॥ ३४ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
राज्ञउषःकालकर्तव्यकर्मस्वरूपनिरूपणन्नाम
एकसप्ततितमः पटलः ॥

---

॥ अथ द्विसप्ततितमः पटलः ॥

॥ ब्राह्ममुहूर्तेनृपकर्तव्यकर्मस्वरूपनिरूपणम् ॥

पार्वती—शितिकण्ठ शिव स्वामिंस्त्वद्वक्त्राम्भोजतश्श्रुतम् ।
कर्मोषःकालकर्तव्यं राज्ञा धर्मानुवर्तिना ॥ १ ॥

इदानीं श्रोतुमिच्छामि यत्कर्तव्यम्महीभुजा ।
ब्राह्मे मुहूर्ते सुशुभे तत्कर्माद्य वदस्व मे ॥ २ ॥

श्रीशिवः—साधु साधु वरारोहे यन्मान्त्वं परिपृच्छसि ।
तत्तेऽहं सम्प्रवक्ष्यामि शृणुष्व सुसमाहिता ॥ ३ ॥

ब्राह्मे मुहूर्ते नृपतिर्लक्ष्मीनारायणं हृदि ।
सञ्चिन्त्य गरुडारूढन्दिव्यपीताम्बरावृतम् ॥ ४ ॥

अनर्घरत्नमकुटकुण्डलाङ्गदभूषितम् ।
श्रीवत्सकौस्तुभधरं वनमालाविभूषितम् ॥ ५ ॥

शङ्खचक्रगदापद्मराजद्भुजचतुष्टयम् ।
कोटिसूर्यप्रतीकाशङ्कोमलावयवोज्ज्वलम् ॥ ६ ॥

सनकादिमुनीन्द्रौघैः स्तूयमानात्मवैभवम् ।
ततो मयाऽद्य कर्तव्यन्दानधर्मव्रतादिकम् ॥ ७ ॥

एतावन्मात्रमित्यात्मन्यालोच्य समनन्तरम् ।
आसनाद्रत्नखचिताद्धैमादुत्थाय सत्वरम् ॥ ८ ॥

दिव्यनारीकरधृतदीपिकाभिः पुरो भुवि ।
*प्रकाशितायाञ्जय जय जीव जीवेति वादिनि ॥ ९ ॥

सतारनिस्वनं सम्यग्वेत्रधारी वधूजने ।
पदक्लृप्तस्वर्णमयपादुकः कनकाम्बरम् ॥ १० ॥

---

* प्रकाशायां इति युक्तः पाठः

आजानुलम्बमाकण्ठादादधानश्शनैश्शनैः ।
समालम्ब्य सरोजाक्ष्याः कस्याश्चित्करपङ्कजम् ॥ ११ ॥

किञ्चिद्विश्लथधम्मिल्लवेष्टितोष्णीषरञ्जितः ।
किञ्चिद्विशीर्णकस्तूरीतिलकोल्लसदाननः ॥ १२ ॥

लक्ष्यालक्ष्याङ्गरागश्रीरमणीयभुजान्तरः ।
प्राप्याभिषेकसदनमारुह्य कनकासनम् ॥ १३ ॥

भूषणान्यपनीयातवधूकरविधारिते ।
निवेश्य भाजने हैमे नानारत्नविराजिते ॥ १४ ॥

प्राङ्मुखः प्रयतो भूत्वा स्नातुकामो नृपो भवेत् ।
एतस्मिन्नन्तरे काचिदपसार्य सुमस्रजम ॥ १५ ॥

नारीनखमुखैः कुर्यात्सरलांश्चिकुरान्प्रभोः ।
काचिद्धेमकटाहस्थैर्घनसारसुगन्धिभिः ॥ १६ ॥

वारिभिर्वनजाताक्षी पुण्यतीर्थसमाहृतैः ॥
शातकुम्भमयैस्सूक्ष्मकुम्भैस्तन्नृपकुञ्जरम् ॥ १७ ॥

अभिषिञ्चेत्करधृतकङ्कणस्वनमञ्जुळम् ॥
अपरा चापनुद्याम्बु तनुलग्नसुमध्यमा ॥ ॥ १८ ॥

मूर्ध्नि मूर्धावसिक्तस्य तस्य वस्त्र विवेष्टयेत् ।
परिधानन्धृतवति राज्ञि राजीवलोचना ॥ १९ ॥

काचिदग्रेऽगरुभवन्धूपं सम्यक्प्रचारयेत् ।
नतमध्या नखमुखैः काचित्तस्य शिरोरुहान् ॥ २० ॥

विधाय विततान्यङ्कुमदपङ्कविभावितान् ।
कृत्वा नह्येतवदनसौरभालोलषट्पदा ॥ २१ ॥

अन्या विदध्याच्चिकुरबन्धन्तस्य महीभृतः ।
बन्धुरं विमलैः पुष्पदामभिः काचिदङ्गना ॥ २२ ॥

ततो महीभृत्तरुणतरणिद्युतिसन्निभम् ।
कयाचिदर्पितन्दध्यात्तरुण्या कनकाम्बरम् ॥ २३ ॥

काचित्तस्य विभोः कान्ता दर्शयेन्मणिदर्पणम् ।
भवतस्तु तुला लोके भवानेवेति वादिनी ॥ २४ ॥

ततो महार्हमकुटकुण्डलाङ्गदनूपुरैः ।
हारैर्मनोहरैस्सम्यगलङ्कृततनुर्नृपः ॥ २५ ॥

आस्थानकूटमासाद्य भद्रपीठोपरिस्थितः ।
पुरोहितमुखाच्छ्रुत्वा पञ्चाङ्गङ्कालनिर्णयम् ॥ २६ ॥

दक्षिणावर्तशङ्खस्थैस्तोयैर्विप्रकरार्पितैः ।
अवोक्ष्याङ्गानि सर्वाणि हरिस्मरणपूर्वकम् ॥ २७ ॥

ततः पुरोहितकरेणार्पितश्वेतमृत्स्नया ।
गोपीचन्दनतो वाऽपि केवलञ्चन्दनेन वा ॥ २८ ॥

धृत्वोर्ध्वपुण्ड्रं विधिवत्कृत्वा कर्म यथोचितम् ।
अर्घ्यदानादिकं सर्वमासीनाश्चित्रकम्बले ॥ २९ ॥

प्राणानायम्य चर्ष्यादींस्तत्तदङ्गे निधाय तु ।
विधाय न्यासभेदांस्तु मुद्राभेदांश्च कांश्चन ॥ ३० ॥

मन्त्राधिदेवतान्ध्यायन्नर्धोन्मीलितलोचनः ।
मुक्ताक्षमालावलयन्दधानः करपङ्कजे ॥ ३१ ॥

आसीनस्स्वोचितम्मन्त्रञ्जपेदासूर्यदर्शनात् ।
एवन्ते कथितम्ब्राह्मे मुहूर्ते नृपपुङ्गवैः ॥
कर्तव्यङ्कर्म सुश्रोणि किमन्यच्छ्रोतुमिच्छसि ॥ ३२ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
ब्राह्मे मुहूर्ते नृपकर्तव्यकृत्यस्वरूपनिरूपणन्नाम
द्विसप्ततितमः पटलः ॥

---

अथ त्रिसप्ततितमः पटलः ॥

॥ प्रातःकालकर्तव्यराजकृत्यस्वरूपनिरूपणम् ॥

पार्वती—त्वयीमय त्रिलोकेश त्रिपुरारे त्रिलोचन ।
ब्राह्मे मुहूर्ते कर्तव्यङ्कर्म राज्ञा श्रुतम्मया ॥ १ ॥

इदानीं श्रोतुमिच्छामि कर्म सूर्योदयात्परम् ।
प्रातःकाले प्रकर्तव्यं राजभिस्तद्वदस्व मे ॥ २ ॥

श्रीशिवः—सार्वभौमो नरपतिर्मण्डलस्येश्वरोऽपि वा ।
साम्राज्यस्थैर्यसिद्ध्यर्थं सान्ध्यङ्कर्म यथोचितम् ॥ ३ ॥

निर्वर्त्य सूर्योदयतः प्रागेव वरवर्णिनि ।
पश्चान्महीपतिः कुर्याद्वक्ष्यमाणक्रमेण वै ॥ ४ ॥

आदित्योपासनां सर्वाभीष्टकार्यार्थसिद्धये ।
तपनोऽसि त्वमादित्य भक्तानान्तापमान्तरम् ॥ ५ ॥

हरसे भवतस्तस्माद्वेत्ति कस्त्वत्र गौरवम् ।
वदादित्य दुराराध्यदेवताः फलदाः किमु ॥ ६ ॥

सकृत्प्रणामात्फलदस्त्वमेकोऽसि जगत्त्रये ।
कथं हरेर्हरस्यापि त्वमादित्यासि लोचनम् ॥ ७ ॥

एकदैव तदाचक्ष्व विचित्रन्तव कौशलम् ।
समस्तामरसन्दोहतिलकन्त्वामहस्करम् ॥ ८ ॥

लोकोऽयम्पूर्वदिक्कान्तातिलकम्प्रवदत्यहो ।
देवाः परश्शतं सन्तु भजनीयस्त्वमेव मे ॥ ९ ॥

त्रिमूर्तयोऽपि त्वद्रूपभजनं हि वितन्वते ।
त्वं कैश्चिदुस्रैस्तपसि कैश्चिद्वर्षस्यहस्करः ॥ १० ॥

कैश्चित्पासि जलं यस्मात्तस्मात्ते चित्रभानुता ।
यस्मात्त्वम्भजताल्लोँके प्रददास्यमितं वसु ॥ ११ ॥

तस्मात्सहस्रधा वृद्धिमेति त्वद्वसुसन्ततिः ।
सदाऽहमुदयम्भक्तसंहतेः प्रतिपादये ॥ १२ ॥

इति सञ्चिन्त्य हृदये किमुदेषि दिनेदिने ।
एवं स्तुवन्बहुविधं शिरस्याधाय चाञ्जलिम् ॥ १३ ॥

सौरान्मन्त्रान्पुराणोक्तान्वैदिकांश्च यथोचितम् ।
त्रिवारमेकवारं वा जपित्वा प्रयतो नृपः ॥ १४ ॥

दण्डवत्प्रणिपत्योर्व्यां साष्टाङ्गं समनन्तरम् ।
आसने सम्यगासीनः प्राणायामपुरस्सरम् ॥ १५ ॥

सङ्कीर्त्य देशङ्कालञ्च ममारिष्टनिवृत्तये ।
इष्टप्राप्तयै समस्तारिसंक्षयाय जयाय च ॥ १६ ॥

अरोगदृढकायत्वसिद्धये चामितायुषे ।
प्रीत्यर्थं स्वेष्टदेवस्य यथाशक्ति यथाविधि ॥ १७ ॥

पूजाङ्करिष्य इत्युक्त्वा हरिं हरमथापि वा ।
ध्यात्वा हृदम्बुजे देवन्दक्षनासापुटाद्बहिः ॥ १८ ॥

अपसार्य तमारोप्य कुसुमं तत्प्रसूनकम् ।
निधाय हैम्यां राजत्याम्प्रतिमायान्ततः परम् ॥ १९ ॥

अवाह्यावाहनीमुद्रां स्थापनीं सन्निधापनीम् ।
सन्निरोधकरीञ्चैव सम्मुखीञ्च प्रसादिनीं ॥ २० ॥

दर्शयित्वाऽऽसनन्तस्मै दत्वा पाद्यमनन्तरम् ।
अर्घ्यमाचमनीयञ्च मधुपर्कं यथाविधि ॥ २१ ॥

पञ्चामृतैश्च स्नपनम्पुण्यतीर्थजलैरपि ।
कारयित्वांऽशुकं शुभ्रमुपवीतञ्च चन्दनम् ॥ २२ ॥

समर्प्य मालतीपुष्पैः कोमलैस्तुलसीदळैः ।
करवीरैर्जातिपुष्पैश्चम्पकैर्वकुळैश्शुभैः ॥ २३ ॥

नीलाम्बुजैर्बिल्वदळैः पुष्पमाल्यैश्च शोभनैः ।
सहस्रनामभिर्दिव्यैरष्टोत्तरशतैस्तु वा ॥ २४ ॥

पुरोहितोपदिष्टेन मार्गेणाभ्यर्च्य पार्थिवः ।
धूपन्दीपञ्च दत्वाऽथ नैवेद्यं विविधं प्रिये ॥ २५ ॥

समर्प्य ताम्बूलमपि दत्वा कृत्वा प्रदक्षिणम् ।
नत्वा बहुविधैस्स्तोत्रैस्स्तुत्वा नीराजनादिकान् ॥ २६ ॥

राजोपचारानखिलान्कृत्वा तत्तीर्थमद्रिजे ।
तुलसीदलसम्मिश्रं पीत्वा चुळुकमात्रकम् ॥ २७ ॥

तत्पादलग्नन्तुलसीदळन्धृत्वा स्वमूर्धनि ।
सम्पूज्य कपिलान्धेनुङ्गन्धपुष्पाक्षतादिभिः ॥ २८ ॥

तान्दत्वा विप्रवर्याय सोदकञ्च सदक्षिणम् ।
तिलान्सालग्रामशिलान्दत्वा दक्षिणया सह ॥ २९ ॥

गन्धप्रसूनताम्बूलान्यर्पयित्वा यथोचितम् ।
द्विजेभ्यस्तैः पुनर्दत्तानाशीर्वादाक्षतान्नृपः ॥ ३० ॥

धृत्वा स्वमूर्ध्नि तान्विप्रान्प्रस्थाप्य समनन्तरम् ।
पुराणश्रवणोद्युक्तो भवेन्नृपतिरद्रिजे ॥ ३१ ॥

इत्येवन्ते समाख्यातं प्रातःकालोचितम्मया ।
संक्षेपात्कर्म सुश्रोणि किमन्यच्छ्रोतुमिच्छसि ॥ ३२ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
प्रातःकालकर्तव्यराजकृत्यस्वरूपनिरूपणन्नाम
त्रिसप्ततितमः पटलः ॥

---

॥ अथ चतुस्सप्ततितमः पटलः ॥

॥ राज्ञां पुराणश्रवणस्वरूपनिरूपणम् ॥

पार्वती—कथं पुराणश्रवणङ्कर्तव्यन्नृपपुङ्गवैः ।
पौराणिको वा देवेश सङ्ग्राह्यः कीदृशो वद ॥ १ ॥

श्रीशिवः—प्रातर्मुहूर्तद्वितयादुपर्यद्रीन्द्रकन्यके ।
श्रोतव्यं भारतं राज्ञा नानानियमपूर्वकम् ॥ २ ॥

कैश्चिच्च वृद्धैर्विद्वद्भिस्सहान्तःपुरिकाजनैः ।
साकमाकल्पममरलोकवासाय केवलम् ॥ ३ ॥

पुराणन्यायमीमांसावेदवेदाङ्गवेदिनम् ।
सुरूपं सुस्वरन्धीरन्नानारागविशारदम् ॥ ४ ॥

शृङ्गारवीरप्रमुखरसाभिनयकोविदम् ।
सदा स्मितानन्देवि पौराणिकमकल्मषम् ॥ ५ ॥

उपवेश्योन्नते पीठे प्राङ्मुखः पार्थिवर्षभः ।
तं व्यासमेव सञ्चिन्त्य गन्धपुष्पाक्षतादिभिः ॥ ६ ॥

सम्पूज्य तस्य पुरतो दारुयन्त्राकृतौ शुभे ।
पीठे सारस्वते न्यस्तं पुस्तकं पुष्पदामभिः ॥ ७ ॥

अलङ्कृत्यामलैर्धूपन्दीपन्दत्वा फलान्यपि ।
नैवेद्यार्थङ्कल्पयित्वा दत्वा ताम्बूलमप्युमे ॥ ८ ॥

स्वयन्नीचासनस्थस्सन्तस्मात्पौराणिकान्नृपः ।
श्रुत्वा द्वित्रानथाध्यायान्तस्मै दत्वा च दक्षिणाम् ॥९॥

तं प्रस्थाप्यानलं सम्यगुपास्य तदनन्तरम् ।
दिव्यमाल्याम्बरधरो दिव्याभरणभूषितः ॥ १० ॥

हरिचन्दनलिप्ताङ्गो हारवारमनोहरः ।
लसन्बालातपव्याप्तस्सनिर्झर इवाद्रिराट् ॥ ११ ॥

मुखसौरभसंप्राप्तनिश्चलभ्रमरभ्रमम् ।
कलयन्तमिवात्यन्तङ्कस्तूरीतिलकं वहन् ॥ १२ ॥

स्वशस्त्रकृत्तशत्रुश्रीवेणीप्रज्ञाकरीङ्करे ।
कलयन्खड्गलतिकामरीणामतिभीषणम् ॥ १३ ॥

करं कस्यचिद्दासस्य वामेनालम्ब्य पाणिना ।
आस्थानशालामासाद्य हैमं सिंहासनन्नृपः ॥ १४ ॥

समारुह्याचलप्रस्थं सिंहशाब इवाद्रिजे ।
अच्छमौक्तिकगुच्छेन श्वेतच्छत्रेण शोभितः ॥ १५ ॥

सेवार्थमागतेनेव सतारेण सुधांशुना ।
वधूविधूयमानाभ्याञ्चामराभ्यां स्वपार्श्वयोः ॥ १६ ॥

स्रवन्निर्झरपूराभ्यामन्वितोऽद्रिरिवाद्रिजे ।
विद्वद्गोष्ठीसमुद्युक्तो भवेद्भूमिपुरन्दरः ॥ १७ ॥

इत्येवन्ते समाख्यातः पुराणश्रवणस्य तु ।
विधिर्विधुसमानास्ये किमन्यच्छ्रोतुमिच्छसि ॥ १८ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
गङ्गां पुराणश्रवणस्वरूपनिरूपणन्नाम
चतुस्सप्ततितमः पटलः ॥

## ॥ अथ पञ्चसप्ततितमः पटलः ॥

### ॥ राज्ञः कविबुधगायकैस्सह सम्भाषणम् ॥

पार्वती—शिव शङ्कर सर्वज्ञ पुराणश्रवणात्परम् ।
किङ्कर्तव्यं नृपालेन कथं विस्तरतो वद ॥ १ ॥

श्रीशिवः—विद्वत्प्रसङ्गः कर्तव्यः पुराणश्रवणात्परम् ।
पार्थिवेन प्रसिद्ध्यर्थङ्घटिकामात्रमद्रिजे ॥ २ ॥

कैश्चिद्व्याकरणाभिज्ञैः कैश्चित्तर्कविशारदैः ।
कैश्चिद्वैशेषिकैः प्रौढैः कैश्चिन्मीमांसकैः प्रिये ॥ ३ ॥

कैश्चिदद्वैतराद्धान्तपारावारस्य पारगैः ।
कैश्चिच्च योगशास्त्रज्ञैः कैश्चित्सांख्याविचक्षणैः ॥ ४ ॥

भाषमाणोऽतिगम्भीरमुक्तिप्रत्युक्तिपूर्वकम् ।
सभास्तारेषु सर्वेषु सशिरःकम्पमद्रिजे ॥ ५ ॥

श्लाघयत्सु स्वस्य बुद्धिचातुर्यं साधु साध्विति ।
कथाश्च कथयन्कांश्चिच्चिरन्तनमहीभुजाम् ॥ ६ ॥

एवं विधाय विद्वद्भिरस्सह गोष्ठीम्महीपतिः ।
तत्परङ्घटिकामात्रं वर्तेत कविभिस्सह ॥ ७ ॥

कैश्चिच्च षड्भिर्भाषाभिः प्रबन्धकरणक्षमैः ।
कैश्चिच्चतुर्विधस्यापि कवित्वस्य च पारगैः ॥ ८ ॥

कैश्चिदेवैकघटिका शतश्लोकविधायिभिः ।
कैश्चित्सकृल्लेखनिनां शतस्य समये समे ॥ ९ ॥

नानाविधसमस्याभिश्श्लोकान्नानाविधानपि ।
रचयित्वा वक्तुमुमे दक्षैः कविवरैरपि ॥ १० ॥

कैश्चिदेकद्वित्रिपादसमस्यापूरकैरपि ।
कैश्चित्प्रहेलिकाकारैः कैश्चिज्जातिप्रकाशकैः ॥ ११ ॥

कैश्चित्क्रियाकर्मकर्तृगुप्तश्लोकप्रवर्तकैः ।
कैश्चिदन्तर्लापिबहिर्लापि श्लोककैररपि ॥ १२ ॥

कैश्चिच्छ्लेषविशेषज्ञैः कैश्चिद्ध्वनिविचक्षणैः ।
सन्धिगुप्तिकरैः कैश्चित्कविभिर्विविधैः प्रिये ॥ १३ ॥

गद्यपद्यादिरचनां कृत्वा काश्चिच्चवै कथाः ।
पुरातनकवीनाञ्च कथयन्तत्परन्नृपः ॥ १४ ॥

वैणिकैस्सह वर्तेत घटिकामात्रमद्रिजे ।
कैश्चित्प्रवीणैर्वीणासु सुधास्यन्दिनिजस्वरैः ॥ १५ ॥

स्वरमण्डलतत्वज्ञैः कैश्चित्सुस्वरमण्डितैः ।
किन्नरस्वनवद्रम्यस्वनैः किन्नरपाणिभिः ॥ १६ ॥

कैश्चिद्रावणहस्तास्तकरैः कैश्चिच्च गायकैः ।
सहसङ्गीतसर्वस्वं विवृण्वन्निव पार्थिवः ॥ १७ ॥

दर्शयन् रुद्रवीणायान्द्वात्रिंशद्गीतचातुरीम् ।
स्वरानुकूल्यं विविधं स्फुटयन्स्वरमण्डले ॥ १८ ॥

स्वतानमानङ्कलयन्किन्नरे किन्नरस्वनम् ।
यन्त्रे रावणहस्ताख्ये रञ्जयन्नक्तिपाटवम् ॥ १९ ॥

एवं बहुविधं सम्यक्सङ्गीतङ्गायकैस्सह ।
प्रपञ्चयन्परं पश्चान्मन्त्रयन्मन्त्रिभिस्सह ॥ २० ॥

इत्येवन्ते समाख्यातं विद्वत्सुकविगायकैः ।
साकं सम्भाषणं राज्ञः किमन्यच्छ्रोतुमिच्छसि ॥ २१ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
राज्ञः कविबुधगायकैः सह सम्भाषणन्नाम
पञ्चसप्ततितमः पटलः ॥

---

॥ अथ षट्सप्ततितमः पटलः ॥

॥ राजमन्त्रिमन्त्रविचारनिरूपणम् ॥

पार्वती—[illegible] राज्ञा न्यायानुवर्तिना ।
कथम्मन्त्रः प्रकर्तव्यो मन्त्रिभिस्सह मे वद ॥ १ ॥

श्रीशिवः—विद्वद्गोष्ठीं विधायाथ नृपतिर्मन्त्रिभिस्सह ।
मन्त्रयेन्मन्त्रतत्त्वार्थङ्घटिकामात्रमद्रिजे ॥ २ ॥

ब्राह्मणैः क्षत्रियैर्वाऽपि नीतिशास्त्रविशारदैः ।
नृपोऽष्टभिश्चतुर्भिर्वा मन्त्रिभिस्स्वकुलागतैः ॥ ३ ॥

समन्वितैस्सरोजाक्षि मरुद्भिरिव वासवः ।
तान्प्रत्येवं वदेद्राजा भवन्तस्सर्वे एव हि ॥ ४ ॥

नीतिशास्त्रेषु निपुणाः प्रार्थयन्तश्च मे सदा ।
श्रेयःपरम्पराङ्कीर्तिं श्रियञ्चैवानपायिनीम् ॥ ५ ॥

मयोपचारो वक्तव्यो भवद्भ्योऽस्ति किमद्य वै ।
कथम्मया वर्तितव्यं राज्यरक्षणकर्मणि ॥ ६ ॥

निर्दाक्षिण्यम्भवन्तोऽद्य वदन्तु मम वै हितम् ।
इति ब्रुवन्तं राजानं सर्वे ते सचिवाः प्रिये ॥ ७ ॥

कृताञ्जलिपुटा भूत्वा विनयानतकन्धराः ।
विज्ञापयेयुर्देवेशि तस्मै गम्भीरया गिरा ॥ ८ ॥

भवत्समो भवानेव बुद्ध्या नास्त्यपरो भुवि ।
अस्माभिरस्ति चावेद्यङ्किमिहाद्य वदस्व नः ॥ ९ ॥

विज्ञापयामो यत्किञ्चिन्नयतत्त्वन्तथाऽपि ते ।
तद्भवच्चित्तसदृशं यद्यङ्गीक्रियतां विभो ॥ १० ॥

यो देवतान्यस्तभरो धीरोदात्तो दयापरः ।
शौर्यवान्सत्यसन्धश्च पूज्यते स नृपो भुवि ॥ ११ ॥

यस्त्यागी दीनरक्षायां धुरीणोऽतीव कोविदः ।
विनयी नयतत्वज्ञस्स नृपः पूज्यते जनैः ॥ १२ ॥

चतुर्षु चाप्युपायेषु चतुरो यो महीपतिः ।
पराक्रमबलोपेतस्सोऽरीन्विदलयेत्क्षणात् ॥ १३ ॥

बहुयत्नार्जितन्द्रव्यं वितीर्य तृणवन्नृपः ।
क्रीणीयात्कीर्तिहारं वै वश्यार्थन्तु जयश्रियः ॥ १४ ॥

अन्यो जनो रक्षितश्चेत्समयेऽन्यत्र गच्छति ।
ध्वांक्षेण वर्धितो राजन्कलकण्ठशिशुर्यथा ॥ १५ ॥

प्रतापवानपि नृपो बलञ्चेन्न प्रकाशयेत् ।
शत्रुर्न शाम्यति तमः सूर्योस्रैरस्तगैरिव ॥ १६ ॥

स्पृहणीयगुणं सर्वे भजन्ते नृपतिं जनाः ।
भ्रमरा इव संहृष्टाः सहकारं ससौरभम् ॥ १७ ॥

राज्ञि युद्धेऽतिसन्नद्धे प्रसन्नास्स्युर्भटा भृशम् ।
सूर्ये दिनमुखे राजत्यम्बुजौघा इवाखिलाः ॥ १८ ॥

आत्मबुद्ध्यनुसारेण मन्त्रिभिर्यन्निवेदितम् ।
तस्मिन्साधु प्रगृह्णीयाद्यथा मणिपरीक्षकः ॥ १९ ॥

एवं सुमन्त्रिभिस्सम्यग्बोधितो नृपसत्तमः ।
तत्तत्कार्याणि कुर्वीत साम्राज्यस्थैर्यसिद्धये ॥ २९ ॥

यो राजा मन्त्रिभिस्साकमनालोच्य निजेच्छया ।
पालयत्यवनीम्मौर्ख्यात्सोऽरिभिः परिभूयते ॥ ३० ॥

तस्मादावश्यकतया साम्राज्यस्थैर्यसिद्धये ।
मन्त्रिभिर्मन्त्रयित्वैवं प्रत्यहं पार्थिवर्षभः ॥ ३१ ॥

पालयेदवनीं सर्वान्धैर्यस्थैर्यसमन्वितः ।
इत्येवन्ते समाख्यातस्सचिवैस्सह भूपतेः ॥
आलोचनक्रमस्सम्यक्किमन्यच्छ्रोतुमिच्छसि ॥ ३२ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
राजमन्त्रिमन्त्रविचारस्वरूपनिरूपणन्नाम
षट्सप्ततितमः पटलः ॥

---

॥ अथ सप्तसप्ततितमः पटलः ॥

॥ राज्ञाऽऽमध्याह्नकर्तव्यकर्मस्वरूपनिरूपणम् ॥

पार्वती—देवदेव दयासिन्धो सर्वज्ञ भवतो मुखात् ।
मन्त्रस्वरूपमखिलं श्रुतन्नृपतिमन्त्रिणाम् ॥ १ ॥

इदानीं श्रोतुमिच्छामि कथं राज्ञा नियोगिभिः ।
ऊहापोहविचारस्तु कर्तव्यः कमलेक्षण ॥ २ ॥

वक्तुमर्हस्यशेषेण यद्यस्ति मयि ते कृपा ।
श्रीशिवः—नृपो नियोगिभिर्वृद्धैः प्रज्ञया वयसाऽपि च ॥ ३ ॥

कुलक्रमागतैस्साकङ्घटिकामात्रमद्रिजे ।
देशकालप्रसङ्गांस्तु कांश्चित्कृत्वा ततः परम् ॥ ४ ॥

पौराः कीदृग्विधाचारा जना जानपदा अपि ।
इति चारमुखाच्छ्श्वद्विचार्य समनन्तरम् ॥ ५ ॥

नाना दिग्भ्यस्समानीता नानादेशमहीभुजाम् ।
पत्रिका दिनचर्याणां वाचयद्भ्योऽतिनिर्भरम् ॥ ६ ॥

लेखकेभ्यः पुनस्तत्तद्राजवृत्तान्तमञ्जसा ।
विज्ञाय तत्परन्नानादिनकृत्यपरान्नरान् ॥ ७ ॥

भौरिकान्नैष्किकान्धान्यकोष्ठाध्यक्षानपि प्रिये ।
आह्वापयित्वा चादायव्ययौ पृष्ट्वा ततः परम् ॥ ८ ॥

आनाय्य कुञ्जरानश्वान्सहास्तिपकसादिनः ।
पल्याणानि कुथाश्चैव मोचयित्वाथ तान्पुनः ॥ ९ ॥

दृष्ट्वा सम्यग्गदार्तानाङ्कल्पयित्वौषधादिकम् ।
कृशानाङ्ग्रासममितन्दीयतामिति पार्थिवः ॥ १० ॥

नियोज्य मन्दुराधीशान्गजकूटाधिपानपि ।
तत्परं रथिकान्योधान्नानायुद्धविशारदान् ॥ ११ ॥

आनाययित्वा तान्दृष्ट्वा तेभ्यो दत्वाथ वेतनम् ।
आमध्याह्नप्रदेयञ्च तत्परम्भूपुरन्दरः ॥ १२ ॥

सामन्तराजसङ्घानामितरेषाञ्च भूभुजाम् ।
स्वदर्शनङ्कारयित्वा घटिकामात्रमद्रिजे ॥ १३ ॥

तत्परन्तैस्समेतस्सन्खुरलीम्प्राप्य चोन्नताम् ।
स्वायताञ्च सुविस्तीर्णां सगवाक्षां समन्ततः ॥ १४ ॥

कुत्रचिद्रक्तमृद्राशिसंयुतां क्वचिदप्युमे ।
आश्लेषस्तम्भगम्भीरां क्वचिच्चैव स्थलान्तरे ॥ १५ ॥

क्षुद्रपाषाणसम्पूर्णमहाघोणीसमन्विताम् ।
क्वचिच्च शैलकटकसङ्घसंशोभितान्तराम् ॥ १६ ॥

ततस्तस्यां समाराध्य भेतालम्प्रमथम्मम ।
गन्धपुष्पाक्षतैर्धूपदीपनैवेद्यकैरपि ॥ १७ ॥

ततस्स्वयं रक्तकक्ष्यानद्धमध्यो महीपतिः ।
शीर्ष्ण्यामुक्तकुलायश्च रक्तमृत्पांसुलेपितः ॥ १८ ॥

दक्षे साधनखड्गञ्च करे वामे च खेटकम् ।
दधानस्तत्परं यातायातैस्सव्यापसव्यतः ॥ १९ ॥

गोमूत्रवक्रगतिभिर्मण्डलभ्रमणैरपि ।
मल्लैस्सह श्रमं कृत्वा मुष्टामुष्टि ततः परम् ॥ २० ॥

राजपुत्रैर्महावीर्यैस्सवयोभिस्सहाद्रिजे ।
आलोकका‌श्चर्यकरं खड्गाखड्गि गदागदि ॥ २१ ॥

कृत्वा श्रमं बहुविधं पश्चाद्राजकुमारकान् ।
प्रस्थाप्य मल्लैस्सहितो गत्वा मज्जनमन्दिरम् ॥ २२ ॥

नमज्जनशताकीर्णन्तत्र पीठे हिरण्मये ।
निषण्णस्सलिलैस्स्वर्णकटाहस्थैस्सुनिर्मलैः ॥ २३ ॥

नृपस्संस्नापितो मल्लैर्धृत्वा शुक्लाम्बरद्वयम् ।
धृत्वोर्ध्वपुण्ड्रं विधिवत्कृत्वा माध्याह्निकीं क्रियाम् ॥२४

स्वेष्टदेवं समाराध्य लक्ष्मीं साम्राज्यदायिनीम् ।
शङ्खदुन्दुभिनिर्घोषैस्साकं सम्पूज्य तत्परम् ॥ २५ ॥

शुद्धान्तं प्रविशेद्राजा तूर्यघोषपुरस्सरम् ।
इत्येवन्ते समाख्यातम्मध्याह्नोचितमद्रिजे ॥
राजकृत्यं समासेन किमन्यच्छ्रोतुमिच्छसि ॥ २६ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
आमध्याह्नकालकर्तव्यराजकृत्यस्वरूपनिरूपणन्नाम
सप्तसप्ततितमः पटलः ॥

---

## ॥ अथाष्टसप्ततितमः पटलः ॥

## ॥ नृपभोजनवैभवनिरूपणम् ॥

पार्वती—शम्भो शङ्कर सर्वज्ञ मध्याह्नसमये नृपैः ।
कर्म कर्तव्यमखिलं श्रुतन्त्वद्वदनाम्बुजात् ॥ १ ॥

इदानीं श्रोतुमिच्छामि राज्ञो भोजनवैभवम् ।
वक्तुमर्हसि देवेश यद्यस्ति मयि ते कृपा ॥ २ ॥

श्रीशिवः—मध्याह्नसमयेऽतीते काचिद्वक्त्रार्पिताञ्जलिः ।
भोजनावसरं राज्ञे कान्ता विज्ञापयेत्प्रिये ॥ ३ ॥

ततो नानाविधैस्स्वर्णभाजनैः कदलीदलैः ।
अन्वितम्भोजनागारम्प्रविश्य नृपपुङ्गवः ॥ ४ ॥

रत्नपीठे समासीनः कटाक्षकलनेन वै ।
वरासनेषु वनिताः पङ्क्तिशो विनिवेशयेत् ॥ ५ ॥

एकत्र पुत्रान्पौत्रांश्च दौहित्रान्दुहितॄस्तथा ।
जामातॄंश्च विशेषेण स्वास्तीर्णेषूपवेशयेत् ॥ ६ ॥

रत्नपीठेषु देवेशि स्वयमेव महीपतिः ।
अत्रान्तरेऽबला काचिदादाय व्यजनं शनैः ॥ ७ ॥

चालयेत्कारिणीव स्वङ्कर्णन्तन्नृपपार्श्वगा ।
अथापरा करधृतगळन्ती कमलेक्षणा ॥ ८ ॥

निवसेत्तस्य निकटे विनयानतमध्यमा ।
कन्याऽन्या पार्ष्णिभागस्था मनोज्ञाम्पटपाळिकाम् ॥९॥

वीजयेत्पार्श्वयोस्तस्य विभोर्विधुमुखी तदा ।
महानसादथागम्य काश्चित्कमललोचनाः ॥ १० ॥

शंसन्त इव तद्राज्ञे रत्नाभरणशिञ्जितैः ।
उत्कर्षम्भोज्यवस्त्वादेर्हेमपात्रकराः प्रिये ॥ ११ ॥

कलयेयुर्भाजनेषु परिवेषणमादरात् ।
शाल्यन्नं विविधं सूपं शाकानि विविधानि च ॥ १२ ॥

उच्चावचानि भक्ष्याणि भोज्यान्यन्यादृशानि च ।
नानाविधानि चोष्याणि लेह्यान्यपि विशेषतः ॥ १३॥

नानाफलानि स्वादूनि पानीयान्यप्यगात्मजे ।
कान्ताजनेन तु परिवेषितानि पृथक्पृथक् ॥ १४ ॥

सह प्रियाभिश्चतुरश्चतुरोक्तिपुरस्सरम् ।
भुक्त्वा गलन्ती मुखतो विगलद्गन्धवारिणा ॥ १५ ॥

प्रमृज्य वक्त्रं प्रक्षाल्य हस्तौ पादौ च तत्परम् ।
आचम्य धूपितो धूपैर्दिव्यस्त्रीभिस्तदा नृपः ॥ १६ ॥

भुक्तभोज्यादिजीर्णार्थङ्करेण स्वोदरं स्पृशन् ।
सञ्चिन्त्यागस्त्यमव्यग्रङ्कृत्वा शतपदक्रमम् ॥ १७ ॥

स्वासने सम्यगासीनश्श्रुत्वा रामायणन्द्विजात् ।
द्वित्रान्सर्गान्प्रतिदिनङ्कृतपापविमुक्तये ॥ १८ ॥

मुक्तये च वरारोहे तत्परन्तुळसीदळम् ।
विष्णुपादार्पिताङ्किञ्चिदास्वाद्य नियतव्रतः ॥ १९ ॥

ततो महार्हमारुह्य मञ्चम्मणिमयन्नृपः ।
मूर्तिमानिव कन्दर्पस्तत्र तिष्ठेत्प्रियाऽन्वितः ॥ २० ॥

करङ्कवाहिनी काचित्तत्परन्तन्महीभृते ।
वितीर्य पूगखण्डानि कर्पूरोन्मिश्रितानि वै ॥ २१ ॥

कनिष्ठिकायामावेष्ट्य मार्ष्टि शाटीम्मनोहराम् ।
नखाग्रपाटितन्नागवल्लरीदळमद्विजे ॥ २२ ॥

सुधानुलिप्तन्धवलं वेष्टितम्प्रतिपादयेत् ।
अन्या संवाहयेत्पादं पादपीठे निषेदुषी ॥ २३ ॥

नमत्सामन्तमकुटसङ्घर्षादिव पाटलम् ।
कन्येऽन्ये तदपाङ्गांशुसुधाऽब्ध्यूर्मिषु हंसकौ ॥ २४ ॥

चारयन्त्याविव द्वौ तु वीजयेताम्प्रकीर्णके ।
काचित्कमलपत्राक्षी नृपास्यासक्तलोचना ॥ २५ ॥

करे कलाचिकान्धृत्वा निवसेत्स्तम्भपार्श्वगा ।
काचिद्दलन्तिकान्दध्यात्काञ्चनीं हंसरूपिणीम् ॥ २६ ॥

सूचयन्तीव हंसोऽयङ्गृहीतो गतिचोरकः ।
काश्चित्कान्ताः कलाः काश्चिद्दर्शयेयुर्महीभृते ॥ २७ ॥

विलासविभ्रमोपेतास्तदा तत्समयोचिताः ।
ततश्शयानश्शय्यायाम्मुहूर्तम्पृथिवीपतिः ॥ २८ ॥

विनिद्र एव विश्रम्य शयनादुत्थितः पुनः ।
सखड्गस्सशिरस्त्राणस्सर्वाभरणभूषितः ॥ २९ ॥

बहिर्निर्गत्य भद्रेभमारुह्य स्वकुलागतम् ।
चतुरङ्गबलोपेतस्सामन्तनृपसम्युतः ॥ ३० ॥

बन्दिभिर्नन्द्यमानस्सन्नुद्बाहुभिरुदारधीः ।
पूर्यमाणे पुरोदेशे शङ्खदुन्दुभिनिस्वनैः ॥ ३१ ॥

रथ्यासु राजमार्गेषु विपणीषु विशेषतः ।
रम्यहर्म्यान्तरचरल्ललनानयनोत्पलैः ॥ ३२ ॥

अलङ्कृत इवापणे विचरेद्भूपुरन्दरः ।
इत्येवन्ते समाख्यातङ्किञ्चिद्भोजनवैभवम् ॥
तत्परं राजकर्तव्यङ्कर्म चाद्रीन्द्रकन्यके ॥ ३३ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकाया
राज्ञा भोजनवैभवस्वरूपनिरूपणन्नाम
अष्टसप्ततितम पटल ॥

---

## अथैकोनाशीतितमः पटलः ॥

### ॥ सायन्तनात्परं राजकर्तव्यकर्मनिरूपणम् ॥

पार्वती—देवदेव महादेव राज्ञा सायन्तनात्परम् ।
कर्तव्यङ्कर्म मे ब्रूहि मय्यस्ति यदि ते कृपा ॥ १ ॥

श्रीशिवः—देवि सम्यक्त्वया प्रश्नः कृतो लोकहितेच्छया ।
प्रश्नानुरूपं वक्ष्यामि शृणूत्तरमतन्द्रिता ॥ २ ॥

धर्मानुवर्ती नृपतिः पुरसञ्चारतः परम् ।
सायन्तनाख्ये समये प्रदीप इव पार्वति ॥ ३ ॥

पतत्पतङ्गसदिव सङ्कुचत्कमले प्रिये ।
उपास्य पश्चिमां सन्ध्यां समाराध्यानलन्द्विजात् ॥ ४ ॥

श्रुत्वा भागवतङ्किञ्चित्पश्चात्साम्राज्यदायिनीम् ।
सम्पूज्य लक्ष्मीं साम्राज्यस्थैर्यसिद्ध्यर्थमद्रिजे ॥ ५ ॥

दिव्यमाल्याम्बरधरो दिव्याभरणभूषितः ।
ललाटपट्टरचितकस्तूरीतिलकोज्ज्वलः ॥ ६ ॥

कान्तकान्ताजनधृतकरदीपशतांशुभिः ।
प्रकाशिते पुरोदेशे विजृम्भत्यतिसम्भ्रमम् ॥ ७ ॥

तूर्यस्वने गीतकलामिश्रितेऽतिमनोहरे ।
आस्थानकूटमासाद्य रत्नसिंहासने शुभे ॥ ८ ॥

समासीनस्सरोजाक्षि सामन्तनृपपुङ्गवान् ।
विबुधान्कविमुख्यांश्च गायकान्परिहासकान् ॥ ९ ॥

नटांश्च वैणिकांश्चैव तथा वैणविकानपि ।
ह्वाययित्वाऽथ तैस्साकन्दिव्यवेषधरैर्नरैः ॥ १० ॥

अनेकशतसङ्ख्याकैर्धृतानान्तु पुरो भुवि ।
सस्नेहानां सरोजाक्षि सदा सज्जनचित्तवत् ॥ ११ ॥

प्रणम्य करदीपानान्तत्परं वारयोषितः ।
दिव्यमाल्याम्बरधरो मनोज्ञमणिभूषणाः ॥ १२ ॥

विलासविभ्रमैस्सौम्यैर्विजिताप्सरसः प्रिये ।
सेना इव कपीन्द्राणां सुग्रीवाङ्गदशोभिताः ॥ १३ ॥

अलकोद्भासिता यक्षनायकस्येव सम्पदः ।
मुष्टिग्राह्यविलग्नाढ्या यष्टीरिव च धन्विनाम् ॥ १४ ॥

समागतास्स्वसेवार्थमङ्गीकृत्य कटाक्षतः ।
ताः प्रस्थाप्य ततो राजा विद्वद्भिः कविभिस्सह ॥ १५ ॥

देशकालोचिताः काश्चित्कथास्तु कथयन्पुनः ।
तत्तद्देशान्तरानीततत्तत्सन्देशपात्रिकाः ॥ १६ ॥

वाचयद्भ्यो लेखकेभ्यश्श्रुत्वा तत्तन्महीभुजाम् ।
वृत्तान्तन्तैस्समेतस्सन्नाट्यशालाम्मनोहराम् ॥ १७ ॥

नटनर्तकसंबाधाम्प्रविशेद्भूपुरन्दरः ।
इत्येवन्ते समाख्यातङ्कर्म सायन्तनात्परम् ॥
कर्तव्यं राजभिर्देवि किमन्यच्छ्रोतुमिच्छसि ॥ १८ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
राज्ञा सायन्तनानन्तरकर्तव्यकर्मस्वरूपकथनन्नाम
एकोनाशीतितमः पटलः ॥

---

## अथाशीतितमः पटलः ॥

### ॥ राज्ञो लास्यावलोकनम् ॥

पार्वती—भव भक्तजनाधीन शिव शाश्वत शङ्कर ।
कथं लास्यकला राज्ञा द्रष्टव्याऽद्य वदस्व मे ॥ १ ॥

श्रीशिवः—देवि सम्यक्त्वया प्रश्नः कृतो लोकहितेच्छया ।
प्रश्नानुरूपं वक्ष्यामि शृणूत्तरमगात्मजे ॥ २ ॥

सार्वभौमो नरपतिर्मण्डलस्येश्वरोऽपि वा ।
साम्राज्यलक्ष्म्यास्स्थैर्यार्थं सर्वसौभाग्यसिद्धये ॥ ३ ॥

पश्येल्लास्यकलां रम्यान्नटीभिरभिसूचिताम् ।
आलोककाश्चर्यकरीम्मनोनयननन्दिनीम् ॥ ४ ॥

दिव्यमाल्याम्बरधरो दिव्याभरणभूषितः ।
मूर्तिमानिव कन्दर्पः प्रेक्षणीयतराकृतिः ॥ ५ ॥

नाट्यशालां समासाद्य विशालां स्वायतां शुभाम् ।
अत्युन्नतां समतलां सुवितानां सुतोरणाम् ॥ ६ ॥

कालागरुरजःक्लृप्तधूपगन्धमनोहराम् ।
सुमनोदामसौरभ्यभ्रमद्भ्रमरसङ्कुलाम् ॥ ७ ॥

कुट्टिमान्तः प्रतिफलन्नटीभिर्लास्यवैभवम् ।
आगताभिरिव द्रष्टुम्पातालादिह सादरम् ॥ ८ ॥

धन्याभिर्नागकन्याभिरन्यादृग्देहकान्तिभिः ।
शोभमानां सरोजाक्षि तत्परम्पृथिवीपतिः ॥ ९ ॥

सिंहासने समासीनश्श्वेतच्छत्रेण चारुणा ।
वधूविधूयमानाभ्याञ्चामराभ्याञ्च शोभितः ॥ १० ॥

अङ्गवङ्गकलिङ्गान्ध्रचोलनेपालमाळवान् ।
पाण्ड्यसौवीरसौराष्ट्रनृपानन्यांश्च पार्थिवान् ॥ ११ ॥

आह्वाययित्वा पुरुषैर्वेत्रहस्तैस्ससम्भ्रमम् ।
अपाङ्गसंज्ञया सर्वानासनेषूपवेश्य तान् ॥१२॥

विबुधांश्च कवीन्मुख्यान्गायकान्वन्दिनस्तथा ।
उपवेश्योचितस्थानेष्ववलोकनसंज्ञया ॥ १३ ॥

स्वयं भरतशास्त्रार्थं विवृण्वन्विबुधैस्सह ।
लास्यावलोकनपरो भवेद्भूमिपुरन्दरः ॥ १४ ॥

अथ लास्यालोकनेच्छोर्नृपस्यापाङ्गसंज्ञया ।
पुरुषैर्नाट्यशालायां सज्जितायान्तु कैश्चन ॥ १५ ॥

सहतालधरस्त्रीभिः काश्चित्कमललोचनाः ।
वंशादिध्मानचातुर्यङ्कलयन्ति नृपाग्रतः ॥ १६ ॥

पुनः काश्चन कामिन्यः कङ्कणस्वनमांसलान् ।
रचयन्ति प्रभोस्तस्य पुरस्तान्मर्दलस्वनान् ॥ १७ ॥

काश्चिद्यवनिकां बद्ध्वा द्वे तु काञ्चनचित्रिताम् ।
पुरस्ताद्राजसिंहस्य वहतोऽतिमनोहरे ॥ १८ ॥

ततो बिरुदवाद्यानान्निस्वनोऽतिमनोहरः ।
प्रभवेत्प्रभवे पात्रप्रागल्भ्यङ्कथयन्निव ॥ १९ ॥

तत्परम्प्रतिशी[सी]रान्तर्मञ्जुमञ्जीरनिस्वनाः ।
प्रभवन्ति प्रशंसन्तः इव पात्रप्रवेशनम् ॥ २० ॥

तत्परम्प्रतिशीरायामाहतायान्तु काचन ।
दृश्यते चन्द्रलेखेव विश्लिष्टा सन्ध्यया नटी ॥ २१ ॥

अथ सा नाट्यविद्याधिदेवतायै पुरो भुवि ।
कङ्कणप्रभया साकन्ददाति कुसुमाञ्जलिम् ॥ २२ ॥

ततोऽवलोकनात्तस्य सा भवेदतिविभ्रमा ।
लता वसन्तसान्निध्याद्तिरम्येव माधवी ॥ २३ ॥

ततस्तस्यापाङ्गसंज्ञा प्रेषिता सा नटी प्रभोः ।
स्फुटीकरोत्यभिनयानतिविस्मयदायिनः ॥ २४ ॥

अथ नाट्योचितैरङ्गहारैरसा नर्तकी पुनः ।
विविधैर्हृदये तस्य करोति रुचिरां रुचिम् ॥ २५ ॥

ततो नटति तद्बुध्वा मनोज्ञे नयनाञ्चले ।
मानसन्तन्महीभर्तुर्दद्याद्रागमहो नवम् ॥ २६ ॥

ततः परश्शता वध्वो रूपविद्यागुणैस्समाः ।
नटन्ति देशीमुख्याद्यैरहंपूर्विकयाऽऽदरात् ॥ २७ ॥

पयोदवदपाङ्गस्य तस्योज्जृम्भति तेजसि ।
मयूरीव लसल्लास्या काचिद्भवति लासिका ॥ २८ ॥

काचिद्यदि विभोरग्रे नृत्यन्त्यात्मभुवा जिता ।
चलद्धारैस्तयाच्छाद्यास्सात्विकस्वेदबिन्दवः ॥ २९ ॥

चञ्चत्पुटाद्यैर्मद्वक्त्रजनितैर्नटनम्पुनः ।
कार्यम्पञ्चविधैर्मार्गतालैः कैश्चिद्वधूजनैः ॥ ३० ॥

जयमङ्गलतालेन सिंहलीलाभिधेन च ।
लीला जयाख्यतालेन रतिलीलाह्वयेन च ॥ ३१ ॥

तुरङ्गलीलाऽभिख्येण रङ्गाभरणकेन च ।
नन्दिनन्दनतालाद्यैः कर्तव्यन्नटनं प्रिये ॥ ३२ ॥

कयाचिन्नटनङ्कार्यङ्करचातुर्ययुक्तया ।
स्थायिसञ्चारिरसयुग्भावदृष्टिभिरादरात ॥ ३३ ॥

ततस्तल्लास्यशालायामूर्ध्वभागप्रकल्पितैः ।
प्रतिमानिवहैर्नाट्यकलान्द्रष्टुमिहागतैः ॥ ३४ ॥

त्रिदिवादप्सरस्सङ्घैरिव मञ्जुलमूर्तिभिः ।
आपादयेत्पुष्पवृष्टिमवनीपतिरादरात् ॥ ३५ ॥

श्लाघयत्स्वथ सर्वेषु सभास्तारेषु नर्तनम् ।
नटीनाङ्कारयेद्राजा कनकेनाभिषेचनम् ॥ ३६ ॥

ततोऽभिषेचनद्रव्यङ्कविगायकवान्दिनाम् ।
दत्वा गन्धादिकञ्चापि पुनः प्रस्थाप्य तान्प्रिये ॥ ३७ ॥

नटीभिस्सह शुद्धान्तं प्रविशेद्भूपुरन्दरः ।
एवमाचरितं पूर्वङ्ककुत्स्थेन ययातिना ॥ ३८ ॥

सगरेण दिलीपेन कार्तवीर्येण गाधिना ।
तस्मादावश्यकतया साम्राज्यस्थैर्यकांक्षिभिः ॥ ३९ ॥

राजास्ये राजभिस्सम्यक्कार्यन्नाट्यावलोकनम् ।
इत्येवन्ते समाख्यातल्लाँस्यदर्शनवैभवम् ॥

सङ्ग्रहेण सरोजाक्षि किमन्यच्छ्रोतुमिच्छसि ॥ ४० ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
लास्यदर्शनस्वरूपकथनन्नाम
अशीतितमः पटलः ॥

---

अथैकाशीतितमः पटलः ॥

॥ राज्ञो ज्योत्स्नाविहारस्वरूपकथनम् ॥

पार्वती—त्रिनेत्र त्रिपुराराते त्रिशूलधर शङ्कर ।
लास्यावलोकनाविधिस्त्वया सम्यङ्निरूपितः ॥ १ ॥

इदानीं श्रोतुमिच्छामि चतुरेण महीक्षिता ।
ज्योत्स्नाविहारःकर्तव्यः कथङ्कथय मेऽनघ ॥ २ ॥

श्रीशिवः—साधु साधु वरारोहे यन्मां त्वं परिपृच्छसि ।
तत्तेऽहं संप्रवक्ष्यामि शृणुष्व सुसमाहिता ॥ ३ ॥

पार्थिवस्स्फाटिकतले निवसन्नतिशीतले ।
विधुं वीक्ष्य सहस्त्रीभी रन्तुमुत्कमना भवेत् ॥ ४ ॥

विशालोरस्स्फुरद्धारश्चन्द्रयुक्चन्दनाङ्कितः ।
पुष्पस्रगुल्लसन्मौलिर्भूत्वा भूपतिरद्रिजे ॥ ५ ॥

अतिरम्येषु हर्म्येषु क्रीडाशैलेषु चारुषु।
दीर्घेषु दीर्घिकातीरेष्वाक्रीडेषु महत्सु च ॥ ६ ॥

लतागृहेषु मूलेषु नानापुष्पमहीरुहाम्।
करेणुभिः परिवृतः करीन्द्र इव कानने ॥ ७ ॥

मुहूर्तमात्रङ्क्रीडित्वा प्रविश्यान्तःपुरम्पुनः।
वीथीषु च विशालासु सञ्चरंस्तत्र तत्र तु ॥ ८ ॥

प्रविश्य गेहङ्कस्याश्चिद् धूपगन्धमनोहरम्।
लज्जयाऽवनतग्रीवामात्मानमभिवीक्ष्य तु ॥ ९ ॥

सखीसमक्षं पर्यङ्के तामारोप्यावनीपतिः।
सखीजने विनिर्याते कटाक्षाकलनेन तु ॥ १० ॥

रिरंसुस्तामतिप्रौढां वचनैर्भावगर्भितैः।
वशीकुर्याद्वक्ष्यमाणक्रमेण सरसो नृपः ॥ ११ ॥

त्वद्गात्रमार्दवस्पर्धीन्यमून्यत्राधरीकुरु।
पुष्पाणीति वदन्पुष्पतल्पे तामुपवेशयेत ॥ १२ ॥

कान्ते त्वद्वक्त्रसौरभ्यं वीटिकाऽप्यभिकांक्षति।
मनोज्ञसौरभेत्युक्त्वा तस्मै दद्यात्स वीटिकाम् ॥ १३ ॥

पद्मे सौरभ्यमधिकमुत त्वद्वदनेऽधिकम्।
वदेत्युदीर्य तद्वक्त्रमाजिघ्रेत्स महीपतिः ॥ १४ ॥

प्रकाशते कोकयुग्मन्दिवैव न तु रात्रिषु ।
प्रकाशयामि तद्रात्रौ पश्य मत्करचातुरीम् ॥ १५ ॥

इत्युदीर्याथ कञ्चुल्याश्श्लथयेद्बन्धनन्नृपः ।
कपोतेभ्यस्तथाऽभ्यस्ता रम्याः किलकिलस्वनाः ॥१६॥

तान्प्रकाशय शुश्रूषोर्ममेति प्रवदेन्नृपः ।
अलकाकुलितं वक्त्रम्भ्रमद्भ्रमरपद्मवत् ॥ १७ ॥

मनोज्ञमिति मन्येऽहं साधयास्मन्मनोरथम् ।
इत्युदीर्य सरोजाक्षीन्तां समरोप्य चोपरि ॥ १८ ॥

चलाचलालककिङ्किञ्चिद्विलगमानकुचद्वयम् ।
सम्यक्सञ्जातरोमाञ्चमर्धोन्मीलितलोचनम् ॥ १९ ॥

कुर्यादनङ्गविद्याया हृद्यायाः पारगान्नृपः ।
अथ तत्कुचयुग्मावमर्दनावाप्तचन्दनम् ॥ २० ॥

वस्त्राञ्चलेन सञ्छाद्य वक्षोन्याम्प्राप्नुयान्नृपः ।
तथायान्तन्तदा कान्तं विलोक्याथ तदङ्गना ॥ २१ ॥

वदेदेवङ्कलुषिता प्रगल्भा भावगर्भितम् ।
शृङ्गारस्य रसस्यानुभूतिमाचक्षते तव ॥ २२ ॥

कान्तान्यङ्गानि हे कान्त हेतुरत्र हि चन्द्रिका ।
इतीरयन्तीन्तां राजा समाश्वास्य तलोदरीम् ॥ २३ ॥

तया सह रमित्वाथ पुनरन्यामवाप्नुयात् ।
लुप्ताङ्गरागं विगलन्माल्यमायान्तमन्तिकम् ॥ २४ ॥

कान्तमालोक्य सा कान्ता वदेदेवं सदा प्रिये ।
त्वरया किमिहायातस्त्यक्त्वा कार्यपरम्पराम् ॥ २५ ॥

अवैमि मयि दाक्षिण्यमस्तीति तव सर्वदा ।
इति ब्रुवाणान्तां कान्तां हसन्नालिङ्ग्य सत्वरम् ॥२६॥

तया सह रमेताद्रिकन्ये नृपतिसत्तमः ।
अथ काचित्प्रियाऽऽयान्तं बिलम्ब्य सुचिरन्नृपम् ॥

दृष्ट्वा मया विलम्बस्ते भवद्भालस्थलाञ्चितात् ।
लाक्षारसात्त विदित इति निष्ठुरभाषिणीम् ॥ २८ ॥

सान्त्वयन्मधुरैर्वाक्यैः प्रणयेद्रतिविभ्रमैः ।
अथापराधमात्मीयम्प्रच्छाद्यासाद्य काञ्चन ॥ २९ ॥

दृश्यसे कुपितेव त्वमपराधोऽस्ति चेन्मयि ।
वदेति वादिनम्भूपम्प्रगल्भैवं वदेद्वधूः ॥ ३० ॥

कलामेकां विधोर्बिभ्रच्छिवस्सर्वज्ञतामगात् ।
तवाखिलकलाढ्यस्य नास्ति सर्वज्ञता कथम् ॥ ३१ ॥

भवानेव भवत्कृत्यं सर्वं वेत्सि न संशयः ।
इति ब्रुवाणान्निश्चित्य प्रगल्भान्ताम्महीपतिः ॥ ३२ ॥

तोषयेन्मञ्जुवचनभूषणालिङ्गनादिभिः ।
अथात्मनोऽभ्यागमनम्मत्वा वेश्म सखीजनैः ॥ ३३ ॥

आकल्पयन्तीमपरामासाद्यैवं वदेन्नृपः ।
त्वय्यत्राकल्पभूतायं त्रिलतायां रमणीमणौ ॥ ३४ ॥

किमर्थमयमायासस्सद्नाकल्पकल्पने ।
इतीरयंस्तया साकं रमेत नृपतिश्चिरम् ॥ ३५ ॥

ततो निसर्गरम्याणि निजाङ्गानि विभूषणैः ।
अलङ्कर्तुं समुद्युक्ताङ्काञ्चित्प्राप्य प्रियान्नृपः ॥ ३६ ॥

त्रैलोक्यभूषणान्यङ्गान्यतिरम्याणि ते कथम् ।
अलङ्करोषि भूषाणाम्भूषाः किं सन्ति भूतले ॥ ३७ ॥

इत्युदीर्य नृपः कान्तां कुर्यादात्तमनोरथाम् ।
अमर्षादवधीर्य स्वम्पश्चात्तापसमन्विताम् ॥ ३८ ॥

पार्थिवः प्राप्नुयादन्याम्प्रार्थितस्तत्सखीजनैः ।
कुलशीलादिरूपाद्यैरपरामात्मनस्समाम् ॥ ३९ ॥

अलङ्कृतामतिप्रौढाम्भजेद्विधुमुखीन्नृपः ।
ततस्संवेशसदनमवाप्य मणिडोलिकाम् ॥ ४० ॥

समारुह्य सरोजाक्ष्या कयाचित्सह पार्थिवः ।
कर्णामृतङ्गायनीषु गायन्तीष्वभितः प्रिये ॥ ४१ ॥

संवेशसौख्यं संप्राप्य पुनश्चोषसि शोभने ॥
श्रोत्रचित्रकरैस्स्तोत्रैस्सूतमागधवन्दिनाम् ॥ ४२ ॥

वीणावेणुमृदङ्गानान्निस्वनैश्च प्रबोधितः ।
स्वेष्टदेवं हृदि ध्यायेत्पौनःपुन्येन पार्थिवः । ॥ ४३ ॥

एवञ्ज्योत्स्नाविहारस्ते मया सम्यङ्निरूपितः
संग्रहेण सरोजाक्षि किमन्यच्छ्रोतुमिच्छसि ॥ ४४ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
ज्योत्स्नाविहारस्वरूपनिरूपणन्नाम
एकाशीतितमः पटलः ॥

---

॥ अथ द्व्यशीतितमः पटलः ॥

॥ संवत्सरारम्भोत्सवस्वरूपकथनम् ॥

पार्वती–शिव संवत्सरारम्भदिवसे पृथिवीभृता ।
किङ्कर्तव्यन्द्विजातिभ्यः किन्दातव्यं वदाद्य मे ॥ १ ॥

श्रीशिवः–साधु साधु जगत्पूज्ये यन्मान्त्वम्परिपृच्छसि ।
तत्तेहं सम्प्रवक्ष्यामि शृणुष्व सुसमाहिता ॥ २ ॥

अलक्ष्मीपरिहारार्थँल्लक्ष्मीस्थैर्यार्थमद्रिजे ।
अष्टैश्वर्यसमृद्ध्यर्थं राज्यरक्षार्थमञ्जसा ॥ ३ ॥

स्वस्य दीर्घायुषे शत्रुक्षयाय विजयाय च ।
वर्षे वर्षे चैत्रशुक्लप्रतिपद्दिवसे प्रिये ॥ ४ ॥

कुर्यान्महोत्सवं सम्राड्राजावा मण्डलेश्वरः ।
तथा कतिपयग्रामनायकोवापि मानवः ॥ ५ ॥

चैत्रमासे शुक्लपक्षे प्रातस्तु प्रतिपद्दिने ।
स्वस्योचितन्नित्यकर्म निर्वर्त्य तु यथाविधि ॥ ६ ॥

ब्राह्मणाञ्छ्रुतसम्पन्नान्पुत्रपौत्रवतीस्तथा ।
पुरन्ध्रीश्च समाहूय ह्यभ्यर्च्य कुसुमादिभिः ॥ ७ ॥

दत्वा दक्षिणया सार्धन्ताम्बूलानि फलानि च ।
कृत्वाप्रदक्षिणन्नत्वा तदाशीरक्षतान्शिवे ॥ ८ ॥

धृत्वा शिरसि तद्दत्तन्निम्बपत्रं सशर्करम् ।
आस्वाद्य पुत्रमित्राद्यैः कलत्रैश्च समन्वितः ॥ ९ ॥

ब्राह्मणेभ्यः पुरन्ध्रिभ्यो ह्यभ्यङ्गार्थं हिमाद्रिजे ।
दत्वा तैलं हेमपीठे मनोज्ञेधिष्ठितस्स्वयम् ॥ १० ॥

पुरतो गीतकलया मिश्रिते वाद्यनिस्वने ।
विजृम्भितेतिगम्भीरं सङ्गवे समुपस्थिते ॥ ११ ॥

अश्वत्थामबलिव्यासप्रमुखांश्चिरजीविनः ।
उद्दिश्य भूपतिर्भूमौ तैलबिन्दून्निधाय च ॥ १२ ॥

क्वणत्कङ्कणया कान्तदेहकान्त्याथ कान्तया ।
अभ्यक्तो गन्धतैलेन स्नापितः कोष्णवारिभिः ॥ १३ ॥

पुण्यैर्हेमकटाहस्थैर्धृत्वा धौताम्बराणि च ।
धृतोर्ध्वपुण्ड्रस्सम्पूज्य गन्धाद्यैस्स्वेष्टदेवताम् ॥ १४ ॥

लक्ष्मीनारायणप्रीत्यै द्विजेभ्यो दक्षिणान्वितम् ॥
कर्पूरदीपत्रितयन्दत्वा तदनु भूपतिः ॥ १५ ॥

आयुष्कराणि कतिचित्कृत्वा दानानि सादरम् ।
पुरोहितमुखाच्छ्रुत्वा संवत्सरफलम्शुभम् ॥ १६ ॥

तस्मै दिव्याम्बरन्दत्वा बहुमान्य ततःपरम् ।
नदत्सु पञ्चवाद्येषु भेरीकाहलिकादिषु ॥ १७ ॥

सिंहासने समारूढो जयघोषपुरस्सरम् ।
श्वेतछत्रेण महता चामराभ्यां विराजितः ॥ १८ ॥

उद्बाहुभिरुदाराङ्गैर्मागधैर्मधुरस्वनैः ।
मनोज्ञकण्ठाभरणैर्नन्द्यमानात्मवैभवः ॥ १९ ॥

आलोकशब्दैर्गम्भीरैर्वेत्रहस्तसमीरितैः ।
सामन्तराजपुत्राणाम्मंत्रिणाञ्च पुरोधसाम् ॥ २० ॥

कवीनाङ्गायकानाञ्च विबुधानां विशेषतः ।
परराष्ट्रनृपव्रातप्रेषितानान्नियोगिनाम् ॥ २१ ॥

वैणिकानां विशेषेण वारमुख्याजनस्य च ।
तस्मिन्महोत्सवे देवि कल्पयित्वात्मदर्शनम् ॥ २२ ॥

स्तूयमानस्ततस्तैस्तैरर्पितान्यम्बराणि च ।
पश्यन्स लीलया स्थित्वा मुहूर्तन्तत्र तत्परम् ॥ २३ ॥

गन्धकुङ्कुमकस्तूरीताम्बूलानि यथोचितम् ।
दत्वा च दापयित्वा च ततो भूमिपुरन्दरः ॥ २४ ॥

अवरुह्यासनात्तस्मादवलम्ब्याप्तयोः करौ ।
शुद्धान्तम्प्रविशेद्राजा सामात्यस्सपुरोहितः ॥ २५ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
संवत्सरारम्भदिनमहोत्सवस्वरूपकथनन्नाम
द्व्यशीतितमः पटलः ॥

---

॥ अथ त्र्यशीतितमः पटलः ॥

॥ संवत्सरारम्भे मल्लयुद्धलास्यादिदर्शनम् ॥

श्रीशिवः—अन्तःपुरम्प्रविश्याथ हेमपीठे मनोहरे ।
आसीनो गुरुणा साकम्मन्त्रिभिश्च पुरोहितैः ॥ १ ॥

रमणीमणिभिर्हेमपात्रमध्यप्रकल्पितैः ।
कर्पूरदीपैर्देवेशि दिव्यैर्नीराजितोऽद्रिजे ॥ २ ॥

गुरोश्च मन्त्रिमुख्यानाम्पुरोहितजनस्य च ।
दत्वा सुवर्णचित्राणि वसनानि महान्ति वै ॥ ३ ॥

प्रेषयित्वाऽथ तान्देवि स्त्रीरत्नपरिवेषितम् ।
अन्नं षड्रससंयुक्तम्भुक्त्वा मधुरपूर्वकम् ॥ ४ ॥

पुत्रैः पौत्रैस्तथा मित्रैः कलत्रैस्सह पार्थिवः ।
ताम्बूलानि ततो दत्वा स्वयं स्वीकृत्य च प्रिये ॥ ५ ॥

पश्चात्सायन्तने देवि सर्वैः परिजनैस्सह ।
मल्लयुद्धन्नृपः पश्येदुल्लसन्मुष्टिताडनम् ॥ ६ ॥

तत्परन्नाट्यशालायान्निशायाम्पृथिवीपतिः ।
नियोगिभिर्योगिभिश्च कविभिर्गायनैर्बुधैः ॥ ७ ॥

वैणिकैर्विविधैर्देवि वारमुख्याजनेन च ।
साकं सरससल्लापचतुरैर्नर्तकैः प्रिये ॥ ८ ॥

सुशिक्षितं नटीलास्यं वीणामुरजनादितम् ।
मनोज्ञनानाभिनयन्दृष्ट्वा भूमिपुरन्दरः ॥ ९ ॥

नानारत्नैर्नर्तकीनाङ्कारयित्वाऽभिषेचनम् ।
बहुमान्य सभास्तारान्सर्वांस्तान्वस्त्रभूषणैः ॥ १० ॥

ततः प्रविश्य शुद्धान्तं स्त्रीरत्नशतसङ्कुलम् ।
सर्वं तन्नाट्यवृत्तान्तं शंसन्शुद्धान्तवासिने ॥ ११ ॥

जनाय जगतीनाथो जयशब्दैस्तदीरितैः ।
हृष्टस्स्मरन्स्वेष्टदेवं सर्वन्तस्मै समर्पयेत् ॥ १२ ॥

योऽनेन विधिना वत्सरारम्भोत्सवमाचरेत् ।
स हत्वा समरे शत्रून्विजयम्प्राप्य लीलया ॥ १३ ॥

आयुष्मान्पुत्रवान्धीमाञ्छ्रीमान्सत्कीर्तिमानपि ।
भूत्वाऽथ सुचिरङ्कालम्पालयेदवनीन्नृपः ॥ १४ ॥

इत्येवं वत्सरारम्भमहोत्सवविधिक्रमः ।
संक्षेपतस्ते गदितः किमन्यच्छ्रोतुमिच्छसि ॥ १५ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
संवत्सरारम्भे मल्लयुद्धलास्यादिदर्शनस्वरूपकथनन्नाम
त्र्यशीतितमः पटलः ॥

---

॥ अथ चतुरशीतितमः पटलः ॥

॥ श्रीरामनवमीव्रतस्वरूपकथनम् ॥

पार्वती—शिव शङ्कर सर्वज्ञ लोकरक्षणतत्पर ।
उत्सवो वत्सरारम्भकर्तव्यो नृपपुङ्गवैः ॥ १ ॥

श्रुतस्त्वद्वदनाम्भोजात्सरहस्यस्सुरेश्वर ।
इदानीं श्रोतुमिच्छामि प्रतिवर्षन्नृपोत्तमैः ॥ २ ॥

कर्तव्यानि व्रतान्यत्र नित्यानि वद मे प्रभो ।
श्रीशिवः—शृणु वक्ष्यामि राजेन्द्रैरनुष्ठेयानि कानिचित् ॥ ३ ॥

व्रतानि चैत्रमासादिमासेषु वरवर्णिनि ।
चैत्रमासे सिते पक्षे श्रीरामनवमीदिने ॥ ४ ॥

पुनर्वस्वृक्षसंयुक्ते केवले वा हिमाद्रिजे ।
राजा प्रातस्समुत्थाय स्नात्वा धौताम्बरश्शुचिः ॥ ५ ॥

धृत्वोर्ध्वपुण्ड्रं निर्वर्त्य नित्यकर्म यथोचितम् ।
पवित्रपाणिराचम्य प्राणायामपुरस्सरम् ॥ ६ ॥

सङ्कीर्त्य देशङ्कालञ्च पावने पापहारिणि ।
अस्मिन्श्रीरामनवमीदिवसेऽहं समाहितः ॥ ७ ॥

सर्वपापविशुद्ध्यर्थं सर्वाभीष्टफलाप्तये ।
शत्रुक्षयाय विजयसिद्ध्यै रामतुष्टये ॥ ८ ॥

उपोष्याष्टसु यामेषु करिष्ये रामपूजनम् ।
इति सङ्कल्प्य नृपतिस्स्वशक्त्या स्वर्णनिर्मिताम् ॥ ९ ॥

श्रीरामप्रतिमां सर्वपरिवारसमन्विताम् ।
पञ्चामृतैः पञ्चगव्यैरभिषिच्य जलैरपि ॥ १० ॥

पीठे निधाय रुचिरे पट्टवस्त्रपरिष्कृते ।
तस्याः प्राणप्रतिष्ठाञ्च कृत्वा शास्त्रोक्तमार्गतः ॥ ११ ॥

आवाह्य मुद्राषट्कञ्च दर्शयित्वा यथाविधि ।
कल्पोक्तमन्त्रैस्तं रामम्पुरोहितमुखोद्गतैः ॥ १२ ॥

सम्पूज्य गन्धपुष्पाद्यैः परिवारसमन्वितम् ।
नदत्सु पञ्चवाद्येषु महानैवेद्यमद्रिजे ॥ १३ ॥

समर्प्य पूजाशेषञ्च समाप्य समनन्तरम् ।
अर्घ्यन्दत्वा विधानेन पश्चान्नीलोत्पलैर्नवैः ॥ १४ ॥

पुण्डरीकैर्विकसितैर्नवैर्बिल्वदलैरपि ।
कुन्दैः कुरबकैर्देवि कोमलैस्तुलसीदलैः ॥ १५ ॥

सहस्रनामभिर्देवं श्रीरामं पूजयेन्नृपः ।
एवमष्टसु यामेषु पूजा कार्या प्रयत्नतः ॥ १६ ॥

रात्रौ जागरणङ्कार्यं पुराणश्रवणादिभिः ।
एवङ्कर्तुमशक्तश्चेन्मध्याह्ने कर्कटाभिधे ॥ १७ ॥

लग्ने रामं पूजयित्वा परेद्युः प्रातरुत्थितः ।
स्नात्वा तत्कालकर्तव्यन्नित्यकर्म समाप्य च ॥ १८ ॥

सम्पूज्य पूर्ववद्रामं विप्रमाहूय सादरम् ।
वेदवेदान्ततत्वज्ञङ्कुटुम्बिनमलोलुपम् ॥ ॥१९ ॥

पादौ प्रक्षाल्य संपूज्य रामबुद्ध्याऽम्बरादिभिः ।
तस्मै ताम्प्रतिमान्दत्वा साकन्दक्षिणया नृपः ॥ २० ॥

भोजयित्वा द्विजान्पश्चात्स्वयमाप्तजनैस्सह ।
कुर्यात्तद्व्रतसम्पूर्त्यै पारणां नृपकुञ्जरः ॥ २१ ॥

एवं श्रीरामनवमीव्रतङ्कृत्वा यथाविधि ।
आजन्मसञ्चितात्पापान्मुक्तो भवति मानवः ॥ २२ ॥

सूर्यग्रहे कुरुक्षेत्रे महद्भिरसकृत्कृतैः ।
दानैर्यत्फलमाप्नोति तदेतद्व्रतकृल्लभेत् ॥ २३ ॥

यस्तु रामनवम्यान्तु नरः कुर्यादुपोषणम् ।
मातुर्गर्भं स नाप्नोति राम एव भवेत्स वै ॥ २४ ॥

तस्मात्सर्वप्रयत्नेन श्रीरामनवमीव्रतम् ।
वर्षे वर्षे महीपालैः कर्तव्यमितरैरपि ॥ २५ ॥

इत्येवं रामनवमीव्रतं सम्यङ्निरूपितम् ।
आयुरारोग्यसौभाग्यसम्पत्सारस्वतप्रदम् ॥ २६ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
श्रीरामनवमीव्रतस्वरूपकथनन्नाम
चतुरशीतितमः पटलः ॥

## ॥ अथ पञ्चाशीतितमः पटलः ॥

## ॥ अक्षय्यतृतीयाकर्तव्यदानविधिः ॥

श्रीशिवः—अथ वैशाखमासस्य शुक्लपक्षे शुचिस्मिते ।
तृतीयायामक्षयाभिधानायान्नृपपुङ्गवैः ॥ १ ॥

ब्राह्मणैः क्षत्रियैर्वैश्यैश्शूद्रैश्चैव तथाऽपरैः ।
कर्तव्यानि प्रवक्ष्यामि दानानि विविधानि वै ॥ २ ॥

उपानहौ पादुके च छत्रन्दध्योदनन्तथा ।
व्यजनङ्करकानन्नजलपूर्णान् फलानि च ॥ ३ ॥

उदकुम्भांश्च विप्रेभ्यो वस्त्रमाल्यविभूषितान् ।
धर्मराजं समुद्दिश्य दत्वा दक्षिणया सह ॥ ४ ॥

श्रीमानरोगी तेजस्वी छत्रचामरशोभितः ।
दिव्यं विमानमारुह्य नृत्तगीतमनोहरम् ॥ ५ ॥

दिव्याङ्गनासमाकीर्णं विष्णुलोकमवाप्नुयात् ।
नरश्चन्दनदानेन प्रीणयेत्कञ्जसम्भवम् ॥ ६ ॥

अक्षतानां प्रदानेन ह्यक्षतां श्रियमश्नुते ।
यवगोधूमचणकदानेन प्रीणयेद्धरिम् ॥ ७ ॥

सक्तुदानेन वाग्देवीन्त्वाज्ञेक्षुरसदानतः ।
रमां क्षीरविकारस्य दानेन प्रीणयेत्प्रिये ॥ ८ ॥

तिलोदकप्रदानेन पितृन्सन्तर्पयेन्नरः ।
मिष्टान्नेन द्विजवरान्भोजयेत्स्वस्य शक्तितः ॥ ९ ॥

यत्किञ्चित्कुरुते दानं स्वल्पं वा यदि वा बहु ।
तत्सर्वमक्षयं स्याद्वै तेनेयञ्चाक्षया स्मृता ॥ १० ॥

आदिः कृतयुगस्येयं युगादिस्तेन कथ्यते ।
रोहिण्या बुधवारेण युक्ता चेत्स्यान्महाफला ॥ ११ ॥

पुरा महोदयाभिख्यपुरवासी वणिग्वरः ।
प्रियंवदाख्यस्सुश्रोणि निर्धनस्सत्यवाक्छुचिः ॥ १२ ॥

भार्यया वार्यमाणोपि कृत्वा दानान्यमूनि वै ।
अस्यान्तिथाविह चिरम्भुक्त्वा भोगाननेकधा ॥ १३ ॥

ततः पञ्चत्वमापन्नः कुशावत्याम्पुरि प्रिये ।
कस्मिंश्चित्क्षत्रियकुले जातो जगति विश्रुतः ॥ १४ ॥

नाम्ना चित्रध्वज इति प्रेक्षणीयतराकृतिः ।
समग्रैश्वर्यसम्पन्नः कृत्वा बहुविधान्मखान् ॥ १५ ॥

दत्वा गोभूहिरण्यादीन्भुक्त्वा भोगपरम्पराम् ।
देहान्ते दिव्यमारुह्य विमानं सूर्यसन्निभम् ॥ १६ ॥

सम्प्राप्तो विष्णुभवनमिति वार्ता श्रुता मया ।
तस्मादस्यान्तिथौ देवि यद्दत्तं स्वस्य शक्तितः ॥ १७ ॥

तदक्षय्यम्भक्त्यैव नात्र कार्या विचारणा ।
इत्येवमक्षयाख्यायास्तृतीयाया वरानने ॥
माहात्म्यं सङ्ग्रहेणाद्य मया सम्यङ्निरूपितम् ॥१८॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
अक्षय्यतृतीयाकर्तव्यदानस्वरूपकथनन्नाम
पञ्चाशीतितमः पटलः ॥

---

॥ अथ षडशीतितमः पटलः ॥

॥ नृसिंहजयन्तीस्वरूपनिरूपणम् ॥

श्रीशिवः—अथान्यत्तव वक्ष्यामि व्रतन्त्रैलोक्यविश्रुतम् ।
श्रीनृसिंहजयन्त्याख्यं सर्वाभीष्टफलप्रदम् ॥ १ ॥

ब्रह्महत्यादिपापघ्नञ्चित्तनैर्मल्यदायकम् ।
सर्वशत्रुक्षयकरं राज्ञां विजयदं सदा ॥ २ ॥

सार्वभौमो नरपतिर्मण्डलस्येश्वरोऽपि वा ।
साम्राज्यलक्ष्मीस्थैर्यार्थमात्मनश्चामितायुषे ॥ ३ ॥

अष्टैश्वर्याभिवृद्ध्यर्थं व्रतमेतत्समाचरेत् ।
वैशाखे मासि शुक्लायाञ्चतुर्दश्यां वरानने ॥ ४ ॥

स्वातीनक्षत्रयुक्तायाङ्केवलायामथापि वा ।
प्रातस्स्नात्वा नित्यकर्म निर्वर्त्य समनन्तरम् ॥ ५ ॥

सायाह्ने समनुप्राप्ते सन्ध्याकाले समाहितः ।
गृहस्येशानदिग्भागे कृत्वा कुसुममण्डपम् ॥ ६ ॥

तदन्तरे सरोजाक्षि राशिङ्कृत्वा सिताक्षतैः ।
तत्र संस्थाप्यकलशमव्रणन्तीर्थपूरितम् ॥ ७ ॥

सुधाधवलितं सूक्ष्मतन्तुजालप्रवेष्टितम् ।
पञ्चत्वक्पल्लवोपेतङ्गव्यरत्नसमन्वितम् ॥ ८ ॥

तस्मिन्नावाह्य वरुणम्पूजयित्वोपचारकैः ।
तस्मिन्क्षौमं सम्प्रसार्य तत्तन्मूर्तिं हिरण्मयीम् ॥ ९ ॥

संस्थाप्य श्रीनृसिंहस्य कृत्वा सुस्थापनन्ततः ।
उपचारैष्षोडशभिर्मन्त्रेणानुष्टुभेन तु ॥ १० ॥

सम्पूज्यार्घ्यञ्च विधिवद्दत्वा सम्प्रार्थ्य तम्पुनः ।
रात्रौ जागरणङ्कृत्वा पुराणपठनादिभिः ॥ ११ ॥

परेद्यव्युषसि स्नात्वा पूजयित्वाऽथ पूर्ववत् ।
ब्राह्मणाय सुशीलाय श्रोत्रियाय कुटुम्बिने ॥ १२ ॥

दत्वा ताम्प्रतिमान्देवि भोजयित्वा द्विजोत्तमान् ।
स्वयञ्च पारणाङ्कुर्याद्बन्धुभिस्सह पार्वति ॥ १३ ॥

अनेन विधिना यस्तु जयन्तीव्रतमाचरेत् ।
स ब्रह्महा सुरापो वा स्तेयो वा गुरुतल्पगः ॥ १४ ॥

स्त्रीबालघातको वाऽपि तस्करो गुरुनिन्दकः ।
विमुक्तस्सर्वपापेभ्यो विष्णुलोकमवाप्नुयात् ॥ १५ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नृसिह्मजयन्तीस्वरूपनिरूपणन्नाम
षडशीतितमः पटलः ॥

---

॥ अथ सप्ताशीतितमः पटलः ॥

॥ वैशाखकर्तव्यदानस्वरूपनिरूपणम् ॥

श्रीशिवः—अथ वैशाखमासस्य पूर्णिमायान्नृपोत्तमैः ।
कर्तव्यानि प्रवक्ष्यामि दानानि कतिचित्प्रिये ॥ १ ॥

वैशाखस्य समो मासो नास्ति पुण्यतमो भुवि ।
तत्रापि पूर्णिमा देवि कोटिसूर्यग्रहाधिका ॥ २ ॥

विशाखर्क्षयुता सा चेत्फलं वक्तुं न शक्यते ।
योऽस्याम्माधवमुद्दिश्य जपं होमं सुरार्चनम् ॥ ३ ॥

कारयेन्नृपतिर्देवि तत्सर्वं स्यादिहाक्षयम् ।
योऽस्यान्तिथौ पितृणान्तु कुरुते तिलतर्पणम् ॥ ४ ॥

एतत्पुण्यप्रभावेन पितरो मोक्षमाप्नुयुः ।
योऽस्यान्तिथौ नरपतिर्ब्राह्मणान्भोजयेच्छिवे ॥ ५ ॥

भक्ष्यैरुच्चावचैरन्नैः पायसेन फलैरपि ।
घृतक्षीरजला यत्र नद्यः पायसकर्दमाः ॥ ६ ॥

यत्रान्नशैलाः पृथुलास्स तत्र निवसेद्ध्रुवम् ।
अस्याञ्छत्रन्नृपो दत्वा शास्त्येकच्छत्रतो महीम् ॥७॥

चामरस्य प्रदानेन धूयते दिव्यचामरैः ।
तालवृन्तप्रदानेन दिव्यैस्तैरन्वितो भवेत् ॥ ८ ॥

द्विजाय व्यजनन्दत्वा वायुलोके महीयते ।
फलानि दत्वा विप्रेभ्यो मनोरथफलल्लँभेत् ॥ ९ ॥

ताम्बूलदानादाप्नोति मानवो महतीं श्रियम् ।
गोपीचन्दनदो ब्रह्मप्रतिष्ठाफलमाप्नुयात् ॥ १० ॥

याति चन्दनदानेन सान्द्रानन्दः पदं हरेः ।
कर्पूरदानादाप्नोति चन्द्रलोकं वरानने ॥ ११ ॥

दत्वा कुङ्कुममाप्नोति तावकल्लोँकमद्रिजे ।
कस्तूरीदानतो लक्ष्मीलोकमाप्नोति शाश्वतम् ॥ १२ ॥

दत्वा पुष्पाणि मनुजो लोकमाप्सरसं व्रजेत् ।
लवङ्गदानादाप्नोति लोकमैन्द्र हिमाद्रिजे ॥ १३ ॥

एलादानादवाप्नोति लोकमानन्ददं शिवे ।
शय्यान्दत्वा शेषशायी भवेन्मर्त्यो न संशयः ॥१४॥

दत्वोशीरं सदा देवैश्शिरोभिश्श्लाघितो भवेत्।
चाम्पेयकोरकान्दत्वा प्राप्नुयात्सर्वसम्पदः ॥ १५ ॥

उपानद्युगलन्दत्वा दिव्यं रथमवाप्नुयात्।
मनुजः पादुके दत्वा यममार्गन्नपश्यति ॥ १६ ॥

पायसम्फलसम्मिश्रन्दत्वा गोलोकमाप्नुयात्।
दध्यन्नदानादाप्नोति स्वर्गमत्यन्तसौख्यदम्॥ १७ ॥

नरः पानकदानेन ब्रह्मलोकं व्रजेत्प्रिये।
दत्वैक्षवं रसल्लँक्ष्म्या लोकमाप्नोति शाश्वतम्॥ १८ ॥

उदकुम्भप्रदानेन यमलोकन्न पश्यति।
नवनीतप्रदो नित्यन्नरोऽत्यन्तं सुखी भवेत् ॥ १९ ॥

दधिदानेन मनुजः कीर्तिमानिह जायते।
क्षीरन्दत्वा द्विजेन्द्राय पदमाप्नोति वैष्णवम् ॥ २० ॥

सक्तुदानेन लभते नरस्सारस्वतम्महत्।
नरः करकदानेन यमम्प्रीणयाति प्रिये ॥ २१ ॥

तस्मान्नरपतिस्सम्राड्राजा वा मण्डलेश्वरः।
तस्यान्तिथौ समुत्थाय प्रातस्स्नात्वा विधानतः ॥२२॥

नद्यां ह्रदे वा देवेशि धृत्वा धौताम्बराणि च।
ऊर्ध्वपुण्ड्रधरो नित्यकर्म कृत्वा यथोचितम्॥ २३ ॥

सङ्कीर्त्य देशङ्कालञ्च मम दीर्घायुषे श्रिये ।
सर्वशत्रुक्षयार्थाय सर्वत्र विजयाय च ॥ ॥ २४ ॥

वसन्तमाधवप्रीत्यै करिष्येऽहं यथाविधि ।
छत्रदानादिदानानीत्येवं सङ्कल्प्य तत्परम् ॥ २५ ॥

तत्तद्वस्तूनि दत्वाऽथ तत्तन्मन्त्रैः पृथक्पृथक् ।
स्वेष्टदेवाय तत्सर्वमर्पयेद्वरवर्णिनि ॥ २६ ॥

एवन्तस्यान्तिथौ कृत्वा दानानि विविधानि वै ।
राजा निर्जित्य समरे शत्रून्विजयमाप्नुयात् ॥ २७ ॥

रूपवान्धनवान्वाग्मी श्रीमान्सत्कीर्तिमानपि ।
भूत्वेह तत्परल्लोँकं वैष्णवं समवाप्नुयात् ॥ २८ ॥

इत्येवन्देवि वैशाख्याङ्कर्तव्यानि नृपोत्तमैः ।
दानानि तव संक्षेपात्कथितानि मयाऽधुना ॥ २९ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
वैशाखकर्तव्यदानस्वरूपनिरूपणन्नाम
सप्ताशीतितमः पटलः ॥



पुरोहितेरितैर्देवि मन्त्रैस्तान्त्रिकवैदिकैः ।
सम्पूज्य तान्बलीवर्दान्प्रार्थयेत्तदनन्तरम् ॥ ९ ॥

भो भो यूयं बलीवर्दा धर्मरूपा महाबलाः ।
भवद्भिरेव सस्यानि प्रभवन्ति महीतले ॥ १० ॥

ध्रियते च महान्भारः प्राणिसंरक्षणाय वै ।
दयालुत्वं सहिष्णुत्वं भवत्स्वेव हि वर्तते ॥ ११ ॥

यतस्तस्माज्जनपदम्मदीयमखिलं सदा ।
नानासस्यसमृध्द्याढ्यङ्कुरुध्वङ्कुशलञ्च मे ॥ १२ ॥

धनवृद्धिन्धान्यवृद्धिं पुत्रवृद्धिञ्च शाश्वतीम् ।
इति सम्प्रार्थ्य नृपतिर्दत्वा पुष्पाञ्जलिं प्रिये ॥ १३ ॥

धान्यकोष्ठेषु तान्सर्वान्बलीवर्दान्निधापयेत् ।
एवङ्कृत्वा नरपतिर्वृषभव्रतमद्रिजे ॥ १४ ॥

धनधान्ययुतश्श्रीमान्पुत्रपौत्रसमन्वितः ।
रूमवान्भाग्यसम्पन्नः पालयेदवनीञ्चिरम् ॥ १५ ॥

एवन्नृपैरनुष्ठेयं वृषभव्रतमुत्तमम् ।
ज्येष्ठे मासि वरारोहे मया सम्यङ्निरूपितम् ॥ १६॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
ज्येष्ठमासकर्तव्यवृषभव्रतस्वरूपकथनन्नाम
अष्टाशीतितमः पटलः ॥

## ॥ अथैकोननवतितमः पटलः ॥

## ॥ सहस्रकलशाभिषेकस्वरूपकथनम् ॥

श्रीशिवः—अथाषाढाह्वये मासि कर्तव्यङ्कर्म राजभिः ।
वक्ष्यामि वारिजमुखे संग्रहेण तवाधुना ॥ १ ॥

आजन्मकृतपापानां प्रायश्चित्तमिदम्परम् ।
सर्वशत्रुक्षयकरं विशेषेण जयप्रदम् ॥ २ ॥

दीर्घायुष्यकरं राज्ञां पुत्रपौत्राभिवृद्धिदम् ।
सर्वसम्पत्करं पुण्यं प्राज्यसाम्राज्यदं सदा ॥ ३ ॥

भुक्तिप्रदमिहान्यत्र मुक्तिप्रदमगात्मजे ।
आषाढे मासि शुक्लायामेकादश्याम्महीपतिः ॥ ४ ॥

ब्राह्मे मुहूर्त उत्थाय कृतशौचक्रियश्शुचिः ।
पुण्यतीर्थजलैस्स्नात्वा धौतवस्त्रधरश्शुचिः ॥ ५ ॥

धृतोर्ध्वपुण्ड्रस्तत्कालकर्तव्यन्नित्यकर्म वै ।
समाप्य प्राङ्मुखो भूत्वा प्राणानायम्य भूपतिः ॥ ६ ॥

सङ्कीर्त्य देशङ्कालञ्च मम पापौघशान्तये ।
दीर्घायुषे देहपुष्ट्यै सर्वशत्रुक्षयाय च ॥ ७ ॥

विजयाय महाविष्णोः प्रीत्यर्थं ब्राह्मणोत्तमैः ।
सहस्रकलशस्नानङ्कारयिष्ये यथाविधि ॥ ८ ॥

इति सङ्कल्प्य पयसा दध्नाऽऽज्येन फलैरपि ।
पञ्चामृतेन देवेशि मधुनेक्षुरसेन च　　॥ ९ ॥

जम्बीरफलसारेण गन्धतोयेन चारुणा ।
अभिषेकङ्कारयित्वा मन्त्रैर्विष्णुप्रकाशकैः　　॥ १० ॥

ततस्सहस्रकलशपूरितैः पुण्यवारिभिः ।
अभिषेकङ्कारयित्वा सूक्तैर्वैष्णवसंज्ञितैः　　॥ ११ ॥

दिव्याम्बराण्यर्पयित्वा भूषणानि समर्प्य च ।
दिव्यगन्धेनानुलिप्य देवल्लँक्ष्मीसमन्वितम　　॥ १२ ॥

सहस्रनामभिर्मुख्यैर्गौणैर्वा सम्यगर्च्चयेत् ।
मालतीजातिपुन्नागचाम्पेयवकुलादिभिः　　॥ १३ ॥

पद्मेन्दीवरकल्हारकेतकीदमनादिभिः ।
सम्पूज्याथ महापूजाप्रकारोक्तेन वर्त्मना　　॥ १४ ॥

महानैवेद्यममितमर्पयित्वा ततःपरम् ।
ताम्बूलं मुखवासञ्च दत्वा कृत्वा प्रदक्षिणम् ॥ १५ ॥

नत्वा स्तुत्वा च तत्सर्वमर्पयित्वा महात्मने ।
विष्णवेऽथ वदेदेवं प्राञ्जलिः प्रयतो नृपः　　॥ १६ ॥

अद्यप्रभृति देवेश योगनिद्रां समाश्रितः ।
क्षीराब्धौ शेषशय्यायाल्लँक्ष्म्युत्सङ्गाश्रिताङ्घ्रिकः ॥ १७ ॥

वार्षिकांश्चतुरो मासान्शेष्व स्वामिन्यथासुखम् ।
एवमुक्त्वा महाविष्णुं स्वापयेत्तम्महीपतिः ॥ १८ ॥

नदत्सु पञ्चवाद्येषु भेरीकाहलिकादिषु ।
गीतैर्नानाविधैर्देवि चित्ताह्लादविधायकैः ॥ १९ ॥

इत्याषाढाह्वये मासि कर्तव्यङ्कर्म साम्प्रतम् ।
मया निगदितं सम्यक्संक्षेपात्तव पार्वति ॥ २० ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
सहस्रकलशाभिषेकस्वरूपकथनन्नाम
एकोननवतितमः पटलः ॥

---

॥ अथ नवतितमः पटलः ॥

॥ वरलक्ष्मीव्रतस्वरूपकथनम् ॥

श्रीशिवः—अथ ते संप्रवक्ष्यामि वरलक्ष्मीव्रतं प्रिये ।
श्रावणे मासि कर्तव्यं पुरन्ध्रीभिर्नृपैस्तथा ॥ १ ॥

सर्वसम्पत्करं सर्वव्रतानामुत्तमोत्तमम् ।
साम्राज्यदं विशेषेण राज्ञां साम्राज्यकांक्षिणाम् ॥ २ ॥

पुरा चारुमती येन व्रतेनाचरितेन वै ।
ऐश्वर्यममितं पुत्रपौत्रानपि च सद्गुणान् ॥ ३ ॥

संप्राप्य सर्वान्भोगौघान्बुभुजे पतिसम्मता ।
अन्ये चैतद्व्रतङ्कृत्वा केचिदिष्टार्थमाप्नुयुः ॥ ४ ॥

तस्मादावश्यकतया कार्यमेतद्व्रतन्नृपैः ।
श्रावणे पूर्णिमापूर्वभाविभार्गववासरे ॥ ५ ॥

गृहस्येशानदिग्भागे नृपतिः पुष्पमण्टपम् ।
कारयित्वा विधानेन भद्रपीठन्तदन्तरे ॥ ६ ॥

निधाय तस्मिन्कलशन्नवं तण्डुलपूरितम् ।
सुधाधवलितञ्चूतवटपल्लवसंयुतम् ॥ ७ ॥

विन्यस्य तस्मिन्नावाह्य वरलक्ष्मीं यथाविधि ।
पत्नीभिः पुत्रपौत्राद्यैरन्वितः पृथिवीपतिः ॥ ८ ॥

देशङ्कालञ्च सङ्कीर्त्य प्राणायामपुरस्सरम् ।
ममाष्टैश्वर्यसिद्ध्यर्थल्लँक्ष्मीस्थैर्यार्थमेव च ॥ ९ ॥

आयुरारोग्यसिद्ध्यर्थमरिपक्षक्षयाय च ।
वरलक्ष्मीव्रतमहङ्करिष्य इति सादरम् ॥ १० ॥

सङ्कल्प्य तत्परन्देवि वाद्यघोषपुरस्सरम् ।
कल्पोक्तविधिनाऽभ्यर्च्य वरलक्ष्मीं वरप्रदाम् ॥ ११ ॥

श्रीसूक्तेन च सम्पूज्य दत्वोपायनमद्विजे ।
नवसूत्रङ्करे धृत्वा नवग्रन्थिसमन्वितम् ॥ १२ ॥

दत्वा पुष्पाञ्जलिं श्रुत्वा कथां विप्रमुखान्नृपः ।
प्रार्थयेद्वरलक्ष्मीन्तां वक्ष्यमाणविधानतः ॥ १३ ॥

वरलक्ष्मि नमस्तेऽस्तु सर्वेषाञ्च वरप्रद ।
साम्राज्यसम्पदन्देहि सततं सन्ततिञ्च मे ॥ १४ ॥

इति संप्रार्थ्य भद्रेभानश्वांश्च वरवर्णिनि ।
राजचिह्नानि सर्वाणि कोशागाराणि चाद्रिजे ॥ १५ ॥

संपूज्य लक्ष्मीनिकटे हविष्याशी भवेन्नृपः ।
एवं व्रतमिदङ्कृत्वा राजा शत्रून्रणाजिरे ॥ १६ ॥

हत्वा विजयमासाद्य पालयेदवनीञ्चिरम् ।
इत्येवं श्रावणे मासि कर्तव्यन्नृपपुङ्गवैः ॥
वरलक्ष्मीव्रतन्देवि संक्षेपेण मयेरितम् ॥ १७ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
वरलक्ष्मीव्रतस्वरूपकथनन्नाम
नवतितमः पटलः ॥

---

॥ अथैकनवतितमः पटलः ॥

॥ खुरळीव्रतस्वरूपकथनम् ॥

श्रीशिवः—अथान्यदपि वक्ष्यामि खुरळीव्रतमाद्रिजे ।
सर्वसम्पत्करं राज्ञां बलपुष्टिविवर्धनम् ॥ १ ॥

सार्वभौमैर्नृपतिभिर्मण्डलस्याधिपैरपि ।
श्रमकर्मरतैर्मर्त्यैरस्त्रशस्त्रधरैरपि ॥ २ ॥

यैश्च कैश्चित्प्रकर्तव्यं खुरळीपूजनं प्रिये ।
नभोमासे चतुर्दश्यामारभ्य तु दिनत्रयम् ॥ ३ ॥

कर्तव्या खुरळीपूजा सर्वैश्शस्त्रधरैर्नरैः ।
स्वगृहस्य तु पश्चिम्याङ्कक्ष्यायाङ्कमलेक्षणे ॥ ४ ॥

निर्मितां शिल्पिना विश्वकर्मणेव महोन्नताम् ।
स्वायताञ्च सुविस्तार्णां सगवाक्षां समन्ततः ॥ ५ ॥

कुत्रचिद्रक्तमृद्राशिसंयुतां क्वचिदप्युमे ।
आश्लेषस्तम्भगम्भीरां क्वचिच्चैव स्थलान्तरे ॥ ६ ॥

क्षुद्रपाषाणसम्पूर्णमहाघोणासमन्विताम् ।
क्वचिच्च शैलकटकसङ्घसंशोभितान्तराम् ॥ ७ ॥

मल्लैर्मत्तगजप्रख्यैर्डिण्डिमाडम्बरान्वितैः ।
वन्दिभिर्नन्द्यमानैश्च सर्वतस्समधिष्ठिताम् ॥ ८ ॥

खुरळीं प्राप्य नृपतिस्साकं सामन्तपार्थिवैः ।
श्रमकर्मविधानज्ञैः कैश्चिच्चैव भटैरपि ॥ ९ ॥

तन्मध्ये रक्तमृद्राशिमलङ्कृत्य सुमादिभिः ।
तत्र काञ्चिच्छस्त्रशक्तिं भेतालं प्रमथञ्च मे ॥ १० ॥

समावाह्य सरोजाक्षि दत्वा दीपञ्च धूपकम् ।
नानाफलानि भक्ष्याणि कल्पयित्वा निवेदनम् ॥ ११ ॥

तद्राशिमूले विन्यस्य तन्तुजालं शशिप्रभम् ।
ततस्स्वयं रक्तकक्ष्यानद्धमध्यो महीपतिः ॥ १२ ॥

मूर्ध्न्यामुक्तकुलायश्च रक्तमृत्पांसुरूषितः ।
सञ्चिन्त्य हृदये कृष्णम्मल्लयुद्धविशारदम् ॥ १३ ॥

संपूजितान्सितान्तन्तून्धृत्वा यज्ञोपवीतवत् ।
धृत्वा कङ्कणवद्देवि करयोः पुष्पमालिकाः ॥ १४ ॥

दक्षे साधनखड्गन्तु करे वामे च खेटकम् ।
दधानस्तुळैस्साकाङ्क्षिञ्चिदानम्रकन्धरः ॥ १५ ॥

यातायातैश्च सव्यापसव्यैर्गतिविशेषकैः ।
गोमूत्रवक्रगतिभिर्मण्डलभ्रमणैरपि ॥ १६ ॥

श्रमं कृत्वा बहुविधन्तत्परं पृथिवीपतिः ।
मल्लैस्सह श्रमं कुर्यान्मुष्टामुष्टि ततःपरम् ॥ १७ ॥

आस्फोट्योरू तथोरश्च नियुद्धन्नृपसत्तमः ।
कुर्याद्बहुविधन्देवि पश्यतामतिभीषणम् ॥ १८ ॥

उत्क्षेपं समविक्षेपमुपेक्षणमनन्तरम् ।
आनायवच्च भ्रमणमूर्ध्वाधोवीक्षणम्मुहुः ॥ १९ ॥

आस्फोटनमविस्फोटन्तर्जनङ्गर्जनन्तथा।
निर्निमेषेक्षणङ्किञ्चित्पतनोत्पतनन्तथा ॥ २० ॥

हाहा हाहेति चाक्रन्दं साधु साध्वित्युदीरणम्।
मुष्ट्यरत्निप्रहारैश्च शिरोजानुप्रवल्गनैः ॥ २१ ॥

कृत्वा श्रमं बहुविधं पश्चाद्राजकुमारकैः।
आलोकचाश्चर्यकरङ्खड्गाखड्गि गदागदि ॥ २२ ॥

काश्चिल्लीला विरचयन्पश्चाद्भूमिपुरन्दरः।
श्रमविद्योपदेष्टारङ्गुरुम्मल्लांश्च कांश्चन ॥ २३ ॥

राजपुत्रान्सवयसो बहुमान्याम्बरादिभिः।
बहिर्निर्गत्य तेनैव वेषेण नृपपुङ्गवः ॥ २४ ॥

वन्दिभिर्नन्द्यमानस्सन्शङ्खदुन्दुभिनिस्वनैः।
साकमास्थानशालायां क्षणमात्रमगात्मजे ॥ २५ ॥

विश्रम्य राजपुत्रादीन्प्रस्थाप्य समनन्तरम्।
नीराजितो निजस्त्रीभिर्लक्ष्मीं साम्राज्यदायिनीम् ॥२६॥

नत्वा महीपतिः कुर्याद्व्रतमेवान्दिनत्रयम्।
अशक्तश्चेत्पूर्णिमायाङ्कुर्यात्खुरळिकोत्सवम् ॥ २७ ॥

इत्येवन्ते समाख्यातं खुरळीपूजनव्रतम् ।
सर्वसम्पत्करं राज्ञां विशेषेण जयप्रदम् ॥ २८ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
खुरळीपूजनस्वरूपनिरूपणन्नाम
एकनवतितमः पटलः ॥

---

अथ द्विनवतितमः पटलः ॥

॥ श्रीकृष्णजयन्तीव्रतस्वरूपकथनम् ॥

श्रीशिवः—अथान्यदपि वक्ष्यामि कृष्णजन्माष्टमीव्रतम् ।
श्रावणे मासि कर्तव्यन्नृपैरन्यैश्च पार्वति ॥ १ ॥

सगरेण ककुत्स्थेन दिलीपेन महात्मना ।
नाभागेनाम्बरीषेण हरिश्चन्द्रेण गाधिना ॥ २ ॥

एतैरन्यैश्च राजेन्द्रैर्धर्मज्ञैस्सत्यवादिभिः ।
तुष्ट्यर्थन्देवकीसूनोर्व्रतमेतत्कृतं शिवे ॥ ३ ॥

प्राजापत्यर्क्षसंयुक्ता नभोमास्यसिताष्टमी ।
जयन्तीति समाख्याता महापातकनाशिनी ॥ ४ ॥

श्रीकृष्णपूजनात्तस्यां क्षणेन विलयं व्रजेत् ।
धर्ममर्थञ्च कामञ्च मोक्षञ्च वरवर्णिनि ॥ ६ ॥

ददात्याचरितन्नृणाङ्कृष्णजन्माष्टमीव्रतम् ।
कपिलानां सहस्रस्य प्रदानाद्यत्फलं भवेत् ॥ ७ ॥

तत्फलं समवाप्नोति जयन्त्यां समुपोषणात् ।
स्वर्णभारसहस्रन्तु कुरुक्षेत्रे विधानतः ॥ ८ ॥

दत्वा यत्फलमाप्नोति तदेतद्व्रतकृल्लभेत् ।
शूद्रस्यान्नं शवस्यान्नं भुञ्जतो यदघं भवेत् ॥ ९ ॥

तदघं समवाप्नोति जयन्त्यामन्नभुङ्नरः ।
यो वै नराधमो भुङ्क्ते कृष्णजन्माष्टमीदिने ॥ १० ॥

गृध्रक्रौञ्चखरश्वानकाकमांसं स भुक्तवान् ।
ये कुर्वन्ति नरा देवि जयन्तीव्रतमुत्तमम् ॥ ११ ॥

तेषाङ्गृहे महालक्ष्मीरष्टैश्वर्यैस्सहावसेत् ।
द्विजातिभिर्नृपैर्वैश्यैश्शूद्रैस्स्त्रीभिश्च सङ्करैः ॥ १२ ॥

वैष्णवैश्शिवभक्तैश्च तथा पाशुपतैरपि ।
राष्ट्रेशैस्तु विशेषेण ह्यनुष्ठेयमिदं व्रतम् ॥ १३ ॥

तस्मान्नरपतिः पूर्वदिने नियमपूर्वकम् ।
कृत्वैकभक्तं सुश्रोणि ब्रह्मचर्यपरायणः ॥ १४ ॥

परेद्युः प्रातरुत्थाय व्रतसङ्कल्पमाचरेत् ।
अद्य स्थित्वा निराहारस्संपूज्य त्वां सुरेश्वर ॥ १५ ॥

कृत्वा जागरणं रात्रौ श्वः प्रातः प्रतिमान्तव ।
दत्वा विप्राय तत्पश्चात्करिष्ये पारणामहम् ॥ १६ ॥

इति सङ्कल्प्येशदिशि स्वगृहे पृथिवीपतिः ।
पुष्पमण्टपिकां सम्यक्कारयित्वा तदन्तरे ॥ १७ ॥

निक्षिप्य भद्रपीठं वै तस्मिन्सम्यग्विनिक्षिपेत् ।
सुवर्णेनाथ रूप्येण मृदा वोत विनिर्मिताम् ॥ १८ ॥

बालरूपधराङ्कृष्णप्रतिमां लक्षणान्विताम् ।
देवकीवसुदेवाभ्यामन्वितां वस्त्रवेष्टिताम् ॥ १९ ॥

निधाय फलपुष्पादिपूजोपस्करमद्भिजे ।
संपाद्य सकलन्नित्यकर्म कृत्वा यथोचितम् ॥ २० ॥

सायं सन्ध्यादिकं पश्चादर्धरात्र उपस्थिते ।
प्राणानायम्य सङ्कल्प्य पत्नीपुत्रसमन्वितः ॥ २१ ॥

सङ्कीर्त्य देशङ्कालञ्च सर्वपापक्षयाय वै ।
आयुरारोग्यसिद्ध्यर्थं सत्सन्तानाभिवृद्धये ॥ २२ ॥

श्रीबालकृष्णप्रीत्यर्थङ्कृष्णजन्माष्टमीव्रतम् ।
तदङ्गङ्कृष्णपूजाञ्च ह्यर्घ्यदानं यथाविधि ॥ २३ ॥

करिष्य इति सङ्कल्प्य जातकर्मादिकाः क्रियाः ।
कृत्वा कल्पोक्तविधिना पूजयित्वोपचारकैः ॥ २४ ॥

दिव्यगन्धैर्दिव्यमाल्यैर्नैवेद्यैर्विविधैरपि ।
ततो दत्वाऽर्घ्यमष्टाङ्गञ्चन्द्रायार्घ्यं यथाविधि ॥ २५ ॥

क्षीरेण कल्पयित्वाऽथ दत्वा पुष्पाञ्जलिं प्रिये ।
परेद्युः प्रतिमान्दत्वा कृत्वा प्रातस्तु पारणाम् ॥ २६॥

राजा सर्वं व्रतफलन्ततो भगवतेऽर्पयेत् ।
अनेन विधिना यस्तु व्रतमेतत्समाचरेत् ॥ २७ ॥

स विधूयाशु पापानि लीलया नृपपुङ्गवः ।
निहत्य समरे शत्रून्विजयम्प्राप्य सत्वरम् ॥ २८ ॥

रूपसौभाग्यसंपन्नः पालयित्वाऽवनीञ्चिरम् ।
देहान्ते दिव्यमारुह्य विमानं सूर्यसन्निभम् ॥ २९ ॥

दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः ।
वैष्णवल्लोँकमासाद्य तत्रैव वसति ध्रुवम् ॥ ३० ॥

इत्येवन्ते समाख्यातञ्जयन्तीव्रतमद्रिजे ।
कर्तव्यं श्रावणे मासि नृपैर्विजयकांक्षिभिः ॥ ३१ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
श्रीकृष्णजयन्तीव्रतस्वरूपकथनन्नाम
द्विनवतितमः पटलः ॥

---

## अथ त्रिणवतितमः पटलः ॥

### ॥ श्रीसिद्धिविनायकव्रतस्वरूपकथनम् ॥

श्रीशिवः—अथ भाद्रपदे मासि कर्तव्यन्नृपपुङ्गवैः ।
व्रतं वक्ष्याम्यहं सिद्धिविनायकसमाह्वयम् ॥ १ ॥

पुरा रामेण कृष्णेन साम्बेन च हनूमता ।
भगीरथेन पार्थेन गरुडेन सुमध्यमे ॥ २ ॥

सर्वविघ्ननिवृत्त्यर्थं स्वस्वकार्यार्थसिद्धये ।
अनुष्ठितं व्रतमिदन्तदन्यैः पृथिवीश्वरैः ॥ ३ ॥

तस्मात्सर्वप्रयत्नेन नृपैरेतद्व्रतोत्तमम् ।
अनुष्ठेयं विशेषेण वर्षे वर्षे जयेच्छुभिः ॥ ४ ॥

मासि भाद्रपदे शुक्लचतुर्थ्यां पृथिवीपतिः ।
प्रातः शुक्लतिलैस्स्नात्वा नित्यकर्म यथोचितम् ॥ ५ ॥

कृत्वा गृहे कारयित्वा पुष्पमण्टपमद्रिजे ।
तदन्तरे भद्रपीठन्निधाय तदुपर्यथ ॥ ६ ॥

स्वर्णेन वाऽथ रौप्येण मृदा वा परिकल्पितम् ।
लम्बोदरङ्गजमुखन्नागयज्ञोपवीतिनम् ॥ ७ ॥

पाशाङ्कुशौ मोदकञ्च दन्तञ्च दधतङ्करैः ।
ह्रस्वजानूरुयुगलं सर्वाभरणभूषितम् ॥ ८ ॥

संस्थाप्य राजा विघ्नेशन्ततो मध्याह्न आगते ।
पत्नीभिः पुत्रपौत्रैश्च समेतो नृपकेसरी ॥ ९ ॥

प्राणानायम्य सङ्कीर्त्य देशङ्कालञ्च तत्परम् ।
सर्वविघ्ननिवृत्त्यर्थङ्कार्यारम्भेषु वै सदा ॥ १० ॥

शत्रुक्षयार्थं सर्वत्र विजयार्थञ्चिरायुषे ।
सर्वसंपत्समृद्ध्यर्थं विघ्ननायकतुष्टये ॥ ११ ॥

करिष्येऽहं व्रतं सिद्धिविघ्नेशस्य महात्मनः ।
इति सङ्कल्प्य विधिना कृत्वा संस्थापनं शिवे ॥ १२॥

कल्पोक्तेन विधानेन संपूज्य कुसुमादिभिः ।
एकविंशतिपत्रैश्च संपूज्य तदनन्तरम् ॥ १३ ॥

नैवेद्यङ्कल्पयेद्राजा एकविंशतिमोदकैः ।
ततस्संपूज्य विघ्नेशन्दूर्वायुग्मैः पृथक्पृथक् ॥ १४ ॥

नैवेद्यार्थङ्कल्पितेषु मोदकेषु वरानने ।
आहृत्य दश विप्राय दत्वोपायनमादरात् ॥ १५ ॥

एकङ्गणाधिपे दत्वा कथां श्रुत्वा पुरोहितात् ।
दश नैवेद्यशिष्टांस्तान्मोदकान्प्राश्य च स्वयम ॥ १६ ॥

तस्मिन्दिने सरोजाक्षि भुञ्जीयात्तैलवर्जितम् ।
औपवाह्यान्गजान्सर्वान्पूजयेदुपचारकैः ॥ १७ ॥

अनेन विधिना यस्तु विघ्नेशव्रतमाचरेत् ।
नास्ति विघ्नभयन्तस्य सर्वकार्येषु सर्वदा ॥ १८ ॥

न शात्रवभयन्तस्य न तस्करभयन्तथा ।
नगरे वाऽपि राष्ट्रे वा न दुर्भिक्षभयं भवेत् ॥ १९ ॥

एवं भाद्रपदे मासि कर्तव्यं राजभिः प्रिये ।
मया निगदितं सिद्धिविघ्नेशव्रतमुत्तमम् ॥ २० ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां भाद्रपदमासकर्तव्यसिद्धिविनायकव्रतस्वरूपकथनन्नाम त्रिणवतितमः पटलः ॥



अथ चतुर्णवतितमः पटलः ॥

॥ श्रीमहालक्ष्मीव्रतस्वरूपकथनम् ॥

श्रीशिवः—अथान्यदपि वक्ष्यामि लक्ष्मीव्रतमनुत्तमम् ।
येन वाऽरीनुरुबलान्निर्जित्य समरे जयम् ॥ १ ॥

सम्प्राप्य प्राप्नुयुः प्राज्यं साम्राज्यं सन्ततिं यशः ।
येन नृत्येयुरणिमाद्यष्टैश्वर्याणि सन्ततम् ॥ २ ॥

रमया सह राजेन्द्रसदनाङ्गणभूमिषु ।
येन राजगृहद्वारदेशेषु मदवारणाः ॥ ३ ॥

वसेयुस्स्वर्णरचितकक्ष्याग्रैवेयभूषिताः ।
अश्वाश्च विश्वविख्याता योषा भूषाभिरुज्वलाः ॥ ४ ॥

भवेयुर्येन राजानस्समरेषूत्तमा नृषु ।
भवेद्येन महालक्ष्मीस्सन्तुष्टा सर्वदाऽपि च ॥ ५ ॥

पुरा विराटनगरस्योपकण्ठवनान्तरे ।
कृत्वा व्रतमिदं सर्वकामानापाप्सरोगणः ॥ ६ ॥

तस्माल्लँब्ध्वा तत्पुरस्थः कश्चिद्ब्राह्मणपालकः ।
कृत्वा व्रतमिदं सर्वसम्पदां पात्रताङ्गतः ॥ ७ ॥

तस्मात्तन्नगराधीशश्शिवदास इति प्रिये ।
राजा लब्ध्वा व्रतमिदं कृत्वा सम्यग्यथाविधि ॥ ८ ॥

जित्वा सपत्नसन्दोहं समरे लीलया भृशम् ।
संप्राप्य सकलां पृथ्वीमैश्वर्यञ्चाणिमादिकम् ॥ ९ ॥

पालयामास निखिलाः प्रजा धर्मेण पार्वति ।
तस्माद्व्रतमिदं सर्वैः कर्तव्यं राजसत्तमैः ॥ १० ॥

भद्रे भाद्रपदे मासि शुक्लाष्टम्यां समाहितः ।
राजा वा राजपत्नी वा प्रातरुत्थाय नैत्यकम् ॥ ११ ॥

कृत्वा कर्म यथाशास्त्रन्तत्कालोचितमद्रिजे ।
स्वेन सङ्कल्पितमहालक्ष्मीव्रतमहोत्सवे ॥ १२ ॥

अङ्गत्वेन तु कर्तव्यकलशाराधनादिकम् ।
कर्तुं पुरोधसं स्वस्य वृत्वा वै समनन्तरम् ॥ १३ ॥

आरोप्य शिबिकामध्ये तूर्यघोषपुरस्सरम् ।
प्रेषयेत्तन्नदीतीरे कर्तुं वै कलशार्चनम् ॥ १४ ॥

ततःपुरोहितः प्राप्य नदीं वा ह्रदमद्रिजे ।
सौवर्णं राजतन्ताम्रम्मृन्मयं वाऽतिशोभनम् ॥ १५ ॥

पूरयित्वा पुण्यजलैः पल्लवैः पुष्पदामभिः ।
अलङ्कृत्यावाह्य नदीर्गङ्गाद्याः पापनाशिनीः ॥ १६ ॥

क्षौमवस्त्रेण सञ्छाद्य कलशं तं पुरोहितः ।
विन्यस्य शिबिकामध्ये स्वपुरोभुवि संयतः ॥ १७ ॥

प्रविश्य राजभवनन्तूर्यघोषपुरस्सरम् ।
गृहस्येशानदिग्भागे रचिते पुष्पमण्टपे ॥ १८ ॥

पद्मेऽष्टदलसंयुक्ते कल्पिते श्वेततण्डुलैः ।
प्रतिष्ठाप्य क्षौमवस्त्रं प्रसार्य कलशोपरि ॥ १९ ॥

पलत्रयप्रमाणेन तदर्धार्धेन वा पुनः ।
स्वर्णेन निर्मिताल्लँक्ष्मीं प्रतिमाल्लँक्षणान्विताम् ॥ २० ॥

चतुर्भुजाङ्गजस्कन्धास्थितां शुक्लाम्बरावृताम् ।
पद्मयुग्मञ्चाक्षमालां करञ्च दधतीङ्करैः ॥ २१ ॥

पद्मासनस्थितां पद्ममुखीं पद्मनिभेक्षणाम् ।
दिग्गजैस्स्नाप्यमानाञ्च काञ्चनैः कलशोत्तमैः ॥ २२ ॥

अनर्घरत्नमकुटताटङ्काङ्गदभूषिताम् ।
कर्पूरवीटिकापूर्णकमनीयमुखाम्बुजाम् ॥ २३ ॥

संस्थाप्यानुस्थापनञ्च कृत्वा राज्ञे न्यवेदयेत् ।
ततो नृपालः पूर्वाह्ने महिष्या सह संयुतः ॥ २४ ॥

पूजास्थानं समासाद्य धूपगन्धमनोहरम् ।
प्राङ्मुखः प्रयतो भूत्वा महिष्या सह सुस्थितः ॥२५॥

देशङ्कालञ्च सङ्कीर्त्य मम राष्ट्रस्य वृद्धये ।
जनानां क्षेमलाभार्थं पुरराष्ट्रनिवासिनाम् ॥ २६ ॥

सर्वशत्रुक्षयार्थाय विजयाय विशेषतः ।
महालक्ष्म्यास्स्थैर्यसिद्ध्यै तस्याः प्रीत्यर्थमेव च ॥२७॥

अष्टैश्वर्यसमृद्ध्यर्थम्मासि भाद्रपदाभिधे ।
शुक्लाष्टमीं समारभ्य यावत्कृष्णाष्टमीदिनम् ॥ २८ ॥

पूजयाम्यन्वहन्देवीम्महालक्ष्मीं यथाविधि ।
इति सङ्कल्प्य सहसा महिष्या सह पार्थिवः ॥ २९ ॥

हस्ते प्रतिसरं बध्वा शुद्धस्वर्णविनिर्मितम् ।
दिव्यगन्धैर्दिव्यमाल्यैः पुरोहितमुखोद्गतैः ॥ ३० ॥

मन्त्रैः पुराणसंसिद्धैश्श्रीसूक्तेनाथ संयतः ।
पूजयित्वाऽङ्गपूजाञ्च कृत्वा धूपञ्च दीपकम् ॥ ३१ ॥

दत्वा नैवेद्यममितं फलभक्ष्यसमन्वितम् ।
समर्प्य मुखवासादि पूजाशेषं समाप्य तु ॥ ३२ ॥

व्रतोपदेष्ट्रे विप्राय दत्वोपायनमाद्विजे ।
सुवासिनीश्च संपूज्य तस्यै चोपायनं प्रिये ॥ ३३ ॥

दत्वाऽर्घ्यन्तु महालक्ष्म्यै फलयुक्तेन वारिणा ।
कृत्वा क्षीरेण चन्द्रार्घ्यन्दत्वा बध्वा सुदोरकम् ॥ ३४ ॥

बाहुदण्डे कथां श्रुत्वा धृत्वा शिरसि चाक्षतान् ।
संप्रार्थ्य तां महालक्ष्मीन्दद्यात्पुष्पाञ्जलिं नृपः ॥ ३५ ॥

एवं प्रतिदिनं कृत्वा लक्ष्मीपूजाम्महीपतिः ।
कृष्णाष्टम्यामर्धरात्रे मध्याह्ने वा समाहितः ॥ ३६ ॥

नद्यामवभृथस्नानं कृत्वा तूत्सवमाचरेत् ।
नित्यपूजां यथापूर्वं विनिर्वर्त्य ततःपरम् ॥ ३७ ॥

पुनस्संपूज्यतान्देवीमुपचारैर्यथाक्रमम् ।
नदत्सु पञ्चवाद्येषु भेरीकाहलिकादिषु ॥ ३८ ॥

व्रतोपदेष्ट्रे विप्राय सभार्यायार्चिताय च ।
दत्वा तां प्रतिमां लक्ष्म्या दक्षिणाञ्च स्वशक्तितः ॥३९॥

समर्प्य दीनानन्धांश्च कृपणांश्च विशेषतः ।
तोषयित्वान्नपानाद्यैर्ब्राह्मणांश्च सुवासिनीः ॥ ४० ॥

प्रीणयित्वा स्वयं पुत्रमित्राद्यैस्सह पार्थिवः ।
भुक्त्वा तस्मिन्दिने ब्रह्मचर्यादिनियमी भवेत् ॥ ४१ ॥

एवं षोडश वर्षाणि कृत्वैतद्व्रतमद्रिजे ।
इह प्राप्याखिलान्कामानन्ते लक्ष्मीपदं व्रजेत ॥ ४२ ॥

एवन्ते कथितम्भूपैः कर्तव्यन्तद्वधूजनैः ।
महालक्ष्मीव्रतन्देवि किमन्यच्छ्रोतुमिच्छसि ॥ ४३ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
महालक्ष्मीव्रतस्वरूपकथनन्नाम
चतुर्णवतितमः पटलः ॥

---

## अथ पञ्चनवतितमः पटलः ॥

### ॥ वामनजयन्तीव्रतस्वरूपकथनम् ॥

श्रीशिवः—अथान्यदपि वक्ष्यामि व्रतानामुत्तमोत्तमम् ।
श्रीवामनजयन्त्याख्यं व्रतं सर्वार्थदं शिवे ॥ १ ॥

पुत्रदं भाग्यदं राज्ञां विशेषेण जयप्रदम् ।
मासि भाद्रपदे शुक्ले द्वादश्यां रविवासरे ॥ २ ॥

नक्षत्रे श्रवणाभिख्ये मध्याह्ने वृश्चिकोदये ।
अदित्यां वामनो जातो बलिनिग्रहणोत्सुकः ॥ ३ ॥

उपोष्या सा महापुण्या द्वादशी केवलाऽपि वा ।
नैररन्यैश्च विधिवदन्यथा रौरवं व्रजेत् ॥ ४ ॥

सार्वभौमो नरपतिर्मण्डलस्येश्वरोऽपि वा ।
प्रातरुत्थाय विधिवत्स्नात्वा नद्यास्तु सङ्गमे ॥ ५ ॥

नदीतीरे गृहे वाऽपि शुद्धदेशे स्वलङ्कृते ।
कुम्भं सलिलसम्पूर्णं स्थापयित्वा विचक्षणः ॥ ६ ॥

पञ्चत्वक्पल्लवोपेतङ्गव्यरत्नसमन्वितम् ।
तस्मिन् प्रसार्य वसनन्तत्र देवं हिरण्मयम् ॥ ७ ॥

वामनङ्कालमेघाभं शुक्लयज्ञोपवीतिनम् ।
कृष्णाजिनधरञ्छत्रकुण्डिकाविलसत्करम् ॥ ८ ॥

मौञ्जीमेखलयोपेतं शुभ्रकौपीनधारिणम् ।
शुक्लवस्त्रयुगच्छन्नं संस्थाप्य समनन्तरम् ॥ ९ ॥

कृत्वा सुस्थापनं सम्यग्ध्यात्वाऽऽवाह्यागमोदितैः ।
मन्त्रैर्वेदोदितैर्वाऽपि पूजाङ्कृत्वा यथाविधि ॥ १० ॥

मूर्धादिपादपर्यन्तमङ्गपूजाङ्क्रमात्सुधीः ।
कृत्वा पादादिमूर्धान्तम्पुनस्सम्पूज्य च प्रिये ॥ ११ ॥

कृत्वाऽर्घ्यदानन्तद्रात्रिम्पुराणश्रवणादिभिः ।
नीत्वा प्रभाते विमले नित्यकर्म यथाविधि ॥ १२ ॥

निर्वर्त्य दत्वा प्रतिमां वामनस्य द्विजातये ।
दत्वा दध्योदनन्तस्य प्रीतये दक्षिणान्वितम् ॥ १३ ॥

दशावतारानुद्दिश्य मत्स्यादींश्च यथाक्रमम् ।
दत्वा दध्यन्नदानानि पश्चात् भुञ्जीत मानवः ॥ १४ ॥

एवं कृत्वा व्रतमिदं वामनप्रियकारकम् ।
चतुर्युगानि राजेन्द्र ह्येकविंशतिसंख्यया ॥ १५ ॥

उषित्वा वैष्णवे लोके भुक्त्वा भोगान्यथेप्सितान् ।
पुनस्संप्राप्य भूलोकम्प्रतिपक्षभयङ्करः ॥ १६ ॥

हस्त्यश्वरथपादातैरसंख्यैरन्वितस्सदा ।
रूपसौभाग्यसम्पन्नो जीवेच्च शरदां शतम् ॥ १७ ॥

इत्येवन्ते समाख्यातं सङ्ग्रहेण वरानने ।
श्रीवामनजयन्त्याख्यं व्रतन्त्रैलोक्यविश्रुतम् ॥ १८ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
वामनजयन्तीव्रतस्वरूपनिरूपणन्नाम
पञ्चनवतितमः पटलः ॥

## ॥ अथ षण्णवतितमः पटलः ॥

### ॥ अनन्तव्रतस्वरूपनिरूपणम् ॥

श्रीशिवः—अथान्यत्सम्प्रवक्ष्यामि मासि भाद्रपदे नृपैः ।
अनुष्ठेयं व्रतं श्रीमदनन्तस्य महात्मनः ॥ १ ॥

धन्यं यशस्करं पुण्यं पुत्रपौत्रप्रदायकम् ।
विशेषतो विजयदं राज्ञां विजयकांक्षिणाम् ॥ २ ॥

यद्व्रताचरणात्पूर्वङ्कौण्डिन्यो भाग्यवानभूत् ।
केचिन्नृपतयो देवि नाभागनहुषादयः ॥ ३ ॥

आचरित्वा व्रतमिदम्पुण्याङ्गतिमवाप्नुयुः ॥
तस्मादेतद्व्रतङ्कार्यमवश्यं राजपुङ्गवैः ॥ ४ ॥

मासि भाद्रपदे शुक्लचतुर्दश्याङ्गृहाङ्गणे ।
कारयित्वा पुष्पमयम्मण्टपं सुमनोहरम् ॥ ५ ॥

तदन्तरे सरोजाक्षि गोमयेन सवारिणा ।
सल्लिँप्य सर्वतोभद्रं रङ्गवल्ल्या विलिख्य तु ॥ ६ ॥

तत्र धान्यम्प्रस्थमात्रं विन्यस्य तदुपर्यथ ।
सुधाधवलितन्नूत्नङ्कलशम्पल्लवान्वितम् ॥ ७ ॥

निधाय तत्कुम्भजले यमुनादिमहानदीः ।
समावाह्य समाराध्य सर्वैरेवोपचारकैः ॥ ८ ॥

ततस्तत्कलशे पट्टवस्त्रमास्तीर्य तत्र तु ।
कृत्वा दर्भमयन्देवम्फणैस्सप्तभिरन्वितम् ॥ ९ ॥

अनन्ताख्यं विनिक्षिप्य दोरन्निक्षिप्य नूतनम ।
तदग्रभागे देवेशि गन्धपुष्पफलादिकान् ॥ १० ॥

सम्पाद्योपस्करान्सर्वान्पूजार्थम्पुष्करेक्षणे ।
ततो मध्याह्नसमये वाद्यघोषपुरस्सरम ॥ ११ ॥

प्राणानायम्य सङ्कीर्त्य देशङ्कालञ्च तत्परम् ।
मम पत्नीसमेतस्य पुत्रपौत्रान्वितस्य च ॥ १२ ॥

सराष्ट्रस्य सकोशस्य सामात्यस्यायुषे श्रियै ।
सर्वपापविशुद्ध्यर्थं सर्वशत्रुक्षयाय च ॥ १३ ॥

विजयाय विशेषेण देहान्ते मुक्तयेऽपि च ।
अनन्तरूपिश्रीविष्णुप्रीत्यर्थं सर्वकामदम् ॥ १४ ॥

व्रतमेतत्करिष्येऽहमिति सङ्कल्प्य सादरम् ।
कल्पोक्तेन विधानेन द्वादशाक्षरविद्यया ॥ १५ ॥

उपचारैष्षोडशभिस्सम्पूज्य तदनन्तरम ।
कृत्वा दोरग्रन्थिपूजां धृत्वा दोरं समन्त्रकम् ॥ १६ ॥

स्वस्य दक्षिणदोर्दण्डे दत्वोपायनमद्विजे ।
तत्परन्तत्कथां श्रुत्वा धृत्वा मूर्ध्नि कथाक्षतान् ॥ १७॥

समर्प्य तद्व्रतफलं विष्णवे परमात्मने ।
भुक्त्वा हविष्यन्नृपतिस्सुखी तिष्ठेत्स्वमन्दिरे ॥ १८

एवङ्कृत्वा नरपतिरनन्तव्रतमुत्तमम् ।
नव पञ्च च वर्षाणि पश्चादुद्यापनं प्रिये ॥ १९ ।

कृत्वास्य व्रतमुख्यस्य नित्यत्वाज्जीविताविधि ।
आचरेत्पुत्रपौत्राद्यैस्सह तद्व्रतमद्रिजे ॥ २० ॥

एवम्भाद्रपदे मासि कर्तव्यम्पृथिवीक्षिता ।
मया सम्यङ्निगादितमनन्तव्रतमुत्तमम् ॥ २१ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
भाद्रपदमासिकर्तव्यानन्तव्रतस्वरूपकथनन्नाम
षण्णवतितमः पटलः ॥

---

॥ अथ सप्तनवतितमः पटलः ॥

॥ नवरात्रव्रतस्वरूपनिरूपणम् ॥

श्रीशिवः—अथाश्विनाह्वये मासि कर्तव्यं राजवल्लभैः ।
नवरात्रव्रतन्देवि वक्ष्यामि शृणु सादरम् ॥ १ ॥

वर्षे वर्षे शरद्दताश्विने मासि शोभने ।
शुक्लपक्षे प्रतिपदमारभ्याऽदशमीदिनम् ॥ २ ॥

नवरात्रमिति ख्यातम्महापातकनाशनम् ।
उपरागसहस्रेण व्यतीपातायुतेन च ॥ ३ ॥

रविसङ्क्रान्तिलक्षेण सममित्युदितम्बुधैः ।
योऽस्मिन्करोत्येकभुक्तव्रतन्नियमपूर्वकम् ॥ ४ ॥

स दिव्येन विमानेन प्राप्नोति ब्रह्मणः पदम् ।
योऽस्मिन्नक्तव्रतङ्कुर्याच्छास्त्रोक्तविधिना नरः ॥ ५ ॥

स याति विष्णुभवनं योगिगम्यं सनातनम् ।
योऽस्मिन्नयाचितङ्कुर्याद्व्रतमुक्तविधानतः ॥ ६ ॥

स नरो याति कैलासं विलासम्मम पार्वति ।
योऽस्मिन्कुर्यात्फलाहारन्नवरात्रे जितेन्द्रियः ॥ ७ ॥

स दिव्येन विमानेन किङ्किणीजालमालिना ।
हंसबर्हिण्युक्तेन कामगेन हिमाद्रिजे ॥ ८ ॥

अमन्दानन्ददल्लोकम्परमं याति मानवः ।
योऽस्मिञ्जपेत गायत्रीमामध्याह्नं समाहितः ॥ ९ ॥

स सप्तकोटिमन्त्राणाञ्जपस्य फलमाप्नुयात् ।
वेदपारायणं यस्तु करोत्यस्मिन्सुमध्यमे ॥ १० ॥

स सप्तजन्मसु भवेद्धनाढ्यो वेदपारगः ।
योऽस्मिन्पठति माहात्म्यन्देव्यास्तु सरहस्यकम् ॥ ११ ॥

स भूत्वा सम्पदाम्पात्रमन्ते मोक्षञ्च विन्दति ।
योऽस्मिन्नष्टाक्षरं विष्णोर्जपेद्वा द्वादशाक्षरम् ॥ १२ ॥

रामस्य वाऽथ कृष्णस्य मन्त्रान्वा वामनस्य च ।
गायत्रीं वा नृसिंहस्य मन्त्रं सौदर्शनन्तु वा ॥ १३ ॥

गारुडं वा महामन्त्रञ्जपेद्यस्तु समाहितः ।
फलङ्कोटिगुणं प्राप्य भुक्त्वा भोगान्सपुष्कलान् ॥१४॥

सर्वपापविनिर्मुक्तो देहान्ते मणिभास्वरम् ।
दिव्यं विमानमारुह्य प्राप्नोति परमम्पदम् ॥ १५ ॥

योऽस्मिन्पञ्चाक्षरन्देवि मदीयं पापनाशनम् ।
शैवानि वा पुराणानि श्रीरुद्रन्न्यासपूर्वकम् ॥ १६ ॥

पठेत्प्रतिदिनं शुद्धस्स लोकम्मामकं व्रजेत् ।
यो मन्त्रो यस्य देवस्य तञ्जप्त्वा तस्य तुष्टये ॥ १७ ॥

तद्देवलोकमाप्नोति नात्र कार्या विचारणा ।
भवत्यास्तु विशेषेण मन्त्रान्माहात्म्यमेव च ॥ १८ ॥

जप्त्वैश्वर्यमवाप्नोति प्रेत्य मोक्षञ्च विन्दति ।
एवञ्जपविधिस्सम्यङ्नराणां मनीषिभिः ॥

कर्तव्यस्ते निगदितः किमन्यच्छ्रोतुमिच्छसि ॥ १९ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे सामान्यलक्ष्मीपीठिकायां
नवरात्रकर्तव्यजपस्वरूपकथननाम
सप्तनवतितमः पटलः ॥

---

॥ अथाष्टनवतितमः पटलः ॥

॥ नवरात्रहोमविधिस्वरूपकथनम् ॥

पार्वती—देवदेव दयासिन्धो कर्तव्यो नवरात्रके ।
श्रुतो जपविधिस्सम्यग्घोमभेदान्वदाद्य मे ॥ १ ॥

श्रीशिवः—साधु साधु जगद्वन्द्ये यन्मान्त्वं परिपृच्छसि ।
तत्तेऽहं सम्प्रवक्ष्यामि शृणु कल्याणि सादरम् ॥ २ ॥

योऽस्मिन्प्रतिदिनङ्कुर्यात्तिलहोमं समाहितः ।
त्रैयम्बकेण मन्त्रेण ह्यपमृत्युहरेण वै ॥ ३ ॥

कारयेद्ब्राह्मणैर्वाऽपि मत्प्रीत्यै मदिरेक्षणे ।
स मृत्युभीतिरहितो जीवेच्च शरदां शतम् ॥ ४ ॥

योऽस्मिन्त्रिमधुसिक्ताभिर्दूर्वाभिर्होममाचरेत ।
मृत्युञ्जयम्मामुद्दिश्य स मृत्युञ्जयति ध्रुवम् ॥ ५ ॥

योऽस्मिन्नरोऽमृताकांडैः क्षीराक्तैः प्रतिवासरम् ।
अष्टोत्तरेण जुहुयाद्विष्णुमुद्दिश्य मानवः ॥ ६ ॥

अयुतं वा सहस्रं वा शतं वा शक्तितः प्रिये ।
सर्वरोगविनिर्मुक्तो मुक्तिमन्ते व्रजेन्नरः ॥ ७ ॥

योऽस्मिन् तृचविधानेन कुर्यात्सूर्यार्चनन्नरः ।
आरोग्यभाग्यसम्पन्नो जीवेत्स शरदां शतम् ॥ ८ ॥

योऽस्मिन्तिलाक्षतैः कुर्यात्तर्पणं प्रतिवासरम् ।
देवान्पितॄन्समुद्दिश्य तत्तन्मन्त्रैर्विधानतः ॥ ९ ॥

तेन प्रीता भवेयुस्ते कल्पमेकन्न संशयः ।
योऽस्मिन्प्रतिदिनं विप्रान्भोजयेन्मृष्टमादरात् ॥ १० ॥

स याति दिव्ययानेन देवेन्द्रभवनन्नरः ।
यस्तु देवीम्भवद्रूपां दुर्गामुद्दिश्य भोजयेत् ॥ ११ ॥

सुवासिनीः प्रतिदिनङ्क्रीडते सोऽप्सरोगणैः ।
चण्डिकाञ्च भवद्रूपां समुद्दिश्य कुमारिकाः ॥ १२ ॥

भोजयेत्प्रत्यहन्देवि सर्वभाग्यमवाप्नुयात् ।
योऽस्मिन्मौनव्रतङ्कुर्यान्नवरात्रे समाहितः ॥ १३ ॥

गद्यपद्यमयीं विद्यान्तस्मै दद्यात्सरस्वती ।
योऽस्मिन्नरो रमाप्रीत्यै गन्धाम्बरसुमानि च ॥ १४ ॥

दद्यात्तस्य गृहे लक्ष्मीर्वसेदाचन्द्रतारकम् ।
योऽस्मिन्गोभूहिरण्यादि दानानि प्रतिवासरम् ॥ १५ ॥

करोति तस्य तद्दानफलङ्कोटिगुणम्भवेत् ।
एवम्प्रशस्तं सुश्रोणि नवरात्रञ्जगत्त्रये ॥ १६ ॥

देवैश्च दानवैर्मर्त्यैर्यक्षकिन्नरराक्षसैः ।
चीर्णम्मुनिगणैरन्यैः पार्थिवैर्जयकांक्षिभिः ॥ १७ ॥

एतास्मिन्यत्तु कर्तव्यन्तत्कुरु त्वं समाहिता ।
यद्यत्ते मनसोऽभीष्टन्तत्तत्प्राप्स्यसि पुष्कलम् ॥ १८ ॥

इत्येवन्ते समाख्यातं नवरात्रस्य भामिनि ।
माहात्म्यन्देवि संक्षेपात्किमन्यच्छ्रोतुमिच्छसि ॥ १९ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नवरात्रकर्तव्यहोमविधिस्वरूपकथनन्नाम
अष्टनवतितमः पटलः ॥



॥ अथैकोनशततमः पटलः ॥

॥ मेरुनिर्माणस्वरूपकथनम् ॥

पार्वती—शिव शङ्कर सर्वज्ञ पञ्चकृत्यपरायण ।
माहात्म्यं नवरात्रस्य त्वन्मुखाम्भोजतश्श्रुतम् ॥ १ ॥

इदानीं श्रोतुमिच्छामि यत्कर्तव्यम्महीभुजाम् ।
नवरात्रे विशेषेण तत्सर्वं वद मे प्रभो ॥ २ ॥

श्रीशिवः—साधु साधु जगद्वन्द्ये यन्मान्त्वं परिपृच्छसि ।
सर्वलोकस्य रक्षार्थन्तद्वक्ष्यामि तव प्रिये ॥ ३ ॥

वर्षे वर्षे शरदृतावाश्विने मासि पार्वति ।
शुक्लपक्षे प्रतिपदमारभ्यादशमीदिनम् ॥ ४ ॥

यक्षकिन्नरगन्धर्वदेवदानवरक्षसाम् ।
भूतप्रेतपिशाचानान्तृप्त्यर्थं राष्ट्रगुप्तये ॥ ५ ॥

कुर्यान्महोत्सवन्देवीन्दुर्गामुद्दिश्य पार्थिवः ।
सार्वभौमो नरपतिर्मण्डलस्याधिपोऽपि वा ॥ ६ ॥

देशस्य नगरस्यापि नायको वा महीपतिः ।
सम्मन्त्र्य मन्त्रिभिस्साकमुत्सवार्थं हिमाद्रिजे ॥ ७ ॥

स्वगृहस्य पुरोभागे सुविस्तीर्णे समस्थले ।
आस्थानमण्टपं रम्यङ्कल्पयित्वा महोन्नतम् ॥ ८ ॥

प्रवालमयसोपानं वैडूर्यमयवेदिकम् ।
मौक्तिकस्तम्भगम्भीरम्माणिक्यवलभीपुटम् ॥ ९ ॥

चित्रध्वजपताकाढ्यं सुवितानं सुतोरणम् ।
ईदृग्रूपस्य पुरतो मण्टपस्य तलोदरि ॥ १० ॥

नटगायकसञ्चारयोग्यन्दत्वा स्थलम्महत् ।
दीपवृक्षान्दीपरथान्कल्पयित्वा समन्ततः ॥ ११ ॥

तत्परम्पङ्क्तिशो मेरुमन्दराभान्रथान्नव ।
पिशाचवदनाकारशिखरैरुपशोभितान् ॥ १२ ॥

चित्रध्वजपताकाढ्यान्हेमरत्नपरिष्कृतान् ।
ध्वजाग्रबद्धकनकघण्टारवमनोहरान् ॥ १३ ॥

उत्सवार्थङ्कल्पयित्वा सम्मुखे पृथिवीपतिः ।
स्वगृहे तूत्तरे भागे कारयेत्पुष्पमण्टपम् ॥ १४ ॥

दुर्गारमादिपूजार्थन्दिव्यधूपादिवासितम् ।
एवं सम्भृतसम्भारस्तस्मिंस्तु प्रतिपद्दिने ॥ १५ ॥

ब्राह्मे मुहूर्त उत्थाय कृतशौचक्रियश्शुचिः ।
पुरोहितमथाहूय सर्वागमविशारदम् ॥ १६ ॥

पुण्यतीर्थजलैस्स्वर्णघटस्थैरतिपावनैः ।
स्नातश्शुक्लाम्बरधरश्शुक्लमाल्यानुलेपनः ॥ १७ ॥

धृतोर्ध्वपुण्ड्रस्सकलं कृत्वा कर्म यथोचितम् ।
महिष्या सहितो राजा पूजयित्वा पुरोहितम् ॥ १८ ॥

वृद्धान्द्विजान्पुरन्ध्रीश्च पूजयित्वा यथाविधि ।
स्वेष्टदेवं हृदि ध्यायन्स वसेत्पृथिवीपतिः ॥ १९ ॥

ततःपुरोधास्सौवर्णपात्रे विन्यस्य शोभनम् ।
हैमम्प्रतिसरं रम्यं सम्पूज्य कुसुमादिभिः ॥ २० ॥

सिह्मासने महीपालमुपवेश्य शुभाकृतिम् ।
आदाय तत्प्रतिसरन्धूपगन्धमनोहरम ॥
मन्त्रेण वक्ष्यमाणेन बध्नीयाद्दक्षिणे करे ॥ २१ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नवरात्रोत्सवकर्तव्यमेरुनिर्माणादिस्वरूपकथनन्नाम
एकोनशततमः पटलः ॥

---

॥ अथ शततमः पटलः ॥

॥ साम्राज्यलक्ष्म्यावाहनम् ॥

श्रीशिवः—अथ प्रतिसरम्बद्धुम्मन्त्रं वक्ष्यामि पार्वति ।
अनुष्ठेयं व्रतं येन सफलम्भवति प्रिये ॥ १ ॥

इमं प्रतिसरं राजन्हस्ते बध्नामि तेऽनघ ।
यावद्व्रतस्य सम्पूर्तिस्तावत्त्वं विजितेद्रियः ॥ २ ॥

एकभक्तपरो मानी ध्यानयोगं समाश्रितः ।
वर्तय त्वं महाप्राज्ञ सावधानेन चेतसा ॥ ३ ॥

एवम्प्रतिसरम्बध्वा पुरोधास्तदनन्तरम् ।
साम्राज्यलक्ष्मीन्तद्गात्रे सम्यगावाहयेत्सुधीः ॥ ४ ॥

मन्त्रेण वक्ष्यमाणेन यथाशास्त्रं समाहितः ।
सर्वज्ञ सर्वदेवात्मन्सर्वभूताहिते रत ॥ ५ ॥

आवाह्यामि साम्राज्यलक्ष्मीन्त्वयि जनेश्वर ।
समुद्रमेखलाम्पृथ्वीम्परिपालयितुन्त्वयि ॥ ६ ॥

आवाह्यामि साम्राज्यलक्ष्मीं राजेन्द्र सादरम् ।
परिपालयितुं शिष्टान्दुष्टान्संहर्तुमञ्जसा ॥ ७ ॥

आवाह्यामि साम्राज्यलक्ष्मीन्त्वयि नृपोत्तम ।
एवमावाहनाल्लक्ष्म्यास्तेजोबलपराक्रमैः ॥ ८ ॥

अधिकं शोभते राजा शाणोल्लीढो मणिर्यथा ।
यथा स्वल्पफलो वृक्षो दोहदेन फलाधिकः ॥ ९ ॥

साम्राज्यलक्ष्म्यास्त्वावाहाद्राजा चैश्वर्यवान्भवेत् ।
यथा काष्ठगता ज्वाला गुणतैलात्प्रभाऽधिका ॥ १० ॥

तथा लक्ष्मीसमायोगाद्भूपोऽपि स्यात्प्रभाऽधिकः ।
श्रीवल्लीमूलिकायोगादयस्स्वर्णं यथा भवेत् ॥ ११ ॥

तथा योगाद्राज्यलक्ष्म्या राजा लोकेश्वरो भवेत् ।
स्थाली गुणरसाक्ताऽपि भ्राजते नाग्निना विना ॥ १२ ॥

तथा श्रिया विना भूपो राष्ट्रैश्वर्यैर्न भासते ।
तस्मादावाहनं लक्ष्म्याः कार्यं राज्ञि पुरोधसा ॥ १३ ॥

प्रतिमासु यथाऽऽवाह्य देवतां पूजयेद्गुमे ।
भूपालेषु तथाऽऽवाह्य राज्यलक्ष्मीं प्रपूजयेत् ॥ १४ ॥

तस्माल्लक्ष्मीं समावाह्य पुरोधास्तदनन्तरम् ।
आशीर्भिर्वर्धयेद्राज्यलक्ष्मीयुक्तम्महीपतिम् ॥ १५ ॥

अभूत्स्वस्थञ्जगत्सर्वमखिलाधीश्वर त्वया ।
चिरञ्जीव जगन्नित्यन्धर्मेण परिपालय ॥ १६ ॥

सर्वागमसमस्वान्त सर्वलोकसुखावह ।
सर्वदुष्टप्रशमन चिरञ्जीव सुखी भव ॥ १७ ॥

साम्राज्यतन्त्रविज्ञानसम्पादितयशोधन ।
प्रणताभीष्टवरद चिरञ्जीव सुखी भव ॥ १८ ॥

चतुष्षष्टिकलालक्ष्मीसेव्य सिंह्मासनेश्वर ।
प्रतापचक्रव्यूहस्थ चिरञ्जीव सुखी भव ॥ १९ ॥

महतामाशिषामोघैरनर्घैरघहारिभिः ।
चिरञ्जीव चिरञ्जीव सुखी भव सुखी भव ॥ २० ॥

इत्याशीर्भिर्महीपालं वर्धयित्वा पुरोहितः ।
राजधर्मानुपदिशेत्कांश्चित्कमललोचने ॥ २१ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नवरात्रप्रशंसायां साम्राज्यलक्ष्म्यावाहनस्वरूपकथनन्नाम
शततमः पटलः ॥

## ॥ अथैकशततमः पटलः ॥

### ॥ राजधर्मोपदेशस्वरूपकथनम् ॥

पार्वती—स्वामिंस्त्रिनेत्र सर्वज्ञ लोकरक्षणतत्पर ॥
केवा लोके राजधर्मा उपदेशक्रमः कथम् ॥ १ ॥

तत्सर्वं वद देवेश यद्यस्ति करुणा मयि ।
श्रीशिवः—कल्याणि राजधर्माणामुपदेशक्रमं प्रिये ॥ २ ॥

तत्स्वरूपञ्च सकलन्तव वक्ष्यामि सांप्रतम् ।
साम्राज्यलक्ष्म्या संयुक्तमाशीर्भिरभिवर्धितम् ॥ ३ ॥

राजानं प्रत्युपदिशेद्राजधर्मान्पुरोहितः ।
नानाजनमुखोद्गीर्णवचोऽर्थानुभवात्तधीः ॥ ४ ॥

श्रुत्वोपलाल्य पृष्ट्वा तानजानन्निव साधय ।
प्रत्यर्थिसर्वहरणप्रवीणोपायतन्त्रतः ॥ ५ ॥

गुप्तकृत्योन्यदुद्दिश्य तत्सर्वं हर भूवर ।
समस्तमतसिद्धान्तस्थापनव्याजतः प्रभो ॥ ६ ॥

सारस्य तरुमुद्धृत्य शत्रुतन्त्रं विभेदय ।
गुरुदेवद्विजपितृमातृपूजापरायण ॥ ७ ॥

नारायणात्मकतया नयतन्त्रं प्रचारय ।
नानामायाकलाज्ञानगर्वितानभिमानिनः ॥ ८ ॥

कुलीनान्सर्वशास्त्रज्ञान्धर्ममार्गैकवर्तिनः ।
सिद्धामृतकरान्सिद्धविद्यान्सिद्धार्थवादिनः ॥ १८ ॥

सत्यसन्धान्सदाचारान्सर्वलोकहितैषिणः ।
भिषग्वरान्परामृश्य प्रेम्णा त्वं परिपालय ॥ १९ ॥

निग्रहानुग्रहकरान्नित्यकृत्यविशारदान् ।
निरन्तरात्मदैवैक्यभाग्यसंसिद्धमानसान् ॥ २० ॥

मन्त्रयन्त्ररहस्यज्ञांस्तन्त्रविद्याविशारदान् ।
चतुष्षष्टिकलाऽभिज्ञान्ज्ञानैश्वर्यमहोदयान् ॥ २१ ॥

अश्रान्तमन्त्रमनननिगृहीताखिलेन्द्रियान् ।
उपशान्तान्सदाचारान्नित्यं तान्परिपालय ॥ २२ ॥

साङ्गवेदार्थविज्ञानान्षडध्वगतिदर्शिनः ।
सर्वसिद्धान्तशुद्धान्तःकरणान्ब्रह्मनिष्ठितान् ॥ २३ ॥

कृतसोमाहुतीन्श्रेष्ठानविच्छिन्नाग्निहोत्रिणः ।
सत्यसन्धान्समदृशो नित्यं तान्परिपालय ॥ २४ ॥

कार्याकार्यविशेषज्ञान्कांक्षितार्थोपदेशकान् ।
शैवविष्ण्वागमज्ञानकुशलानात्मवेदिनः ॥ २५ ॥

अष्टादशपुराणार्थसारसङ्ग्रहपाठकान् ।
शब्दार्थचित्रगम्भीरपदबन्धविशारदान् ॥ २६ ॥

अत्याशु चित्रमधुररचनाचतुरान्कवीन् ।
भूषणैरम्बरैस्स्वर्णैर्नित्यं तान् परिपालय ॥ २७ ॥

गान्धर्वौषधसंशुद्धकण्ठगीतागमोज्ज्वलान् ।
नादब्रह्मैकरसिकान्नित्यं तान्बहुमानय ॥ २८ ॥

नानानाट्यगतिज्ञानकुशलांश्शास्त्रवेदिनः ।
तालमर्मविशेषज्ञान्नित्यं तान् बहुमानय ॥ २९ ॥

धनुर्वेदमहामन्त्रतन्त्रविद्याविशारदान् ।
दृष्टिलक्ष्यपदोद्भेदपटुबाणगतिक्रमान् ॥ ३० ॥

मुष्टियुद्धखनत्कायजयपादावतारकान् ।
पुरदेशाखिलग्रामपालकान् बलवत्तरान् ॥ ३१ ॥

धीरांश्शूरान्महावीरान् सङ्गृह्य परिपालय ।
क्षत्रियांश्शरविद्धाङ्गान् पुण्यलोकोपकारकान् ॥ ३२ ॥

दुर्वारवीरकलहनिर्वापणविचक्षणान् ।
सायुधान्हृष्टपुष्टाङ्गान् दृढगम्भीरमानसान् ॥ ३३ ॥

वर्धमानवयोलक्ष्यानशेषान्परिपालय ।
विश्ववस्तुविशेषज्ञानशीत्यंशार्द्धजीविनः ॥ ३४ ॥

विश्वोपकारसन्तुष्टान्वैश्यांस्त्वं परिपालय ।
सकलोपायकुशलान्दृढाङ्गान्सस्यवर्धकान् ॥ ३५ ॥

शुश्रूषासक्तचित्तांस्ताञ्शूद्रांस्त्वं परिपालय ।
अन्यान्स्वकृत्यनिरताननन्यपरिपन्थिनः ॥ ३६ ॥

अशेषजनदूरस्थानन्त्यांस्त्वं परिपालय ।
सर्वाचारसमाञ्शान्तान्सर्वत्र प्रियवादिनः ॥ ३७ ॥

सर्वकर्मविनिर्मुक्तान्योगिनः परिपालय ।
ज्ञानवृद्धांश्छास्त्रवृद्धान्वयोवृद्धान्द्विजन्मनः ॥ ३८ ॥

तारतम्यक्रमं ज्ञात्वा तांस्तांस्त्वं परिपालय ।
जात्युत्कर्षापकर्षौ च विमृश्य च मुहुर्मुहुः ॥ ३९ ॥

जातिसाङ्कर्यराहित्यं कुरु साम्राज्यशासनम् ।
जात्या श्रेष्ठोऽथ वा हीनो यः कश्चित्स्वीयवर्त्मनि ॥ ४० ॥

सञ्चरेत्तं सदा शोध्य तत्रैव परिपालय ।
व्यत्यस्ताचारभेदे तु यःकश्चिदनुवर्तते ॥ ४१ ॥

तं संशिक्ष्य यथापूर्वं संस्थाप्य परिपालय ।
चतुर्वर्णाश्रमस्थानान्तारतम्यमवेक्ष्य च ॥ ४२ ॥

तत्तद्वर्णानुगुण्येन परामृश्यैव पालय ।
गोगजाश्वोष्ट्रमुख्येषु क्लिष्टान्गणान्विमृश्य च ॥ ४३ ॥

जीवनौषधभेदैस्तान्नित्यन्त्वं परिपालय ।
नानाप्रकारभवनवीथिकापरिपालकान् ॥ ४४ ॥

सावधानेन मनसा परिपालय तान् सदा ।
धान्यैर्बहुविधैरन्यैर्मरीचादिकवस्तुभिः ॥ ४५ ॥

परिपूर्णं यथा नित्यन्तद्वत्कोशं विमर्शय ।
आदाय व्ययभेदेषु तुषान्तं परिमृश्य च ॥ ४६ ॥

अन्यूनाधिकमात्मेष्टमशेषं परिपालय ।
हैमादिसर्वव्यापारिभेदान्स्वस्वाधिकारिणः ॥ ४७ ॥

समस्तजनधीवृत्तिसूचकान् विश्वकारकान् ।
प्रशस्तकीर्तिलक्ष्मीशस्वामिकार्यधुरन्धरान् ॥ ४८ ॥

सङ्गृह्य सरसं सम्यक्पालय त्वं सुहृत्तम ।
एवं नानाविधं कृत्यमकृत्यं परिहृत्य च ॥ ४९ ॥

साधयन्बोधयन्सर्वान्पालयंस्त्वं सुखी भव ।
एवं पुरोधा देवेशि राजधर्मान्महीभृतः ॥
उपदिश्य ततःकुर्यात्तत्त्वबोधनमादरात् ॥ ५० ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
राजधर्मोपदेशस्वरूपकथनन्नाम
एकशततमः पटलः ॥

---

## ॥ अथ द्विशततमः पटलः ॥

### ॥ तत्वोपदेशस्वरूपकथनम् ॥

पार्वती—भगवन् देव देवेश सर्वज्ञ करुणानिधे ।
तत्वबोधक्रमं सम्यग्वद मे वदतां वर ॥ १ ॥

श्रीशिवः—साधु साधु जगत्पूज्ये यन्मान्त्वं परिपृच्छसि ।
तदहं ते प्रवक्ष्यामि शृणु कल्याणि सादरम् ॥ २ ॥

ततस्त्वेनैवोपादिष्टराजधर्मस्य भूपतेः ।
पुरोधाः क्षुब्धचित्तस्य धर्मव्यत्ययशङ्कया ॥ ३ ॥

पुनश्चोपदिशेत्तत्वाश्चित्तनैर्मल्यसिद्धये ।
जन्म मानुषमास्थाय मायाकल्पितवस्तुषु ॥ ४ ॥

वृथा न मुह्यतु भवान्शृणोत्वद्य मयेरितम् ।
शरीरमास्थिरं सप्तधातुवैचित्र्यसञ्चितम् ॥ ५ ॥

शुद्धात्मनस्तवाप्यस्य शरीरस्यापि सङ्गमः ।
सङ्कल्पजन्यो विज्ञेयस्त्वया सर्वात्मना दृढम् ॥ ६ ॥

अनुग्रहाय भूतानामवतीर्णोऽसि भूतले ।
त्वं विश्वमासि सत्वन्त्वं मद्वचः परिपालय ॥ ७ ॥

त्वमेव सर्वभूतेषु ज्ञानाकारः पृथक्कृतिः ।
मायासङ्कल्पवैचित्र्यान्नानेवाद्य विभाससे ॥ ८ ॥

वियद्वत्परिपूर्णस्य लीलाहन्ताविशेषिणः।
तव स्वरूपन्त्वं विद्धि त्वं विश्वमसि तत्वतः ॥ ९ ॥

चित्तमद्य समाधाय पश्य विश्वं सुहृत्तम।
न श्रूयते दृश्यते च त्वदन्यदपि किञ्चन ॥ १० ॥

यदेनमव्ययं शान्तमादिमध्यान्तवर्जितम्।
तस्मिन् सदा समारूढः कृतकृत्यो भवाधुना ॥ ११ ॥

एवं पुरोधास्सर्वज्ञो राज्ञस्तत्वं विशेषतः।
उपदिश्याथ राजानम्बहुधा त्वभिमन्त्रयेत् ॥ १२ ॥

इत्येवन्देवि तत्वोपदेशक्रम उदीरितः।
संक्षेपेण मया सम्यक्किमन्यच्छ्रोतुमिच्छसि ॥ १३ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
तत्वोपदेशस्वरूपनिरूपणन्नाम
द्विशततमः पटलः ॥

---

॥ अथ त्रिशततमः पटलः ॥

॥ राजाभिमन्त्रणस्वरूपनिरूपणम् ॥

पार्वती—शिव शङ्कर सर्वज्ञ कर्तव्यमभिमन्त्रणम्।
कथं पुरोधसा राज्ञस्तन्मे विस्तरतो वद ॥ १ ॥

श्रीशिवः—साधु साधु वरारोहे यन्मान्त्रं परिपृच्छसि ।
तत्तेऽहं सम्प्रवक्ष्यामि सावधानमनाश्शृणु ॥ २ ॥

सत्सभाचक्रमध्यस्थम्मान्त्रिदीपैस्समावृतम् ।
महादीपमिव श्रीशान्ध्यात्वा सम्मन्त्रयेच्छ्रियै ॥ ३ ॥

एकोदयोदितानेकदिवाकरसमप्रभम् ।
आस्थानचक्रमध्यस्थं प्रतापायाभिमन्त्रयेत् ॥ ४ ॥

राकाहिमकरानेकसमानोदयसन्निभम् ।
प्रभुं सम्मन्त्रयेद्ध्यात्वा सर्वसाम्राज्यसिद्धये ॥ ५ ॥

शत्रूच्चाटाय नृपतिश्चण्डवायुमिव स्मरेत् ।
कालमेघमिव ध्यायेद्वर्षसिद्ध्यै महीपतिम् ॥ ६ ॥

कुलाचलमिव ध्यात्वा स्थैर्यार्थमभिमन्त्रयेत् ।
तं वेधसमिव ध्यात्वा सृष्टिकार्येऽभिमन्त्रयेत् ॥ ७ ॥

विष्णुवद्द्विजरक्षार्थं संहारे रुद्रवत्प्रिये ।
ध्यात्वाऽभिमन्त्रयेत्सम्यक्पुरोधास्तम्महीपतिम् ॥ ८ ॥

शौर्यार्थमिन्द्रवद्ध्यात्वा दाहकर्मणि वह्निवत् ।
भावयित्वोग्रकार्येषु वैवस्वतमिवाद्रिजे ॥ ९ ॥

आमन्त्रयेन्महीपालं रक्षोभयनिवृत्तये ।
तान्निर्ऋतिमिव ध्यात्वा मन्त्रयेद्वै पुरोहितः ॥ १० ॥

जलसंतरणे ध्यायेत्तन्नृपं वरुणाकृतिम् ।
मलयानिलवद्ध्यात्वा तमाह्लादाय मन्त्रयेत ॥ ११ ॥

ध्यात्वा धनदवत्सम्पत्सिद्ध्यै तमभिमन्त्रयेत् ।
ईशानवज्ज्ञानसिद्ध्यै ध्यात्वा त्वावाहयेन्नृपम् ॥१२॥

एवं नानाप्रभेदैस्तन्तत्तत्कर्मानुसारतः ।
अभिमन्त्र्य सहस्रेण ब्राह्मणानाम्महात्मनाम् ॥ १३ ॥

जापयेद्वैदिकान् मन्त्रान् पुराणोक्तांश्च तान्त्रिकान् ।
इत्येवं ते समाख्यातमभिमन्त्रणमाद्रिजे ॥
दीक्षान्विते महीपाले किमन्यच्छ्रोतुमिच्छसि ॥ १४ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
राजाभिमन्त्रणस्वरूपनिरूपणन्नाम
त्रिशततमः पटलः ॥

---

॥ अथ चतुश्शततमः पटलः ॥

॥ नवरात्रकर्तव्यसूक्तजपस्वरूपकथनम् ॥

पार्वती—देवदेव दयासिन्धो सर्वलोकहिते रत ।
कियन्ति चात्र सूक्तानि किन्दैवत्यानि शङ्कर ॥ १ ॥

फलं किं वा जपात्तेषान्तत्सर्वङ्कथयाद्य मे ।
श्रीशिवः—सम्यगुक्तं त्वया देवि सर्वलोकहितेच्छया ॥ २ ॥

जपस्वरूपं सूक्तानान्नामानि च वदामि ते ।
नवरात्रे प्रतिपदि पुरोधाः पृथिवीपातम् ॥ ३ ॥

तत्तत्कार्यानुगुण्येनाभिमन्त्र्य बहुधा ततः ।
ब्राह्मणाञ् श्रुतसम्पन्नान्स्वाचारान्संयतेन्द्रियान् ॥ ४ ॥

सहस्रं वा तदर्धं वा शतं वा शक्तितः प्रिये ।
आसनेषूपवेश्यैतान्गन्धपुष्पाक्षतादिभिः ॥ ५ ॥

सम्पूज्य देशङ्कालञ्च सङ्कीर्त्य तदनन्तरम् ।
दुर्गालक्ष्मीभारतीनां विष्ण्वादीनामगात्मजे ॥ ६ ॥

सर्वेषामपि देवानां प्रीत्यर्थं राष्ट्रवृद्धये ।
श्रियै दीर्घायुषे राज्ञः क्षेमाय विजयाय च ॥ ७ ॥

पुत्रपौत्राभिवृद्ध्यर्थं संवत्सरसुखाय च ।
तत्तद्दैवत्यसूक्तानाङ्कारयिष्ये जपन्द्विजैः ॥ ८ ॥

इति सङ्कल्प्य विप्रेन्द्रैः पुरोधाः कारयेज्जपम् ।
दुर्गासूक्तन्तथा लक्ष्मीसूक्तं सारस्वतन्तथा ॥ ९ ॥

रेवन्तसूक्तमश्वानां सूक्तं सूक्तङ्गजस्य च ।
गोसूक्तमृषभस्यापि सूक्तं सूक्तङ्गणेशितुः ॥ १० ॥

स्तवराजञ्च दौर्गञ्च जातवेदससूक्तकम् ।
वायुसूक्तन्तथाऽऽकाशसूक्तञ्चाश्विनमेव च ॥ ११ ॥

सौरं सूक्तन्तथा चान्द्रं भौमसूक्तं बुधस्य च ।
सूक्तं बृहस्पतेस्सूक्तं शुक्रसूक्तन्तथा शनेः ॥ १२॥

सूक्तं राहोस्तथा केतोः ऐन्द्रमाग्नेयमेव च ।
याम्यञ्च नैर्ऋतञ्चैव वारुणं वायवीयकम् ॥ १३ ॥

कौबेरञ्च तथैशान्यं ब्राह्ममानन्तमेव च ।
सूक्तञ्चैवास्त्रशस्त्राणां रक्षोघ्नं सूक्तमुत्तमम् ॥ १४ ॥

सूक्तन्तथाऽप्रतिरथम्मन्युसूक्तञ्च दौन्दुभम् ।
सौमङ्गलन्तथा सूक्तं सूक्तं शाकुनमेव च ॥ १५ ॥

स्वस्तिसूक्तं तथा रौद्रं वैष्णवं सौरमेव च ।
पावमानं तथा सूक्तं शान्तिसूक्तमनन्तरम् ॥ १६ ॥

संग्रामसूक्तमायुष्यं सूक्तं यक्ष्महरन्तथा ।
घृतसूक्तं रात्रिसूक्तं वास्तुसूक्तमनन्तरम् ॥ १७ ॥

मृतसञ्जीविनीसूक्तं सूक्तं वामनसंज्ञकम् ।
नारायणाख्यसूक्तञ्च पौरुषं सूक्तमेव च ॥ १८ ॥

तथाष्टऽवसुसूक्तञ्च सप्तानाम्मरुतान्तथा ।
द्वादशादित्यसूक्तञ्च मातृणां सूक्तमेव च ॥ १९ ॥

तथैकादशरुद्राणा सूक्तं सूक्तं वनस्पतेः ।
शत्रुक्षयकरं सूक्तं तत्पलायनकारकम् ॥ २० ॥

सूक्तमैन्द्रावैष्णवञ्च हरिसूक्तमनन्तरम् ।
नामत्रयन्तथा देवीमाहात्म्यमतिपावनम् ॥ २१ ॥

सहस्रनामस्तोत्रे द्वे शैवं पञ्चाक्षरं तथा ।
अष्टाक्षरं वैष्णवञ्च द्वादशाक्षरमेव च ॥ २२ ॥

कवचञ्च तथा शैवं श्रीरुद्रं न्यासपूर्वकम् ।
शिवसङ्कल्पमन्त्रांश्च रामानमसहस्रकम् ॥ २३ ॥

कवचं राघवेन्द्रस्य हनूमत्कवचं तथा ।
सौदर्शनं तथा मन्त्रङ्गारुडन्नारसिंह्मकम् ॥ २४ ॥

कार्तवीर्यस्य कवचमन्यानि कवचानि च ।
रक्षाकराणि देवेशि पञ्चशान्तिमनंन्तरम् ॥ २५ ॥

महाशान्तिञ्च विप्रेन्द्रैर्जापयित्वा यथाविधि ।
तन्मान्त्रिताक्षतान् देवि राज्ञे दत्वा ततःपरम् ॥ २६॥

आशीर्भिर्वर्धयित्वा तं दुर्गालक्ष्म्यादिपूजने ।
नियोजयेन्नृपं सर्वमन्त्रार्थज्ञः पुरोहितः ॥ २७ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नवरात्रकर्तव्यसूक्तजपविधिस्वरूपकथनन्नाम
चतुश्शततमः पटलः ॥



|| अथ पञ्चशततमः पटलः ||

|| नवरात्रकर्तव्यदुर्गालक्ष्म्यादिपूजा ||

पार्वती—देवदेव महादेव वृषभध्वज शङ्कर ।
दुर्गालक्ष्म्यादिपूजाया विधानङ्कीदृशं विभो || १ ||

तस्याः किंवा फलं सर्वं वक्तुमर्हसि सांप्रतम् ।
श्रीशिवः—पुरोधसा नियुक्तोऽथ राजा सन्तुष्टमानसः || २ ||

सखड्गचर्मकवचस्सर्वाभरणभूषितः ।
विप्रयुग्मे पठत्यग्रे स्वस्तिसूक्तञ्च शाकुनम् || ३ ||

स्वेष्टदेवं हृदि ध्यायन् प्राप्य तत्पूर्वकल्पितम् ।
पुष्पमण्टपमत्यच्छचामरादर्शभास्वरम् || ४ ||

स्वासने सम्यगासीनः प्रणानायम्य वाग्यतः ।
सङ्कीर्त्य देशङ्कालञ्च पुरोहितमुखोद्गतैः || ५ ||

मन्त्रैः पौराणिकैर्देवि तान्त्रिकैर्वैदिकैश्च वा ।
स्वर्णकुम्भेषु चावाह्य सपिधानेषु पार्थिवः || ६ ||

राजतेष्वथ वा ताम्रेष्वभावे मृन्मयेषु वा ।
हरिद्रया तण्डुलैश्च पूरितेषु सुमध्यमे || ७ ||

सम्पूज्य दुर्गांल्लक्ष्मीञ्च वाग्देवीञ्च क्रमान्नृपः ।
रेवन्तमश्वाधिपतिम्पूजयेत्प्रयतश्शुचिः || ८ ||

दिव्यगन्धैर्दिव्यमाल्यैर्नैवेद्यैर्विविधैरपि ।
प्रदक्षिणैश्च नतिभिस्स्तुतिभिश्च महीपतिः ॥ ९ ॥

आयुधानि ततो राजा द्वात्रिंशत्परिपूजयेत् ।
आद्यश्चापोऽत्र कथितन्तद्भेदस्स्याच्चतुर्विधः ॥ १० ॥

कोदण्डन्त्रिणतञ्चैव गुलिकास्त्रं भिदोचितम् ।
द्वितीयन्तु शरः प्रोक्तस्तद्भेदः पञ्चधा भवेत् ॥ ११ ॥

अर्धचन्द्रः क्षुरप्रश्च करीराङ्कुरसन्निभः ।
करवीरदलाकारस्तथाऽधोमुखकण्टकः ॥ १२ ॥

असिस्तृतीयङ्कथितन्तद्भेदस्तु चतुर्विधः ।
खड्गस्साधनखड्गश्च पट्टसः करवालकः ॥ १३ ॥

चतुर्थं क्षुरिका प्रोक्तम्पञ्चमम्परशुर्भवेत् ।
षष्ठन्तु चक्रमाख्यातं सप्तमं शूलमुच्यते ॥ १४ ॥

अष्टमं शक्तिराख्यातन्नवमम्भिण्डिवालकम् ।
दशमम्परिघः प्रोक्तो वज्रमेकादशं स्मृतम् ॥ १५ ॥

द्वादशल्लँगुडम्प्रोक्तमयश्शङ्कुभिराचितम् ।
त्रयोदशङ्गदा प्रोक्तङ्खेटकन्तु चतुर्दशम् ॥ १६ ॥

भल्लः पञ्चदशम्प्रोक्तन्तद्भेदस्त्रिविधस्स्मृतः ।
भल्लो वराहभल्लश्च तोत्रश्च परिकीर्तितः ॥ १७ ॥

सप्तषोडशमाख्यातम्मुद्गरस्तदनन्तरम् ।
कुन्तमष्टादशम्प्रोक्तङ्कुठारन्तदनन्तरम् ॥ १८ ॥

मुसलं विंशमाख्यातं सृणिस्स्यादेकविंशकम् ।
द्वाविंशं यष्टिराख्यातन्तद्भेदस्त्रिविधो मतः ॥ १९ ॥

यष्टिश्च फणियष्टिश्च ह्यवलम्बनयष्टिका ।
त्रयोविंशन्नालिकास्त्रं स्वस्तिकन्तदनन्तरम् ॥ २० ॥

पञ्चविंशन्तु टङ्कं स्यात्षड्विंशं हलमीरितम् ।
सप्तविंशन्तु वेत्रं स्यादष्टाविंशङ्कुशोरिता ॥ २१ ॥

एकोनत्रिंशः प्रासस्स्यात्सादिहस्तोचितः प्रिये ।
त्रिंशन्तोमरमाख्यातमेकत्रिंशन्तु कम्पणम् ॥ २२ ॥

कूटमायुधतत्वज्ञैर्द्वात्रिंशं परिकीर्तितम् ।
द्वात्रिंशदायुधान्येवं सम्पूज्य कुसुमादिभिः ॥ २३ ॥

प्रभूतं विनिवेद्याथ नैवेद्यम्भक्ष्यसम्युतम् ।
वैदिकैस्तान्त्रिकैश्चैव पुराणोक्तैर्मनूत्तमैः ॥ २४ ॥

नत्वा पुष्पाञ्जलिन्दत्वा कोशागारन्ततः परम् ।
पूजयित्वा विधानेन राजचिह्नानि षोडश ॥ २५ ॥

पूजयेत् प्रयतो मन्त्रैस्तान्त्रिकैर्वाऽथ वैदिकैः ।
सिंहासनन्तु प्रथमं श्वेतच्छत्रमनन्तरम् ॥ २६ ॥

तत्परञ्चामरद्वन्द्वङ्कलाचीं कुञ्चिकामपि ।
कुण्डिकां व्यजनं रत्नकम्बलं शिबिकान्तथा ॥ २७ ॥

आन्दोलिकान्ध्वजञ्चैव पताकान्दुन्दुभिन्तथा ।
पल्याणञ्च खलीनञ्च कशाञ्चैव यथाक्रमम् ॥ २८ ॥

उपचारैष्षोडशाभिः पूजयित्वा पृथक्पृथक् ।
सम्प्रार्थ्य राजचिह्नानि दद्यात्पुष्पाञ्जलिन्ततः ॥ २९ ॥

एवङ्कृत्वा नरपतिर्दुर्गापूजादिकङ्गृहे ।
बहिर्निर्गत्य भद्रेभानश्वांश्चैव प्रपूजयेत् ॥ ३० ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नवरात्रकर्तव्यदुर्गालक्ष्म्यादिपूजास्वरूपकथनन्नाम
पञ्चशततमः पटलः ॥

---

॥ अथ षट्छततमः पटलः ॥

॥ गजादिपूजास्वरूपकथनम् ॥

श्रीशिवः—ततः परम्महीपालो जयघोषपुरस्सरम् ।
नागान्नगनिभानश्वान्विश्वविख्यात लक्षणान् ॥ १ ॥

उपचारैष्षोडशाभिस्सम्पूज्य तदनन्तरम् ।
बध्वा प्रतिसरन्तेषाङ्कण्ठेषु पृथिवीपतिः ॥ २ ॥

नत्वा प्रदक्षिणीकृत्य गजानश्वान्सुपूजितान् ।
ततः परं वारमुख्यालास्यमालोकयेन्नृपः ॥ ३ ॥

उद्बाहुभिरुदाराङ्गैर्मागधैर्मधुरस्वरैः ।
वन्द्यमानस्स्वसेवार्थमागतान् नृपपुङ्गवान् ॥ ४ ॥

सामन्तराजसंघाश्च कवींश्च विबुधानपि ।
गायकांश्च नटान्वीणावेणुवादनकोविदान् ॥ ५ ॥

शिरोवधूननात्कांश्चित्कांश्चिन्मन्दस्मितेन च ।
कटाक्षवीक्षणैः कांश्चिद्वेत्रिभिस्समुदाहृतैः ॥ ६ ॥

आलोकशब्दैरपरानङ्गीकुर्वन्ननन्तरम् ।
तूर्णमारुह्य भद्रेभमुदयाद्रिमिवोडुराट् ॥ ७ ॥

आस्थानमण्टपाभ्याशं सम्प्राप्याथ महीपतिः ।
भद्रेभादवरुह्याप्तकरमालम्ब्य पाणिना ॥ ८ ॥

आस्थानमण्टपे वेदिमारुह्याप्तजनैस्सह ।
प्राङ्मुखः प्रयतस्स्थित्वा चिन्तयन्निष्टदेवताम् ॥ ९ ॥

दिव्यस्त्रीवीज्यमानाभ्याञ्चामराभ्यां विराजितः ।
स्रवन्निर्झरपूगाभ्यामन्वितो नगराडिव ॥ १० ॥

अच्छमौक्तिकगुच्छेन श्वेतच्छत्रेण शोभितः ।
सेवार्थमागतेनेव सतारेण सुधांशुना ॥ ११ ॥

मुहूर्तत्रितयन्नानाविनोदालोकनोत्सुकः ।
सामन्तराजसङ्घैश्च समेतस्सज्जनैरपि ॥ १२ ॥

विद्वद्भिः कविभिश्चैव गायकैः परिहासकैः ।
नटैश्च नर्तकैश्चैव लेखकैः कालसूचकैः ॥ १३ ॥

गणकैर्गणिकाभिश्च मागधैर्मधुरस्वरैः ।
वीणावेणुप्रवीणाभिरेणाक्षीभिश्च संयुतः ॥ १४ ॥

स्वेष्टदेवं हृदि ध्यायन्पौनःपुन्येन पार्थिवः ।
पुरोधसा मन्त्रिभिश्च कृतकौतुकमङ्गळः ॥ १५ ॥

विनोददर्शनं यावत्तावत्तिष्ठेन्महीपतिः ।
एवन्दत्वा महीपालस्सर्वेषां स्वस्य दर्शनम् ॥ १६ ॥

आयुरारोग्यमैश्वर्यं सम्प्राप्य विजयी भवेत् ।
पुत्रपौत्रैः परिवृतस्सर्वान्कामानवाप्नुयात् ॥ १७ ॥

इत्येवन्ते समाख्यातङ्गजाश्वार्चनमाद्रिजे ।
राज्ञश्च स्थितिरास्थाने किमन्यच्छ्रोतुमिच्छसि ॥१८॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
गजाश्वपूजादिस्वरूपकथनन्नाम
षट्छततमः पटलः ॥



## ॥ अथ सप्तशततमः पटलः ॥

### ॥ नानाविनोदस्वरूपकथनम् ॥

पार्वती—मन्नाथ देशिक स्वामिन् शिव सर्वज्ञ शङ्कर ।
गजपूजादिकं सर्वं श्रुतन्तत्फलमेवच ॥ १ ॥

इदानीं श्रोतुमिच्छामि विनोदानामनुक्रमम् ।
विनोदाः केऽपि वा राज्ञा द्रष्टव्याः कथयस्व तान् ॥२

श्रीशिवः—भवत्या लोकरक्षार्थं यत्पृष्टञ्चारुहासिनि ।
तदहन्ते प्रवक्ष्यामि शृणु कल्याणि सादरम् ॥ ३ ॥

गभीरभेरीनिनदैर्मेघस्तनितनिस्वनैः ।
बृम्हितैर्गन्धनागानान्दिक्चक्रेतीव बन्धुरे ॥ ४ ॥

आस्थानमण्टपे रम्ये सुमेरुशिखरोपमे ।
सिह्मासने समारूढस्सर्वाभरणभूषितः ॥ ५ ॥

श्वेतच्छत्रेण महता चामराभ्यां विराजितः ।
नमत्सामन्तभूपालमौलिमाणिक्यकान्तिभिः ॥ ६ ॥

नीराजितपदद्वन्द्वश्चिन्तयन्निष्टदेवताम् ।
सैन्यावलोकनमुखान्विनोदान्त्रिबुधैस्सह ॥ ७ ॥

पश्यन्नरपतिस्सम्राड्राजा वा मण्डलेश्वरः ।
आदौ पश्येद्रथानीकं हेमरत्नपरिष्कृतम् ॥ ८ ॥

स्थितञ्चलत्केतुपटैश्श्लाघयन्तामिवोत्सवम् ।
ततः पश्येद्गजानीकङ्कल्पयन्ताङ्गिरिभ्रमम् ॥ ९ ॥

कुम्भैः पृथुतरैर्दन्तैः कदलीभिर्हिमाद्रिजे ।
ततोऽश्वनिवहं पश्येद्धर्मीभिर्वसुधां भृशम् ॥ १० ॥

जित्वोत्प्लुतीभिश्च दिवञ्जेतुमुत्कमिव स्थितम् ।
ततः पदातिनिवहम्पाथोधिमिव पार्थिवः ॥ ११ ॥

पश्येन्मुखरिताशेषभुवनन्तुमुलस्वनैः ।
ततः पश्येत्करान्दिव्यानधिकारिजनार्पितान् ॥ १२ ॥

नानाकरागतान्दिव्यरत्नौघानपि पार्थिवः ।
ततः पश्येद्वारमुख्यालास्यमास्योल्लसत्स्मितः ॥ १३ ॥

मनोज्ञनानाभिनयं वीणामुरजवादितम् ।
ततस्त्वत्युन्नतस्तम्भप्रोतशूलाग्रवर्तिनीम् ॥ १४ ॥

पश्येन्नानाविधाकारां विद्यामाश्चर्यकारिणीम् ।
ततः पश्येन्नाटकीयभूमिका विविधाकृतीः ॥ १५ ॥

याभिस्सर्वम्पुरावृत्तम्प्रत्यक्षमिव दृश्यते ।
ततो यवनिकावीतकायमानान्तरस्थिताः ॥ १६ ॥

पश्येत्पाञ्चालिकाः पूर्वकथाभिनयसूचिकाः ।
तत्परं विकटाटोपभाषाभूषणभूषितान् ॥ १७ ॥

नानावेषविशेषाढ्यान्कवीन्पश्येन्महीपतिः ।
ततो द्वीपान्तरजनप्रतिबिम्बैरधिष्ठिताम् ॥ १८ ॥

नावन्नरपतिः पश्येद्विकाराकारभीषणैः ।
ततस्तां विविधाश्चर्यकरीं विद्यां विलोकयेत् ॥ १९ ॥

वेधसस्सृष्टिवैचित्र्यं यया स्फुरति फल्गुवत् ।
ततः पश्येज्जलस्तम्भविद्यान्ताम्पृथिवीश्वरः ॥ २० ॥

यया दुर्योधनस्येदङ्कर्म संस्मर्यतेऽद्भुतम् ।
पश्येदग्निस्तम्भविद्यान्ततस्ताम्पृथिवीपतिः ॥ २१ ॥

यया स्याद्बाललग्नाग्नेर्लङ्कायाम्मारुतेस्स्मृतिः ।
मल्लयुद्धन्ततः पश्येदुल्लसन्मुष्टिताडनम् ॥ २२ ॥

युद्धम्मौष्टिकचाणूरं येनाल्पमनुमीयते ।
ततः क्रोधान्मिषन्मेषयुद्धं पश्येज्जनेश्वरः ॥ २३ ॥

शृङ्गसङ्घट्टनोद्भूतस्फुलिङ्गशतसङ्कुलम् ।
तत्परन्नृपतिः पश्येद्युद्धं वनलुलाययोः ॥ २४ ॥

आनम्य मस्तकौ क्रोधात्खुरैर्दारयतो महीम् ।
ततः खगान्मृगान्दारुचेलचर्मादिभिः कृतान् ॥ २५ ॥

पश्येन्नानाविधाकारान्नानाश्चर्यविधायिनः ।
तत्परन्तन्नृपः पश्येत्प्रतिरूपं हनूमतः ॥ २६ ॥

सिन्धूल्लँङ्घनजङ्घालस्स्मर्यते येन मारुतिः ।
भूतद्वन्द्वन्ततः पश्येद् दृष्टिदोषोपशान्तये ॥ २७ ॥

दंष्ट्राग्रद्वयसल्लँग्नैरान्त्रैरतिभयङ्करम् ।
ततो दीपरथान् पश्येद्वज्रिवज्रभियाऽऽगतान् ॥ २८ ॥

आत्मानं शरणम्प्राप्तुं सज्योतिष इवाचलान् ।
ततः पश्येदारुयन्त्रविशेषान् स्यन्दनाकृतीन् ॥ २९ ॥

दिवाभ्रान्तिङ्कल्पयतः केनचित्तेजसा निशि ।
उच्चावचान् बाणवृक्षांस्ततः पश्येज्जनेश्वरः ॥ ३० ॥

स्फुलिङ्गांश्चामराकारांस्तिर्यगुद्गिरतो बहून् ।
ततःप्रलयकालोद्यद्घनगर्जितभीषणम् ॥ ३१ ॥

शृणुयाद्बाणनिनदं विनोदावधि सूचकम् ।
एवं प्रतिदिनं राजा विनोदान्पञ्चविंशतिम् ॥ ३२ ॥

दृष्ट्वा मनसि सञ्चिन्त्य स्वेष्टदेवं हृदम्बुजे ।
समर्प्य तस्मै तत्सर्वन्ततपरपृथिवीश्वरः ॥ ३३ ॥

आस्थानवर्तिनां राज्ञाम्मन्त्रिणाञ्च पुरोधसाम् ।
विबुधानाङ्कवीनाञ्च गायकानां विनोदिनाम् ॥ ३४ ॥

नटानान्नर्तकानाञ्च वारमुख्याजनस्य च ।
गन्धकस्तूरिकादीनि दत्वा द्रव्याण्यनन्तरम् ॥ ३५ ॥

ताम्बूलानि यथायोग्यन्दत्वा भूमिपुरन्दरः।
सिह्मासनात्समुत्थाय करद्वन्द्वेन चारुणा ॥ ३६ ॥

अवलम्ब्य करद्वन्द्वमातयोरम्बरावृतम्।
आस्थानमण्टपाद्रम्यादवरुह्य शनैश्शनैः ॥ ३७ ॥

आरुह्य कलभङ्कर्णचामराद्युपशोभितम्।
पुरतो गीतकलया मिश्रिते वाद्यनिस्वने ॥ ३८ ॥

विजृम्भत्यतिगम्भीरं मन्दयानेन पार्वति।
प्रविश्यान्तःपुरं रम्यं स्त्रीरत्नशतसङ्कुलम् ॥ ३९ ॥

सर्वमास्थानवृत्तान्तं शुद्धान्तस्त्रीजनाय तत्।
शंसन्कनकपात्रस्थदीपैः कर्पूरनिर्मितैः ॥ ४० ॥

नीराजितस्सुखी तिष्ठेत्स्त्रीरत्नैस्सह पार्थिवः।
एवं प्रतिदिनं सायन्नवरात्रे महोत्सवम् ॥ ४१ ॥

कृत्वा नरपतिस्सम्राट् राजा वा मण्डलेश्वरः।
विजित्य समरे सर्वानरीनुरुबलानपि ॥ ४२ ॥

समुद्रमेखलां पृथ्वीं लीलया स्ववशन्नयेत्।
आयुरारोग्यसौभाग्यरूपकान्तिसमन्वितः ॥ ४३ ॥

पुत्रपौत्रैः परिवृतः पालयेदखिलाः प्रजाः।
एतदाचरितं पूर्वन्देवदानवराक्षसैः ॥ ४४ ॥

यक्षकिन्नरगन्धर्वैस्सिद्धविद्याधरोरगैः ।
सगरेण दिलीपेन ककुत्स्थेन ययातिना ॥ ४५ ॥

नहुषेण च रामेण कार्तवीर्येण गाधिना ।
एतैरन्यैश्च भूपालैः कृतमेतत्सुमध्यमे ॥ ४६ ॥

एवं महोत्सवं कृत्वा नवरात्रे महीपतिः ।
दशम्यामरिमुद्दिश्य शरमोचनमाचरेत् ॥ ४७ ॥

इत्येवं ते समाख्यातङ्कर्तव्यन्नवरात्रके ।
यत्तत्सर्वं पृथुश्रोणि किमन्यच्छ्रोतुमिच्छसि ॥ ४८ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
नानाविनोददर्शनन्नाम
सप्तशततमः पटलः ॥

---

॥ अथाष्टशततमः पटलः ॥

॥ विजयदशमीस्वरूपकथनम् ॥

पार्वती—देवदेव विरूपाक्ष सर्वज्ञ करुणानिधे ।
श्रुतं नानाविनोदानां स्वरूपन्त्वन्मुखान्मया ॥ १ ॥

इदानीं विजयाख्यायान्दशम्यां यन्महीभुजाम् ।
कर्तव्यं ब्रूहि तत्सर्वं त्वदन्यो नास्ति वेदिता ॥ २ ॥

श्रीशिवः—साधु साधु जगद्वन्द्ये यन्मान्त्वं परिपृच्छसि ।
तदहं ते प्रवक्ष्यामि शृणु कल्याणि सादरम् ॥ ३ ॥

आश्विने मासि या शुक्लदशमी पापनाशिनी ।
यस्माद्विजयदा राज्ञान्तस्मात्सा विजयाभिधा ॥ ४ ॥

योऽस्यामरिं समुद्दिश्य नृपतिश्शरमुत्सृजेत् ।
एतत्तिथिप्रभावेन स जय्यस्स्याद्भृशं रिपुः ॥ ५ ॥

अस्यां याऽऽरभ्यते विद्या सा भवेत्पारगा भृशम् ।
आरभ्यते यद्यदस्यान्तत्तत्साङ्गं भवेत्प्रिये ॥ ६ ॥

तस्मादस्यान्तिथौ सर्वकार्यारम्भः प्रशस्यते ।
विजयार्थी नरपतिरस्यां विजयसिद्धये ॥ ७ ॥

अरीन् प्रति चतुर्दिक्षु शरानुत्स्रष्टुमुद्यतः ।
स्वगृहस्योत्तरे भागे पूर्वभागेऽपि वाऽन्तरम् ॥ ८ ॥

क्रोशमात्रं परित्यज्य समभूमौ हिमाद्रिजे ।
कल्पयित्वा चतुश्शालं सुविस्तीर्णं समुन्नतम् ॥ ९ ॥

चतुर्द्वारसमायुक्तं परितः कुड्यसंवृतम् ।
विचित्रस्तम्भगम्भीरं मनोज्ञवलभीपुटम् ॥ १० ॥

मध्येऽन्तरालसहितं सुवितानं सुतोरणम् ।
चित्रध्वजपताकाढ्यञ्चामरादर्शभास्वरम् ॥ ११ ॥

विमानमिव सिद्धानां विलोचनमनोहरम् ।
मध्येऽन्तराले त्वेतस्य कल्पयेत् कूटमुत्तमम् ॥ १२ ॥

चतुस्तम्भसमायुक्तम्मनोज्ञम्मेरुशृङ्गवत् ।
तस्यान्तर्मध्यमे देशे रोपयित्वा शमीतरुम् ॥ १३ ॥

तस्य वृक्षस्य परितः कल्पयित्वा तु वेदिकाम् ।
अलङ्कृत्य शमीवृक्षं विविधैः पुष्पदामभिः ॥ १४ ॥

चतुश्शालस्य परितश्चतुर्दिक्षु हिमाद्रिजे ।
रथान्निर्माय चतुरो हेमरत्नध्वजादिभिः ॥ १५ ॥

अलङ्कृत्य द्विजवरैर्वाचयेत् स्वस्तिवाचनम् ।
एवं राजा कल्पयित्वा पूर्वमेवोत्सवात्प्रिये ॥ १६ ॥

दशम्यां प्रातरुत्थाय कृतशौचक्रियश्शुचिः ।
[ *पुण्यतीर्थजलैस्स्नात्वा यतवाक्कायमानसः ॥ १७ ॥

धृत्वोर्ध्वपुण्ड्रं सुश्रोणि कृतसन्ध्यादिसत्क्रियः ।
इष्टदेवं समाराध्य गुरुं संपूज्य सादरम् ॥ १८ ॥

तन्मुखेनाखिला विद्यास्समारभ्य यथाक्रमम् ।
ततो राजा स्वानुकूले मुहूर्ते प्रयतश्शुचिः ॥ १९ ॥]

* अयं पाठः प्राक्तनमातृकायां न दृश्यते ।

पुरोहितं पुरस्कृत्य तस्यानुज्ञामवाप्य च ।
जयदुर्गां वक्रतुण्डङ्गणेशं वटुकाभिधम् ॥ २० ॥

भैरवङ्कार्तवीर्यञ्च नृसिह्मङ्गरुडन्तथा ।
हनूमन्तञ्च कोदण्डपाणिं राममहाबलम् ॥ २१ ॥

ब्रह्मविष्णुमहेशेन्द्रान् तथात्मकुलदेवताम् ।
यथाशक्ति सुवर्णेन कृतान् सम्पूज्य यत्नतः ॥ २२ ॥

दत्वा द्विजेभ्यस्सन्तुष्टमानसो दक्षिणाऽन्वितान् ।
तत्परं पूजितञ्चापं शरान् खड्गञ्च निर्मलम् ॥ २३ ॥

संप्रार्थ्य मह्यन्देहीति प्रेरयित्वा पुरोहितम् ।
इष्टदेवं हृदि ध्यायन्वसेत्तन्निकटे नृपः ॥ २४ ॥

ततःपुरोहितस्तानि प्रार्थयेद्राजचोदितः ।
तीक्ष्णधार दुराधर्ष रणे शूरारिमर्दन ॥ २५ ॥

असे विशसनारातीन्भिन्धि पालय मत्प्रभुम् ।
सर्वायुधमहामात्र सर्वदैवारिसूदन ॥ २६ ॥

चाप शत्रून्रणे छिन्धि विजयन्देहि मत्प्रभोः ।
सायकेश नमस्तुभ्यं वैरिमर्मविभेदिने ॥ २७ ॥

सङ्ग्रामे सायुधाञ्छत्रून्भिन्धि पालय मत्प्रभुम् ।
इति संप्रार्थ्य तच्चापं शरान् खड्गं पुरोहितः ॥

राज्ञे दत्वा जयजयेत्याशिषा वर्धयेन्नृपम् ॥ २८ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
विजयदशमीस्वरूपकथनन्नाम
अष्टशततमः पटलः ॥



॥ अथ नवशततमः पटलः ॥

॥ शमीपूजास्वरूपनिरूपणम् ॥

श्रीशिवः—ततो राजा नमस्कृत्य तान्यस्त्राणि समाहितः ।
दत्वा पुरोधसो हस्ते त्वं विन्यस्य शमीतरौ ॥ १ ॥

पूजयस्वेति नृपतिः प्रेरयेत्स्वपुरोहितम् ।
ततःपुरोहितोऽस्त्राणि निधाय शिबिकान्तरे ॥ २ ।

महावाद्यरवैस्साकं शमीवृक्षं समाश्रितः ।
तस्मिन्निधाय तच्चापं शरान्खड्गं पुरोहितः ॥ ३ ॥

गन्धपुष्पैर्धूपदीपैः पूजयित्वाऽऽयुधत्रयम् ।
लक्ष्मीनारायणन्तत्र पूजयित्वोपचारकैः ॥ ४ ॥

पुनर्नृपस्य निकटङ्गत्वा तिष्ठेत्पुरोहितः ।
ततो राजा स्वेष्टदेवसन्निधौ प्रयतश्शुचिः ॥ ५ ॥

पठेच्छ्लोकात्मकं सम्यक्पुरोहितमुखोद्गतम् ।
अमृताहरणोद्युक्तचित्तस्य यदभूत् पुरा ॥ ६ ॥

मङ्गळं वैनतेयस्य तन्मे भवतु मङ्गळम् ।
अमृतोत्पादने दैत्यान् जिघांसोर्यदभूत् पुरा ॥ ७ ॥

मङ्गळं वज्रहस्तस्य तन्मे भवतु मङ्गळम् ।
त्रीन्विक्रमान्प्रक्रमतो यद्बलिध्वंसकर्मणि ॥ ८ ॥

पुराऽऽसीन्मङ्गळं विष्णोस्तन्मे भवतु मङ्गळम् ।
क्रूरत्रिपुरसंहारे महादेवस्य शूलिनः ॥ ९ ॥

यदासीन्मङ्गळं पूर्वन्तन्मे भवतु मङ्गळम् ।
सृष्टिस्थित्यन्तकर्तारो ब्रह्मविष्णुमहेश्वराः ॥ १० ॥

जययात्राप्रसक्तस्य जयन्ददतु मे भृशम् ।
सवाहनायुधास्सर्वे दिक्पाला दिग्गजान्विताः ॥ ११ ॥

जययात्राप्रसक्तस्य जयन्ददतु मे सदा ।
आदित्या वसवो रुद्रा विश्वेऽश्विमरुतस्तथा ॥ १२ ॥

जययात्राप्रसक्तस्य जयन्ददतु मे सदा ।
देवदानवगन्धर्वयक्षराक्षसकिन्नराः ॥ १३ ॥

जययात्राप्रसक्तस्य जयन्ददतु मे सदा ।
एवं श्लोकाष्टकं सम्यक्पठित्वा पृथिवीपतिः ॥ १४ ॥

याति यान्दिशमुद्दिश्य तद्दिगीशं हृदि स्मरन् ।
गृहान्निर्गत्य शिबिकामारुह्य कतिचित्पदम् ॥ १५ ॥

मार्गन्नीत्वा समारुह्य पुनरान्दोलिकां शुभाम् ।
नीत्वा मार्गं यथापूर्वन्ततः क्रीडारथन्नृपः ॥ १६ ॥

आरुह्य पूर्ववन्मार्गन्नीत्वाऽश्वं पुनरुत्तमम् ।
वन्दिभिर्नन्द्यमानस्सन्नुद्बाहुभिरुदारधीः ॥ १७ ॥

सशिरस्त्राणकवचस्सर्वाभरणभूषितः ।
ततो भद्रेभमारुह्य सुशीलं स्वकुलागतम् ॥ १८ ॥

युद्धोपस्करसन्नद्धमुदयाद्रिमिवांशुमान् ।
तूर्णं यायान्नरपतिर्मोक्तुं शरमरीन् प्रति ॥ १९ ॥

उत्प्लुत्योत्प्लुत्य धावत्सु खड्गखेटकपाणिषु ।
अग्रतो युद्धसन्नद्धयोधमुख्येषु सत्वरम् ॥ २० ॥

पार्श्वतः प्रासहस्तेषु पर्यटत्सु च सादिषु ।
परितो राजपुत्रेषु गच्छत्सु घनसिन्धुरैः ॥ २१ ॥

पुरतो वाद्यघोषेण दिक्चक्रेऽतीव बन्धुरे ।
पश्चाद्दुन्दुभिसन्दोहे ताड्यमानेऽल्पदन्तिषु ॥ २२ ॥

अश्वहेषारवैर्दन्तिबृंहितैरतिभीषणैः ।
पदातिसिंहनादैश्च कम्पिते भुवनत्रये ॥ २३ ॥

जैत्रस्ततो नृपः प्राप्य शमीवृक्षान्तिकं प्रिये ।
लक्ष्मीनारायणन्देवन्तस्मिन् संपूज्य सादरम् ॥ २४ ॥

गन्धैः पुष्पैर्दीपधूपैः नैवेद्यैर्विविधैरपि ।
प्रदक्षिणैश्च नतिभिस्स्तुतिभिश्चाद्रिकन्यके ॥ २५ ॥

प्रीणयित्वा शमीञ्चैव संपूज्यास्त्रत्रयन्तथा ।
मन्त्रैः पौराणिकैर्देवि तान्त्रिकैर्वाऽथ वैदिकैः ॥ २६ ॥

आदाय खड्गं सशरञ्चापन्तापकरं रिपोः ।
बहिर्निर्गत्य नृपतिस्स्थितः प्राग्दिशि सत्वरम् ॥ २७ ॥

तद्दिगीशं हृदि ध्यायंस्तत्रत्यानप्यरीन् प्रति ।
विसृजेच्छरमाकर्णमाकृष्य वसुधोपरि ॥ २८ ॥

एवमेवावशिष्टासु दिक्षु मुक्त्वा शरत्रयम् ।
पुनर्भद्रेभमारुह्य जयघोषपुरस्सरम् ॥ २९ ॥

पार्श्वद्वयस्थितं राजा चतुरङ्गबलम्महत् ।
पङ्क्तिशः प्रविभक्तन्तत्पश्यन्पाथोधिसन्निभम् ॥ ३० ॥

प्रविश्य नगरम्भूयस्समास्थाय महोन्नतम् ।
आस्थानमण्टपं रम्यं सर्वतस्समलङ्कृतम् ॥ ३१ ॥

मुहूर्तं तत्र तु स्थित्वा मान्त्रिणश्च पुरोहितम् ।
बहुमान्याम्बरैर्दिव्यैर्ग्रैवेयैः कुण्डलैरपि ॥ ३२ ॥

ततोऽन्तःपुरमाविश्य रमणीमणिभिस्सह ।
सल्लापान् सरसान् कुर्वन् वसेत्तत्र हिमाद्रिजे ॥ ३३ ॥

रात्रौ सह सभास्तारैर्नाट्यमालोक्य पार्थिवः ।
नटीनटान् दिव्यवस्त्रैर्भूषणैश्चापि तोषयेत् ॥ ३४ ॥

एवं यः कुरुते राजा दशम्यां विजयोत्सवम् ।
स सर्वैश्वर्यसम्पन्नो विजयी सर्वदा भवेत् ॥ ३५ ॥

अकालयात्राजनितदोषस्तत्र न जायते ।
इत्येवं विजयाख्यायान्दशम्यान्नृपपुङ्गवैः ॥
यत्कर्तव्यन्तदाख्यातं किमन्यच्छ्रोतुमिच्छसि ॥ ३६ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
विजयदशम्युत्सवस्वरूपकथनन्नाम
नवशततमः पटलः ॥

---

## ॥ अथ दशशततमः पटलः ॥

### ॥ कुमारीपूजाविधिस्वरूपकथनम् ॥

पार्वती—देवदेव विरूपाक्ष सर्वज्ञ करुणानिधे ।
कुमारीपूजनविधिं ब्रूहि विस्तरतोऽद्य मे ॥ १ ॥

श्रीशिवः—साधु साधु वरारोहे यन्मान्त्वं परिपृच्छसि ।
तत्तेऽहं सम्प्रवक्ष्यामि शृणु कल्याणि सादरम् ॥ २ ॥

मासि चाश्वयुजे शुक्लपक्षे प्रतिपदादिषु ।
राजा दिनेषु नवसु कुमारीः पूजयेत् क्रमात् ॥ ३ ॥

सर्वकामफलावाप्त्यै पुरराष्ट्रविवृद्धये ।
सर्वशत्रुविनाशाय सर्वत्र विजयाय च ॥ ४ ॥

एकवर्षान्त्यजेत्कन्यां पूजार्थं वरवर्णिनि ।
प्रीतिर्नास्ति यतस्तस्या गन्धपुष्पफलादिषु ॥ ५ ॥

द्विहायनीं समारभ्य कन्यामादशवत्सराम् ।
पूजयेत् प्रत्यहं राजा तत्तत्कार्यस्य सिद्धये ॥ ६ ॥

द्विहायनी कुमारी स्यात् त्रिमूर्तिस्स्यात् त्रिवत्सरा ।
चतुरब्दा तु कल्याणी पञ्चवर्षातु रोहिणी ॥ ७ ॥

षट्समा कालिका प्रोक्ता सप्तवर्षा तु चण्डिका ।
अष्टवर्षा शाम्भवी स्याद् दुर्गा स्यान्नववत्सरा ॥ ८ ॥

दशवर्षा भवेद्भद्रानामतः परिकीर्तिताः ।
अत ऊर्ध्वन्तु रजसः प्रादुर्भावाद्व्रतेऽत्र तु ॥ ९ ॥

आवाहने न योग्या स्यात्कन्या कमललोचने ।
दुःखदारिद्र्यनाशाय शत्रूणां नाशनाय च ॥ १० ॥

आयुष्यबलवृद्ध्यर्थङ्कुमारीं पूजयेन्नृपः ।
धनधान्यसमृद्ध्यर्थं पुत्रपौत्राभिवृद्धये ॥ ११ ॥

त्रिमूर्तिं पूजयेत्कन्यां राजा शत्रुक्षयाय च ।
अपमृत्युव्याधिपीडादुःखदारिद्र्यशान्तये ॥ १२ ॥

कल्याणीं पूजयेद्राजा नित्यङ्कल्याणदायिनीम् ।
आयुष्काम्यन्नकामी च श्रीकामी च विशेषतः ॥१३॥

यशःकामी धनार्थी च रोहिणीं पूजयेन्नृपः ।
विद्यार्थी च धनार्थी च राज्यार्थी च विशेषतः ॥ १४॥

शत्रूणाञ्च विनाशार्थङ्कालिकां पूजयेत्प्रिये ।
सङ्ग्रामे जयकामी च राज्यकामी विशेषतः ॥ १५ ॥

चण्डिकां पूजयेन्नित्यं चण्डविक्रमसिद्धये ।
दुःखदारिद्र्यनाशाय पितृणान्तृप्तयेऽपि च ॥ १६ ॥

महापापप्रणाशाय शाम्भवीम्पूजयेन्नृपः ।
प्रबलोत्कटशत्रूणान्दुर्गसाधनकर्मणि ॥ १७ ॥

दुर्गान्दुर्गतिनाशाय पूजयेत्पृथिवीपतिः ।
सौभाग्यधनधान्यादिवाञ्छितार्थफलाप्तये ॥ १८ ॥

भद्रां सम्पूजयेद्राजा दासीदासाभिवृद्धये ।
कन्यामेकाम्पूजयित्वा महदैश्वर्यमाप्नुयात् ॥ १९ ॥

कन्याद्वयम्पूजयित्वा भुक्तिं मुक्तिञ्च विन्दति ।
कन्यात्रयम्पूजयित्वा त्रिवर्गफलमाप्नुयात् ॥ २० ॥

चतस्रोऽभ्यर्च्य लभते पुरुषार्थचतुष्टयम् ।
पञ्चकन्याः पूजयित्वा नापमृत्युमवाप्नुयात् ॥ २१ ॥

कन्याषट्कम्पूजयित्वा लभेदैश्वर्यमुत्तमम् ।
सप्त सम्पूज्य लभते राजा मानोन्नतिं सदा ॥ २२ ॥

कन्याष्टकम्पूजयित्वा लभेदैश्वर्यमष्टधा ।
नवकन्याः पूजयित्वा राजा लोकेश्वरो भवेत् ॥ २३ ॥

हीनाधिकाङ्गीङ्कृष्णाङ्गीन्नार्चयेद् दुष्कुलोद्भवाम् ।
एकवंशसमुद्भूताङ्कन्यां सम्यक्प्रपूजयेत् ॥ २४ ॥

ब्राह्मणीं सर्वकार्यार्थी जयार्थी नृपसम्भवाम् ।
लाभार्थी वैश्यवंशोत्थां क्षेमार्थी शूद्रसम्भवाम् ॥ २५॥

दारुणे चान्त्यजाङ्कन्यां पूजयेद्विधिना नृपः ।
एकां संपूजयेत्कन्यामन्वहं वैकवृद्धितः ॥ २६ ॥

द्विगुणान्त्रिगुणं वाऽपि प्रत्यहन्नवकं तु वा ।
एकयाऽन्वहमाप्नोति कन्यया मङ्गळम्महत् ॥ २७ ॥

एकवृद्ध्याऽन्वहन्देवि कुलवृद्धिर्ल्लभेन्नृपः ।
द्विगुणेनान्वहं राजा द्विगुणां सम्पदल्लँभेत ॥ २८ ॥

त्रिगुणेन त्रिगुणितमैश्वर्यं प्राप्नुयान्नृपः ।
प्रत्यहन्नवकन्याभिस्साम्राज्यं समवाप्नुयात् ॥ २९ ॥

एवं सम्पूज्य भक्त्या तां कुमारीन्देवताऽत्मिकाम् ।
तत्तत्फलमवाप्नोति नात्र कार्या विचारणा ॥ ३० ॥

कञ्चुकैर्दिव्यवस्त्रैश्च गन्धपुष्पाक्षतादिभिः ।
सम्पूज्य भक्ष्यभोज्यैश्च भोजयेद् द्विजकन्यकाः ॥३१॥

मधुमांसादिभिः पुष्पगन्धधूपादिभिश्शिवे ।
पूजयित्वा कुमारीन्तां शूद्रवंशसमुद्भवाम् ॥ ३२ ॥

ऐश्वर्यन्धनलाभञ्च विजयञ्च लभेन्नरः ।
प्रतिमासन्नवम्यां वा राजा पर्वणि पर्वणि ॥ ३३ ॥

वृषोत्सर्गे कामराजदर्शने वा महीपतिः ।
कुमारीं पूजयेत्सम्यक्ब्राह्मणीं वाऽन्यजातिजाम् ॥३४॥

सर्वाभीष्टफलप्राप्त्यै सन्ताङ्गानाञ्च वृद्धये ।
अथ वा स्थानभङ्गे वा राजदण्डे समागते ॥ ३५ ॥

देशभङ्गे समायाते शत्रुभ्यो भय आगते ।
मन्त्रभेदे च सञ्जाते दुर्भिक्षे समुपस्थिते ॥ ३६ ॥

अनावृष्टिभये प्राप्ते जनमारेऽथ वाऽऽगते ।
पूर्वोक्तविधिना राजा कुमारीं पूजयेत्प्रिये ॥ ३७ ॥

उक्तेष्वेषु निमित्तेषु सम्पूज्य तु कुमारिकाम् ।
ब्रह्मविष्णुशिवादीनां दिक्पालानां तथैव च ॥ ३८ ॥

ग्रहाणां वसुरुद्राणां पितणाञ्च यदर्चनात् ।
फलमस्ति वरारोहे तत्फलं समवाप्नुयात् ॥ ३९ ॥

एवं कुमारीपूजाया विधानं सम्यगीरितम् ।
सङ्ग्रहेण मया देवि किमन्यच्छ्रोतुमिच्छसि ॥ ४० ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां नवरात्रिकर्तव्यकुमारीपूजास्वरूपकथनन्नाम दशशततमः पटलः ॥

---

॥ अथैकादशशततमः पटलः ॥

॥ कुमारीपूजामन्त्रादिनिरूपणम् ॥

पार्वती—शिव सर्वज्ञ भगवन्सर्वलोकहिते रत ।
कुमारीपूजने मन्त्रान्वद मन्त्रविदां वर ॥ १ ॥

श्रीशिवः—वक्ष्ये कुमारीपूजायाः मन्त्रांश्चैवासनानि च ।
तिलकानि च सुश्रोणि श्रृणुष्व सुसमाहिता ॥ २ ॥

ब्राह्मण्याश्चतुरश्रन्तु तिलकञ्चन्दनेन तु ।
क्षत्रियायास्त्वर्धचंद्रतिलकं कुङ्कुमेन वै ॥ ३ ॥

वैश्यायाश्चोर्ध्वतिलकञ्चन्दनागरुमिश्रितम् ।
शूद्राया वर्तुलङ्कार्यं कस्तूरीचन्दनेन तु ॥ ४ ॥

अन्त्यजाया वेदिमध्यं रक्तचन्दनसम्भवम् ।
अष्टास्रं षडश्रञ्च त्रिकोणञ्च चतुर्दलम् ॥ ५ ॥

चतुरश्रं स्वस्तिकाङ्कङ्क्रमशो मण्डलानि वै ।
कल्पयेदासनार्थं वै शालितण्डुलचूर्णतः ॥ ६ ॥

अभ्यङ्गस्नानमादौ तु कर्ता कृत्वा समाहितः ।
आवाहयेत्ततः कन्यां मन्त्रेणानेन पार्थिवः ॥ ७ ॥

मन्त्राक्षतमयीँल्लक्ष्मीं मातॄणां रूपधारिणीम् ।
नवदुर्गात्मिकां साक्षात् कन्यामावाहयाम्यहम् ॥ ८ ॥

जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरूपिणि ।
पूजाङ्गृहाण कौमारि जगन्मातर्नमोऽस्तु ते ॥ ९ ॥

त्रिपुरान्त्रिपुराधारान्त्रिवर्गज्ञानरूपिणीम् ।
त्रैलोक्यमोहिनीन्देवीन्त्रिमूर्तिं पूजयाम्यहम् ॥ १० ॥

कलात्मिकाङ्कलातीताङ्कारुण्यहृदयां शिवाम् ।
कल्याणजननीन्देवीङ्कल्याणीम्पूजयाम्यहम् ॥ ११ ॥

अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम् ।
शक्तिभेदात्मिकाँल्लक्ष्मीं रोहिणीं पूजयाम्यहम् ॥ १२॥

कालात्मिकाङ्कालरूपाङ्कालनाथस्वरूपिणीम् ।
कामदां वरदान्देवीङ्कालीं सम्यग्यजाम्यहम् ॥ १३ ॥

पूजयामि महादेवीञ्चण्डिकाञ्चण्डविक्रमाम् ।
सुन्दरीं स्वर्णवर्णाङ्गीं पूजयाम्यखिलार्थदाम् ॥ १४ ॥

सर्वशत्रुक्षयकरङ्गङ्गास्नानफलप्रदम् ।
आश्विने मासि कृष्णायाश्चतुर्दश्यान्नृपोत्तमः ॥ ३ ॥

ब्राह्मे मुहूर्त उत्थाय कृतशौचक्रियश्शुचिः ।
प्रक्षाल्य पादावाचम्य दन्तधावनपूर्वकम् ॥ ४ ॥

पुरोहितं पुरस्कृत्य सभार्यान् द्विजपुङ्गवान् ।
कांश्चिदाहूय सम्पूज्य तान् गन्धकुसुमादिभिः ॥ ५ ॥

दत्वा तद्द्विजवर्येभ्यस्ताम्बूलानि फलानि च ।
तैराशीरक्षतान् दत्तानादायाञ्जलिना नृपः ॥ ६ ॥

धृत्वा शिरसि चाभ्यङ्गनिमित्तन्तैलमुत्तमम् ।
दत्वा तद्द्विजमुख्येभ्यो नत्वा कृत्वा प्रदक्षिणम्॥७॥

पुनः प्रस्थाप्य तान् विप्रान् तत्परं पृथिवीपतिः ।
हेमपीठे समासीनः प्राङ्मुखः प्रयतश्शुचिः ॥ ८ ॥

नदत्सु पञ्चवाद्येषु बाह्यकक्ष्यान्तरे ततः ।
क्वणत्कङ्कणया वध्वा दरवल्गदुरोजया ॥ ९ ॥

अभ्यक्तः स्नापितो मल्लैः कैश्चित्कोष्णेन वारिणा ।
धृत्वा धौताम्बरन्दिव्यं स्वर्णतन्त्वञ्चिताञ्चलम् ॥ १० ॥

इत्येवं मङ्गळस्नानङ्कृत्वा प्रागुदयाद्रवेः ।
पश्चात्सूर्योदयादूर्ध्वपुण्ड्रन्धृत्वा महीपतिः ॥ ११ ॥

कर्म तत्कालकर्तव्यन्नित्यं निर्वर्त्य तत्परम् ।
स्वेष्टदेवं समभ्यर्च्य गन्धपुष्पैर्यथाविधि ॥ १२ ॥

अलक्ष्मीपरिहारार्थन्दत्वा दीपत्रयन्नृपः ।
सदक्षिणं द्विजातिभ्यस्तेन नीराजितः पुनः ॥ १३ ॥

सखड्गस्सशिरस्त्राणस्सर्वाभरणभूषितः ।
आस्थानकूटमासाद्य सर्वतस्समलङ्कृतम् ॥ १४ ॥

सपुत्रपौत्रस्सामात्यस्सभृत्यपरिचारकः ।
सिंहासने समासीनश्श्वेतच्छत्रेण चारुणा ॥ १५ ॥

वधूविधूयमानाभ्याञ्चामराभ्यां विराजितः ।
आस्थानवर्तिनां राज्ञां मन्त्रिणाञ्च पुरोधसाम् ॥ १६॥

सामन्तराजपुत्राणां विबुधानां विनोदिनाम् ।
कवीनाङ्गायकानाञ्च योगिनाञ्च नियोगिनाम् ॥ १७ ॥

नटानान्नर्तकानाञ्च गणकानां हिमाद्रिजे ।
तथैव गणिकानाञ्च तत्तदुद्योगवर्तिनाम् ॥ १८ ॥

शिरःकम्पेन केषाञ्चित्केषाञ्चिदवलोकनैः ।
मन्दस्मितेन केषाञ्चित्केषाञ्चिद्वाग्विलासतः ॥ १९ ॥

आलोकशब्दैः केषाञ्चिद्वेत्रपाणिसमीरितैः ।
सम्भावयन् यथायोग्यमात्मदर्शनमाद्रिजे ॥ २० ॥

मुहूर्तमात्रमासीनस्तस्मिन् सिंहासने नृपः ।
तत्परन्तैस्सभास्तारैरर्पितान्यम्बराणि वै ॥ २१॥

अङ्गीकृत्य पुनस्तेभ्यो दत्वा प्रत्यम्बराणि च ।
गन्धकुङ्कुमकस्तूरीताम्बूलानि यथोचितम् ॥ २२ ॥

दापयित्वासनात्तस्मादवरुह्याप्तयोः करौ ।
अवलम्ब्य प्रविश्यान्तःपुरं स्त्रीरत्नसङ्कुलम् ॥ २३ ॥

पुत्रपौत्रैः परिवृतो भुक्त्वाऽन्नममृतोपमम् ।
ततस्स्वीकृत्य ताम्बूलमवरोधजनैस्सह ॥ २४ ॥

नीत्वा सरससल्लापैस्तदहश्शेषमद्रिजे ।
ततस्सेवार्थमागत्य बाह्यकक्ष्यान्तरस्थितान् ॥ २५ ॥

सामन्तराजपुत्रादीन् समाहूयाथ तैस्सह ।
निशामुखे बाणविद्यां हृद्यामालोक्य तत्परम् ॥ २६ ॥

विशालां प्राप्य नृपतिर्नाट्यशालाञ्च तैस्सह ।
नाट्यनटीभिरारब्धनानाऽभिनयमञ्जुळम् ॥ २७ ॥

वीणामुरजनिस्साणमुख्यवाद्यनिनादितम् ।
दृष्ट्वा प्रस्थाप्य तान्सर्वान्प्रविश्यान्तःपुरन्नृपः ॥ २८॥

पुत्रपौत्रान्वितश्श्रीमान् भुक्त्वा मधुरपूर्वकम् ।
हंसतूलीविरचितशय्यायां शयितस्सुखम् ॥ २९ ॥

कुर्वन् सरससल्लाँपान् महिष्या सह पार्थिवः ।
तदर्पितानि ताम्बूलीदलान्याकुञ्चितानि वै ॥ ३० ॥

आददानस्तया साकमानन्दानुभवी भवेत् ।
इत्येवं देवि नरकचतुर्दश्यान्नृपोत्तमैः ॥
कर्तव्यङ्कर्म कथितं मया सङ्ग्रहतस्तव ॥ ३१ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां नरकचतुर्दशीकर्तव्यमहोत्सवस्वरूपकथनन्नाम द्वादशशततमः पटलः ॥

---

॥ अथ त्रयोदशशततमः पटलः ॥

॥ दीपावलीमहोत्सवनिरूपणम् ॥

श्रीशिवः—अथ तत्कार्तिके मासि दीपावल्यां महीभुजा ।
यत्कर्तव्यम्पृथुश्रोणि वक्ष्यामि तव सांप्रतम् ॥ १ ॥

कार्तिकस्य सिते पक्षे या तिथिः प्रतिपत्स्मृता ।
दीपावलीति विज्ञेया सा सर्वशुभदायिनी ॥ २ ॥

तस्यां तिथौ नृपः प्रातरुत्थाय शयनात् प्रिये ।
कृतशौचक्रियस्सम्यक्कृत्वा वै दन्तधावनम् ॥ ३ ॥

नित्यकर्म विनिर्वर्त्य तत्कालोचितमाद्रिजे ।
उपास्य भास्करं राजा ततस्सङ्गव आगते ॥ ४ ॥

पुरोहितं पुरस्कृत्य तदाशीर्भिर्विवर्धितः ।
स्वेष्टदेवं हृदि ध्यायन् पीठे रत्नमये शुभे ॥ ५ ॥

स्वासीनः प्राङ्मुखो देवि वाद्यघोषपुरस्सरम् ।
अभ्यक्तो गन्धतैलेन स्नापितः कोष्णवारिणा ॥ ६ ॥

धौताम्बरधरः फालदेशे धृत्वोर्ध्वपुण्ड्रकम् ।
निर्वर्त्य नित्यकर्माथ तत्कालोचितमद्रिजे ॥ ७ ॥

स्वेष्टदेवं समाराध्य गन्धपुष्पाक्षतादिभिः ।
अलक्ष्मीपरिहारार्थं लक्ष्म्याश्च स्थैर्यसिद्धये ॥ ८ ॥

लक्ष्मीनारायणप्रीत्यै दत्वा दीपत्रयन्नृपः ।
सदक्षिणं द्विजातिभ्यस्तेन नीराजितः पुनः ॥ ९ ॥

सपुत्रपौत्रस्सामात्यस्सर्वाभरणभूषितः ।
आस्थानशालामासाद्य राज्ञामास्थानवर्तिनाम् ॥ १० ॥

सर्वेषान्दर्शनन्दत्वा यथोचितमगात्मजे ।
गन्धकस्तूरिकादीनि दत्वा भूमिपुरन्दरः ॥ ११ ॥

मुहूर्तमात्रमासीनो भूपतिः कनकासने ।
तत्परं तान्नृपवरान् प्रस्थाप्यान्तःपुरं नृपः ॥ १२ ॥

प्रविश्य देवि साम्राज्यलक्ष्मीं सम्पूज्य सादरम् ।
कान्ताजनेन कर्पूरदीपैर्नीराजितोऽद्रिजे ॥ १३ ॥

मुक्त्वा मुहूर्तं सुप्त्वाऽथ सायङ्काले समागते ।
मल्लयुद्धादिकं दृष्ट्वा तत्परं तु निशामुखे ॥ १४ ॥

नगरे देवतागारेष्वालयेषु सभासु च ।
चत्वरेषु तु रम्येषु गोपुराट्टालकेषु च ॥ १५ ॥

हर्म्येषु चातिरम्येषु सौधेष्वत्युन्नतेषु च ।
विशालासु वरारोहे चन्द्रशालासु सर्वतः ॥ १६ ॥

भूपालास्थानकूटेषु कक्ष्यासु विविधासु च ।
नाट्यशालासु रम्यासु वीथीषु च विशेषतः ॥ १७ ॥

विन्यस्य विविधान् दीपान् किङ्करांस्तु कृतश्रमान् ।
गन्धताम्बूलवस्त्राद्यैर्बहुमान्य महीपतिः ॥ १८ ॥

तत्सर्वं दीपनिवहं श्रिये जातेति मन्त्रतः ।
महालक्ष्म्यै नरपतिस्समर्प्य तदनन्तरम् ॥ १९ ॥

सिंहासने स्वकीयानि भूषणानि निधाय च ।
जलपूर्णं स्वर्णकुम्भं पल्लवाद्यैरलङ्कृतम् ॥ २० ॥

तण्डुलोपरि विन्यस्य तत्रावाह्य बलिं प्रभुम् ।
वक्ष्यमाणप्रकारेण ध्यायेद्राजा महाबलिम् ॥ २१ ॥

ध्यायेद्बलिं महाकायं सर्वाभरणभूषितम् ।
तपसा हृतदेवेन्द्रवैभवं विष्णुवल्लभम् ॥ २२ ॥

खड्गचर्मधरं स्वर्णकान्तिकान्तासमन्वितम् ।
शुक्राद्यमात्यसहितन्दैत्यदानवसेवितम् ॥ २३ ॥

एवन्ध्यात्वार्चयेत्सम्यङ्नाममात्रेण तं बलिम् ।
ततः पुष्पाञ्जलिन्दद्याद्वक्ष्यमाणैस्तु नामभिः ॥ २४ ॥

बलीन्द्रः प्रह्लादपौत्रो विरोचनसुतस्ततः ।
महेन्द्रमर्दनो दानवाधीशो विष्णुभक्तकः ॥ २५ ॥

विभवप्रद इत्येतैर्दत्वा पुष्पाञ्जलिन्ततः ।
प्रार्थयेत्स्वाभिलषितं मन्त्रेणानेन पार्थिवः ॥ २६ ॥

यथा त्वं सर्वलोकानामधिपोऽस्यसुरेश्वर ।
तथा मे कुरु सौभाग्यं यावदाभूतसंप्लवम् ॥ २७ ॥

इति संप्रार्थ्य विप्रेभ्यो दद्याद्वित्तानुसारतः ।
सुवर्णं रजतं मुक्तामणींश्च विविधानपि ॥ २८ ॥

मित्रासबन्धुमुख्येभ्यो दद्याद्धर्षसमन्वितः ।
कर्पूरशकलैस्सार्धन्ताम्बूलानि विशेषतः ॥ २९ ॥

एवं कृत्वा नरपतिर्दीपावल्युत्सवं प्रिये ।
सर्वदानैश्च यत्पुण्यं यत्पुण्यमखिलाध्वरैः ॥ ३० ॥

तत्पुण्यं समवाप्नोति नात्र कार्या विचारणा ।
एवं ते देवि कथितो दीपावल्युत्सवो महान् ॥

आयुरारोग्यविजयसम्पत्सारस्वतप्रदः ॥ ३१ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
दीपावल्युत्सवस्वरूपकथनन्नाम
त्रयोदशाधिकशततमः पटलः ॥



॥ अथ चतुर्दशाधिकशततमः पटलः ॥

॥ विष्णुध्वजव्रतस्वरूपकथनम् ॥

श्रीशिवः—अथान्यत्कार्तिके मासि कर्तव्यं राजभिः प्रिये ।
ध्वजव्रतं प्रवक्ष्यामि शृणुष्व सुसमाहिता ॥ १ ॥

कुलोच्छ्रायकरं राज्ञामितरेषाञ्च पार्वति ।
सर्वपापक्षयकरन्तापत्रयनिवारकम् ॥ २ ॥

साम्राज्यदं विजयदं विशेषेण महीभुजाम् ।
मासेषु कार्तिको मासो धर्मपुञ्जस्सनातनः ॥ ३ ॥

सर्वदेवप्रियकरस्सर्वसम्पत्प्रदायकः ।
तत्रापि द्वादशी पुण्या शुक्लपक्षस्य भामिनि ॥ ४ ॥

प्रबोधिनीति विख्याता सर्वपापापहारिणी ।
यस्यां प्रबोधितो विष्णुर्वाञ्छितार्थान् प्रयच्छति ॥ ५ ॥

उपरागसहस्राणि व्यतीपातायुतानि च ।
प्रबोधिन्या वरारोहे कलान्नार्हन्ति षोडशीम् ॥ ६ ॥

व्रतानि सन्त्यनेकानि दानानि विविधानि च ।
विष्णुध्वजव्रतस्यास्य न समानि शतांशतः ॥ ७ ॥

तस्माद्विधानं वक्ष्यामि व्रतस्यास्य वरानने ।
कार्तिके शुक्लपक्षस्य दशम्यामेकभुङ्नृपः ॥ ८ ॥

एकादश्यां शुचिर्भूत्वा प्रातःकाले यथाविधि ।
नित्यकर्म विनिर्वर्त्य प्राणायामपुरस्सरम् ॥ ९ ॥

सङ्कीर्त्य देशङ्कालञ्च व्रतसङ्कल्पमाचरेत् ।
मम पापक्षयार्थाय सर्वकार्यार्थसिद्धये ॥ १० ॥

कुलोच्छ्रायाय पुष्ट्यर्थं सर्वशत्रुक्षयाय च ।
साम्राज्यस्थैर्यसिद्ध्यर्थं विष्णुप्रीत्यर्थमेव च ॥ ११ ॥

ध्वजव्रतङ्करिष्येऽहमिति सङ्कल्प्य देशिकम् ।
कुटुम्बिनं कुलीनञ्च वेदशास्त्रविशारदम् ॥ १२ ॥

सभार्यं सत्यवचसं वृत्वा वै द्वावथर्त्विजौ ।
ब्रह्माणञ्च वरित्वा ? तैर्वाचयित्वा यथाविधि ॥ १३ ॥

पुण्याहं तत्परं नान्दीश्राद्धं कृत्वा नृपस्स्वयम् ।
ध्वजं हस्तत्रयायामं तदर्धेन च विस्तृतम् ॥ १४ ॥

सुसूक्ष्मक्षौमवस्त्रेण रचितल्लँक्षणान्वितम् ।
मध्यभागे विलिखितशङ्खचक्रविराजितम् ॥ १५ ॥

षट्करयामसुस्निग्धवंशदण्डेन योजितम् ।
आरोप्य शिबिकामध्ये वाद्यघोषपुरस्सरम् ॥ १६ ॥

आचार्यमृत्विजौ चैव ब्रह्माणञ्च पुरोहितम् ।
आन्दोलिकासु चारोप्य स्वयं तत्पार्ष्णिभागतः ॥ १७॥

गजारूढस्ततो यायाज्जयघोषपुरस्सरम् ।
देवालयं समासाद्य भद्रेभादवरुह्य सः ॥ १८ ॥

आचार्यप्रमुखैर्विप्रैस्साकन्तद्विष्णुसन्निधिम् ।
सम्प्राप्याचार्यऋत्विग्भ्याम्ब्रह्मणा च समन्वितम् ॥१९

नत्वा प्रदक्षिणीकृत्य तं प्रत्येवं वदेन्नृपः ।
भो भो देशिक सर्वज्ञ मयेदानीञ्चिकीर्षिते ॥ २० ॥

ध्वजव्रतेऽस्मिन् श्रीविष्णुपूजा कार्या त्वयाऽनघ ।
ध्वजपूजा च होमश्च सावधानेन चेतसा ॥ २१ ॥

इत्युच्चार्य ध्वजं तस्य निकटे विनिधाय च ।
कृत्वोपवाससङ्कल्पं भूपतिर्विष्णुसन्निधौ ॥ २२ ॥

सहस्रनामभिर्देवमोङ्कारपुटितैश्शुभैः ।
सम्पूज्य च महीपालः कोमलैस्तुलसीदलैः ॥ २३ ॥

पुनर्भद्रेभमारुह्य प्रविशेन्निजमन्दिरम् ।
अथाचार्यस्त्विराचम्य प्राणायामपुरस्सरम् ॥ २४ ॥

सङ्कीर्त्य देशङ्कालञ्च पूजयेद्विष्णुमव्ययम् ।
पौरुषेण च सूक्तेन ह्युपचारैः पृथक्पृथक् ॥ २५ ॥

अथवा विष्णुगायत्र्या पूजयित्वोपचारकैः ।
ओङ्कारसम्पुटैर्दिव्यैर्विष्णुसाहस्रनामभिः ॥ २६ ॥

सम्पूज्य देवदेवेशङ्कोमलैस्तुलसीदलैः ।
देवदेवं तथा स्तुत्वा कृत्वा जागरणन्निशि ॥ २७ ॥

ततः प्रभाते बोधिन्यां स्नातश्शुक्लाम्बरश्शुचिः ।
नित्यकर्म विनिर्वर्त्य गत्वा तद्विष्णुमन्दिरम् ॥ २८ ॥

पूर्ववद्देवमभ्यर्च्य ध्वजञ्च समनन्तरम् ।
स्वगृह्योक्तविधानेन प्रतिष्ठाप्य हुताशनम् ॥ २९ ॥

देवस्य सन्निधौ पात्रासादनादि मुखान्तकम् ।
कृत्वा कर्म यथाशास्त्रं प्रधानं होममाचरेत् ॥ ३० ॥

परमान्नेनाष्टशतमाहुतीर्जुहुयात् प्रिये ।
तद्विष्णोरिति मन्त्रेण तद्गायत्र्याऽथ वा गुरुः ॥ ३१ ॥

ऋत्विग्भ्यां ब्रह्मणा साकं कृत्वैवं देशिकोत्तमः ।
होमशेषं समाप्याथ विष्णुमन्त्रान् जपन् वसेत् ॥ ३२

ततो राजा समागम्य देवदेवस्य सन्निधिम् ।
सम्पूज्य पूर्ववद्विष्णुं महानैवेद्यमद्रिजे ॥ ३३ ॥

समर्प्य ध्वजपूजाञ्च कृत्वाऽऽचार्यं सभार्यकम् ।
कुण्डलैरङ्गुलीयैश्च पट्टवस्त्रेण चारुणा ॥ ३४ ॥

सम्पूज्य शय्यां श्रीमूर्तिमष्टसौभाग्यसंयुताम् ।
सालङ्कारां सवत्सां गां दक्षिणाञ्च स्वशक्तितः ॥ ३५ ॥

दत्वा तत्पादमानेन होतृभ्यां ब्रह्मणे पृथक् ।
दत्वा सर्वं तैश्च साकं बहिर्निर्गत्य भूमिपः ॥ ३६ ॥

मङ्गलानि च सूक्तानि वैष्णवानि विशेषतः ।
पुरतो विप्रमुख्येषु पठत्सु वरवर्णिनि ॥ ३७ ॥

ध्वजं गृहीत्वा नृपतिर्वाद्यघोषपुरस्सरम् ।
प्रदक्षिणत्रयं कृत्वा देवि तद्विष्णुमन्दिरम् ॥ ३८ ॥

पुनः प्रविश्य तद्देवमन्दिरं गुरुणा सह ।
विमानशिखरे वामभागे दक्षेऽथ वा नृपः ॥ ३९ ॥

मन्त्रेण विष्णोर्नुकमित्यभिमन्त्र्य तु तद्ध्वजम् ।
बध्नीयाद्वक्ष्यमाणेन मन्त्रेण मदिरेक्षणे ॥ ४० ॥

देवदेव जगन्नाथ विमानशिखरे तव ।
बध्नामीमन्ध्वजन्दिव्यं वैनतेयेन चिह्नितम् ॥ ४१ ॥

पापक्षयार्थं सकलशत्रुसंक्षयसिद्धये ।
विजयार्थं विशेषेण साम्राज्यस्थैर्यसिद्धये ॥ ४२ ॥

इह दीर्घायुषेऽमुत्र मुक्तये मम माधव ।
एवमुक्त्वा विमानाग्रे बध्वा तद्ध्वजमद्रिजे ॥ ४३ ॥

आचार्यमृत्विजौ चैव ब्रह्माणं दक्षिणादिभिः ।
तोषयित्वा देवदेवं प्रणम्य मधुसूदनम् ॥ ४४ ॥

पुनस्स्वभवनं प्राप्य जयघोषपुरस्सरम् ।
पुरोहितञ्च सम्पूज्य पुत्रमित्रादिभिस्सह ॥ ४५ ॥

भुञ्जीयाद्भूपतिर्देवि विष्णुध्यानपरायणः ।
एवं व्रतं यः कुरुते वैष्णवध्वजनामकम् ॥ ४६ ॥

फलं सर्वस्वदानेन तुलापुरुषदानतः ।
यदस्ति तदवाप्नोति नात्र कार्या विचारणा ॥ ४७ ॥

हंसबर्हिणयुक्तेन विमानेन विराजता ।
देहान्ते पदमाप्नोति शाश्वतं वैष्णवं प्रिये ॥ ४८ ॥

इत्येवं ते समाख्यातं ध्वजव्रतविधिः प्रिये ।
सङ्ग्रहेण मया सम्यक्किमन्यच्छ्रोतुमिच्छसि ॥ ४९ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
विष्णुध्वजव्रतस्वरूपकथनन्नाम
चतुर्दशशततमः पटलः ॥

॥ अथ पञ्चदशशततमः पटलः ॥

॥ विष्णुध्वजव्रतमाहात्म्यम् ॥

पार्वती—शिव सर्वज्ञ भगवन् लोकरक्षणतत्पर ।
व्रतेषु सत्स्वनेकेषु नानाभीष्टार्थदायिषु ॥ १ ॥

ध्वजव्रतमिदंल्लोके प्रशस्तमभवत् कथम् ।
इति ब्रुवाणां तां दृष्ट्वा प्रहस्योवाच शङ्करः ॥ २ ॥

देवि सम्यक्त्वया प्रश्नः कृतो लोकहितेच्छया ।
अत्रेतिहासं वक्ष्यामि शृणुष्व सुसमाहिता ॥ ३ ॥

मेरुमन्दरयोर्मध्ये सौवीर इति कश्चन ।
व्याधोऽस्त्यत्यन्तपापिष्ठो देवब्राह्मणहिंसकः ॥ ४ ॥

स कदाचित् पर्यटता दिलीपेन यदृच्छया ।
सक्तो भाग्योदयाद्देवि ब्राह्मणानाङ्गवामपि ॥ ५ ॥

तं बद्ध्वा दारुणैः पाशैरयोध्यां प्राप्य पार्थिवः ।
भटानाहूय तं व्याधङ्कृत्वा तद्वशगं प्रिये ॥ ६ ॥

श्वः प्रभाते प्रबोधिन्यां प्रापयध्वं मदन्तिकम् ।
इत्यादिश्य भटान्राजा प्रविश्यान्तःपुरं ततः ॥ ७ ॥

प्रबोधिन्युत्सवपरो बभूव वरवर्णिनि ।
तद्रात्रावेव स व्याधो निद्राणेषु भटेष्वथ ॥ ८ ॥

पाशांश्छित्वा क्षणेनैव सालमारुह्य लीलया ।
बहिर्विमाने कस्मिंश्चिद्वैष्णवे पतितो भृशम् ॥ ९ ॥

उपवासकृशो दीनो हरितश्चावलोकयन् ।
दूरस्थं स्वजनन्दृष्ट्वा संज्ञापयितुमद्रिजे ॥ १० ॥

स्वस्य चेलाञ्चलन्दूरमूर्ध्वमुत्क्षिप्तवान्सकृत् ।
तच्छायैव विमानाग्रे ध्वजच्छायाऽभवत्प्रिये ॥ ११ ॥

ततो भटाः प्रबुद्धास्ते तमदृष्ट्वा भयाकुलाः ।
मार्गमाणास्तत्र तत्र व्याधन्दृष्ट्वा विमानगम् ॥ १२ ॥

आकृष्य पाशैस्तं बद्ध्वा प्राप्य राजान्तिकं भटाः ।
राज्ञे न्यवेदयन् सर्वं तद्व्याधस्य विचेष्टितम् ॥ १३ ॥

तच्छ्रुत्वा नृपतिः क्रुद्धो दुरात्मा हन्यतामयम् ।
इत्यादिश्य ततो दूतान् शुद्धान्तं प्रविवेश सः ॥ १४ ॥

अथ राजाज्ञया व्याधञ्जघ्नुरत्यन्तदारुणम् ।
ततस्तद्देहमुत्सृज्य दिव्यदेहधरः क्षणात् ॥ १५ ॥

दिव्यमाल्याम्बरधरो दिव्याभरणभूषितः ।
जाम्बूनदमयं दिव्यं विमानं विष्णुकिङ्करैः ॥ १६ ॥

समानीतं समारुह्य वैष्णवल्लोकमव्ययम् ।
प्राप्तवान् विष्णुभवनं विमानैस्सार्धमद्रिजे ॥ १७ ॥

स्वचेलाञ्चलमुत्क्षिप्य प्रबोधिन्यामनिच्छया ।
तस्मात् प्रशस्तमभवद्ध्वजव्रतमिदं प्रिये ॥ १८

अथान्यदपि वक्ष्येऽहमितिहासं तवाद्रिजे ।
शम्बरो नाम दुर्धर्षो मांसादः क्रूरचेष्टितः ॥ १९ ।

पक्षिणाङ्ग्रहणार्थाय विष्णोरायतनं शुभम् ।
आरुह्य च प्रसार्याथ स्वकीयं वस्त्रमादरात् ॥ २० ।

तान् गृहीत्वा तु शबरः पुनराकर्षयत् पटम् ।
तद्वस्त्रलेशं तल्लग्नं मुहूर्तत्रितयं दिवि ॥ २१ ॥

विमाने वायुना खेलत्तत्पुण्यस्य प्रभावतः ।
तत्क्षणेनैव देवेशि स मुक्तस्सर्वपातकैः ॥ २२ ॥

शबरस्स्वकुलैस्साकं स्वर्गं यात इति श्रुतिः ।
अथान्यदपि वक्ष्यामि इतिहासं पुरातनम् ॥ २३ ॥

शीला सुशीला सुद्युम्ना सुनन्दा नन्दिनी तथा ।
पञ्चकन्यास्तु वस्त्राणि वियत्पथि यदृच्छया ॥ २४ ॥

विमानोपरि धून्वन्त्यस्सरजस्कानि पार्वति ।
ता ययुश्श्रेष्ठसिद्धिं वै विष्णुलोकञ्च शाश्वतम् ॥ २५ ॥

इति विष्णुध्वजाख्यस्य व्रतस्य वरवर्णिनि ।
माहात्म्यं सङ्ग्रहेणैव कथितं ते मयाऽधुना ॥ २६.॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
विष्णुध्वजव्रतमाहात्म्यस्वरूपकथनन्नाम
पञ्चदशशततमः पटलः ॥

---

## ॥ अथ षोडशशततमः पटलः ॥

### ॥ धनुर्मासकर्तव्यदेवताराधनस्वरूपकथनम् ॥

शिवः— अथ वक्ष्ये मार्गशीर्षे मासि पूषणि च्चापगे ।
यत्कर्तव्यं नृपैः कर्म तच्छृणुष्व वरानने ॥ १ ॥

मार्गशीर्षसमो मासो नास्ति पुण्यतमो भुवि ।
उपरागसहस्रेण सम इत्युच्यते बुधैः ॥ २ ॥

तस्मिन्नुषस्यनुदिनं यत्किञ्चित्क्रियते यदि ।
देवार्चनं वरारोहे तदनन्ताय कल्पते ॥ ३ ॥

कोदण्डस्थे सवितरि प्रत्यहं पूजनाद्धरेः ।
सहस्रवर्षपूजायाः फलं प्राप्नोति मानवः ॥ ४ ॥

यस्तु चापगते सूर्ये विष्णुं सम्पूजयेन्नरः ।
कुलकोटिसमायुक्तस्स गच्छेद्वैष्णवं पदम् ॥ ५ ॥

पत्रं पुष्पं फलं वाऽपि योऽर्पयेद्विष्णवेऽन्वहम् ।
चापस्थिते सवितारि स धन्यो वरवर्णिनि ॥ ६ ॥

सुवर्णरूप्यताम्रादिनिर्मितायां शुभाकृतौ ।
प्रतिमायां हरेर्देवि सालग्रामेऽथ वा नरः ॥ ७ ॥

सम्पूज्य लक्ष्म्या संश्लिष्टं नारायणमनामयम् ।
मास्यस्मिन्नन्वहं सम्यग्याति विष्णोः परं पदम् ॥ ८ ॥

अथवा मां मदङ्कस्थां त्वां च सम्पूज्य पार्वति ।
नरः प्राप्नोति कैलासं विलासावासमन्दिरम् ॥ ९ ॥

पुरा स्थिते धनुष्यर्के नाभागनहुषादयः ।
सम्पूज्योषसि गोविन्दं प्राप्नुयुः परमाङ्गतिम् ॥ १० ॥

तस्मात्सर्वप्रयत्नेन सार्वभौमो महीपतिः ।
देशाध्यक्षः पुराध्यक्षो द्वित्रिग्रामाधिपोऽपि वा ॥ ११ ॥

ब्राह्मणः क्षत्रियो वैश्यः पादजस्सङ्करोऽपि वा ।
योषिद्वाऽस्मिन् धनुर्मासे कुर्याद्देवार्चनं प्रिये ॥ १२ ॥

यानि कान्यतिघोराणि पापानि बहुजन्मसु ।
कृतानि मनुजैस्तानि नश्येयुर्हरिपूजनात् ॥ १३ ॥

चापमासे वरारोहे नात्र कार्या विचारणा ।
तस्मान्महीपतिस्स्वस्य पापसङ्घनिवृत्तये ॥ १४ ॥

सर्वशत्रुक्षयार्थाय क्षेमाय विजयाय च ।
साम्राज्यलक्ष्म्यास्स्थैर्याय विष्णुसायुज्यसिद्धये ॥ १५ ॥

उषसि प्रत्यहं स्नात्वा धौताम्बरधरश्शुचिः ।
धृत्वोर्ध्वपुण्ड्रं सङ्कीर्त्य देशङ्कालञ्च तत्परम् ॥ १६ ॥

ध्यात्वा देवं तथाऽऽवाह्य पूजयित्वोपचारकैः ।
मुद्गान्नं विनिवेद्याथ नानाभक्ष्यसमन्वितम् ॥ १७ ॥

नानाशाकविशेषाढ्यं फलैश्च बहुभिर्युतम् ।
दध्यन्नान्तिन्त्रिणीमिश्रमोदनञ्चित्रमोदनम् ॥ १८ ॥

समर्प्य वक्ष्यमाणेन श्लोकेन प्रार्थयेद्धरिम् ।
नारायण जगन्नाथ नलिनायतलोचन ॥ १९ ॥

मयोषसि धनुर्मासे कृतया पूजयाऽनया ।
आयुरारोग्यममितमैश्वर्यमणिमादिकम् ॥ २० ॥

सौभाग्यं सन्ततिं देव मम दत्वेह जन्मनि ।
पश्चाद्देहात्यये देव दद मे तावकं पदम् ॥ २१ ॥

इति सम्प्रार्थ्य तत्पूजाफलं सर्वं समर्पयेत् ।
तस्मिन् मासे व्यतीपाते कांस्यपात्रं सुविस्तृतम् ॥२२॥

सस्वर्णपायसं देवि नीलवस्त्रेण वेष्टितम् ।
प्रदद्यात्तद्व्यतीपातपुरुषप्रीणनाय च ॥ २३ ॥

सदक्षिणं द्विजाग्र्याय सन्तुष्टेनान्तरात्मना ।
* [ सहस्रं भोजयेद्विप्रान् मृष्टान्नेन सुमध्यमे ] ॥ २४ ॥

एवं कृत्वा नरपतिर्धनुर्मास्यर्चनं हरेः ।
मम वा पृथुलश्रोणि निवार्य भुवि लीलया ॥ २५ ॥

पापानि बहुरूपाणि जित्वाऽरीन् समराङ्गणे ।
विजयं प्राप्य साम्राज्यं प्राप्यं प्राप्याखिलाः प्रजाः ॥२६

पालयेत् सुचिरं कालं नात्र कार्या विचारणा ।
एवं चापाह्वये मासि कर्तव्यं राजवल्लभैः ॥
कथितं कर्म कल्याणि सदा कल्याणदायकम् ॥ २७॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
धनुर्मासकर्तव्यदेवताराधनस्वरूपकथनन्नाम
षोडशशततमः पटलः ॥

---

॥ अथ सप्तदशशततमः पटलः ॥

॥ पौषमासकर्तव्यकर्मकलापनिरूपणम् ॥

अथ वक्ष्ये पौषमासे सङ्क्रान्तौ मकराह्वये ।
कर्तव्यं कर्म राजेन्द्रैः शृणु देवि समाहिता ॥ १ ॥

---

* अय पाठः प्राक्तनमातृकायां न विद्यते ।

सङ्क्रान्तेः पूर्वदिवसे सुशुभे भोगिनामके ।
प्रातरुत्थाय नृपतिर्धृत्वा धौताम्बरादिकम् ॥ २ ॥

तत्कालस्योचितङ्कर्म नित्यं निर्वर्त्य तत्परम् ।
पुरोहितं पुरस्कृत्य सङ्गवे समुपस्थिते ॥ ३ ॥

दाक्षिणायनसञ्जातसर्वपीडाऽपनुत्तये ।
नदत्सु पञ्चवाद्येषु रत्नपीठस्थितो नृपः ॥ ४ ॥

अभ्यक्तस्नापितो दिव्यवस्त्रगन्धानुलेपनैः ।
पूजयित्वा स्वेष्टदेवं कृत्वा दानञ्च नैत्यकम् ॥ ५ ॥

विप्रैस्सुवासिनीभिश्च दत्तानादाय चाक्षतान् ।
आरोप्य शिरसि स्वच्छं सिह्मासनमनुत्तमम् ॥ ६ ॥

समारूढस्समाहूय मन्त्रिणश्च पुरोधसः ।
विबुधान् विविधान् देवि कवीनपि च गायकान् ॥ ७ ॥

नियोगिनो योगिनश्च नटानपि च नर्तकान् ।
गणकान् गणिकांश्चैव तथाऽन्यानपि सेवकान् ॥ ८ ॥

तेषां यथोचितं दत्वा स्वदर्शनमहोत्सवम् ।
मुहूर्तमात्रं स्थित्वैवं क्ष्माभृदास्थानमण्टपे ॥ ९ ॥

ततस्तैस्तु सभास्तारैस्साकमत्यन्तविस्तृते ।
चतुश्शालेऽतिगम्भीरे परितः पद्मलोचने ॥ १० ॥

कल्पिता नूतनैर्वस्तुविशेषैरुपदाः प्रिये ।
आलोक्य विबुधादींस्तान् ताम्बूलादिभिरादरात् ॥११॥

बहुमान्य यथायोग्यं प्रस्थाप्यास्थानमण्टपात् ।
तान् सर्वान् प्राप्य शुद्धान्तं स्त्रीरत्नशतसङ्कुलम् ॥१२

भुक्त्वा मधुरपूर्वन्तु पुत्रपौत्रसमन्वितः ।
सायन्तनेऽतिगम्भीरन्दृष्ट्वा युद्धं भयङ्करम् ॥१३॥

मल्लानां तत्परं बाणविद्यां हृद्यां विलोक्य च ।
नाट्यशालां ततो गत्वा दृष्ट्वा नाट्यं मनोहरम् ॥ १४

ततो बालैः पुरन्ध्रीभ्यः विप्रेभ्यश्च नमस्क्रियाः ।
कारयित्वा दापयित्वाऽपूपांस्तेभ्यश्च तैर्नृपः ॥ १५ ॥

पुनः प्रविश्य शुद्धान्तं रमणीमणिभिस्सह ।
सल्लाँपान् सरसान् कुर्वन् नीत्वा तां रात्रिमद्रिजे ॥१६॥

प्रातः परेद्यवि स्नात्वा सङ्क्रान्तौ मकराभिधे ।
धृतधौताम्बरश्शुद्धः फाले धृत्वोर्ध्वपुण्ड्रकम् ॥ १७ ॥

स्वेष्टदेवं समाराध्य लक्ष्मीं साम्राज्यदायिनीम् ।
सम्प्रार्थ्य देशङ्कालञ्च कूश्माण्डानि बहूनि च ॥१८॥

सतिलाज्याक्तपिष्टानि पृथूनि स्वस्य शक्तितः ।
दत्वा दक्षिणया सार्धन्द्विजेभ्यश्श्रद्धयान्वितः ॥ १९ ॥

गोभूतिलादिदानानि कृत्वाऽन्यानि स्वशक्तितः ।
राजा तत्कालयोग्यानि तत्परं सातपस्थले ॥ २० ॥

अङ्कणे विपुले हेमपीठं विन्यस्य शोभनम् ।
तस्योपरि प्रतिष्ठाप्य सौवर्णं कलशं शुभम ॥ २१ ॥

पूरितं पुण्यतीर्थेन पञ्चपल्लवशोभितम् ।
दिव्यपीताम्बरावीतं दिव्यचन्दनचर्चितम् ॥ २२ ॥

दिव्यमाल्ययुतं कृत्वा तस्मिन्नावाह्य भास्करम् ।
सम्पूज्य गन्धपुष्पाद्यैस्तत्पुरोभुवि तत्परम् ॥ २३ ॥

स्थालीष्वनलतप्तासु क्षीरवृद्धिं यथाविधि ।
कारयित्वा पुरन्ध्रीभिस्तासु स्थालीषु तण्डुलान् ॥ २४ ॥

प्रक्षिप्य परमान्नं तु कारयित्वा सशर्करम् ।
तास्थालीस्तस्य देवस्य स्थापयित्वा पुरोभुवि ॥ २५ ॥

नवानि कन्दमूलानि फलानि विविधानि च ।
पूगानां नारिकेलानां पालीर्विन्यस्य चाङ्कुरान् ॥ २६ ॥

नानाविधान् सुपात्रस्थान् विन्यस्य परितः प्रिये ।
सूर्याय कृत्वा नैवेद्यं नत्वा कृत्वा प्रदक्षिणम् ॥ २७ ॥

स्तुत्वा स्तुतिभिरग्र्याभिस्तत्समर्पितमद्रिजे ।
आदाय किञ्चित्तद्वस्तुजातं नत्वा पुनश्च तम् ॥ २८ ॥

पुरतो गीतकलया मिश्रिते वाद्यनिस्वने ।
विजृम्भत्यतिगम्भीरं मन्दयानेन पार्वति ॥ २९ ॥

अन्तःपुरं प्रविश्याथ सुखी तिष्ठेन्महीपतिः ।
इत्येवं ते समाख्यातं मासे पौषाह्वये नृपैः ॥
कर्तव्यङ्कर्म सुश्रोणि कांक्षितार्थफलप्रदम् ॥ ३० ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
पौषमासि कर्तव्यकर्मकलापस्वरूपकथनन्नाम
सप्तदशशततमः पटलः ॥

॥ अथाष्टादशशततमः पटलः ॥

॥ शिवरात्रीव्रतस्वरूपनिरूपणम् ॥

श्रीशिवः—अथ ते मासि माघाख्ये कर्तव्यं नृपपुङ्गवैः ।
शिवरात्रिव्रतं वक्ष्ये मत्सायुज्यप्रदं शिवे ॥ १ ॥

आर्द्राणामपि शुष्काणामल्पानां महतामपि ।
प्रायश्चित्तैरभेद्यानामंहसां क्षयकारणम् ॥ २ ॥

माघमासे कृष्णपक्षे वर्तते या चतुर्दशी ।
शिवरात्रिरिति ख्याता ममातिप्रियकारिणी ॥ ३ ॥

तस्यां तिथौ मनुष्याणामुपवासोऽतिदुर्लभः ।
ततोऽपि दुर्लभं मन्ये रात्रौ जागरणं प्रिये ॥ ४ ॥

तस्माच्च दुर्लभं देवि मल्लिङ्गस्य च दर्शनम्।
अनेकजन्मसंसिद्धपुण्यराशिविपाकतः ॥ ५ ॥

लभ्यते कोमलैर्बिल्वदलैर्मत्पूजनं नरैः।
यानि कानि च पुण्यानि कथितानि युगे युगे ॥ ६ ॥

माघकृष्णचतुर्दश्यां तानि तिष्ठन्ति कृत्स्नशः।
एतामेव प्रशंसन्ति साधुकृष्णचतुर्दशीम् ॥ ७ ॥

ब्रह्मादयस्सुरास्सर्वे वसिष्ठाद्या मुनीश्वराः।
तस्मादावश्यकतया साम्राज्यस्थैर्यसिद्धये ॥ ८ ॥

कर्तव्यं व्रतमेतत्तु पार्थिवैरितरैरपि।
विधानमस्य वक्ष्यामि व्रतस्य वरवर्णिनि ॥ ९ ॥

ब्राह्मे मुहूर्त उत्थाय कृतस्नानक्रियो नृपः।
प्रातःकालोचितं नित्यकर्म निर्वर्त्य पार्वति ॥ १० ॥

पुरोहितं पुरस्कृत्य तस्यानुज्ञामवाप्य च।
देशङ्कालञ्च सङ्कीर्त्य व्रतसङ्कल्पमाचरेत् ॥ ११ ॥

अद्योपोष्य शिव स्वामिन् रात्रौ यामचतुष्टये।
त्वां सम्पूज्यार्घ्यदानञ्च कृत्वा श्रुत्वा भवत्कथाः॥१२॥

परेद्युः प्रातरेव त्वां पुनस्सम्पूज्य तावकम्।
लिङ्गं दत्वा द्विजेन्द्राय सदक्षिणमतःपरम् ॥ १३ ॥

पारणां व्रतपूर्त्यर्थं करिष्येऽहं वृषध्वज ।
इति सङ्कल्प्य पतितपाषण्डाभाषणं विना ॥ १४ ॥

आसाद्यं मत्कथां शृण्वन् मां ध्यायन् मत्परायणः ॥
ततस्सायाह्निकं कृत्वा विनिवर्त्य यथाविधि ॥ १५ ॥

गृहस्येशानदिग्भागे निर्मिते पुष्पमण्टपे ।
मध्यमे सर्वतोभद्रं रङ्गवल्ल्या विलिख्य तु ॥ १६ ॥

तस्मिन् प्रसार्य सुश्वेतं क्षौमवस्त्रं मनोहरम् ।
मल्लिङ्गं तत्र संस्थाप्य सौवर्णं राजतं तु वा ॥ १७ ॥

तथा मरकतोत्थं वा स्फाटिकं वाऽतिनिर्मलम् ।
अथवा मृन्मयं शुद्धं पञ्चवक्त्रपरीक्षितम् ॥ १८ ॥

तस्मिन्नावाह्य मां देवि त्वां मदङ्कस्थितामपि ।
ध्यात्वाऽऽवाह्यासनाद्यैस्तु पूजयित्वोपचारकैः ॥ १९ ॥

कृत्वाऽर्घ्यदानं सुश्रोणि दत्वा पुष्पाञ्जलीनपि ।
सम्प्रार्थ्य देवदेवेशं फलं तस्मै समर्पयेत् ॥ २० ॥

एवं कल्पोक्तविधिना कृत्वा यामचतुष्टये ।
मत्पूजां मत्कथां मध्येमध्ये शृण्वन् मनोहराम् ॥ २१ ॥

कृत्वा जागरणं सम्यक्प्रभाते मां पुनः प्रिये ।
सम्पूज्य दत्वा मल्लिङ्गं दिव्यं विप्राय सादरम् ॥ २२ ॥

सदक्षिणं ततो दीनानन्धान् सन्तर्प्य पार्थिवः ।
पूजयित्वा द्विजान् कांश्चिद्भोजयित्वा ततःपरम् ॥२३॥

पुत्रपौत्रकलत्राद्यैः व्रतपूर्त्यर्थमद्रिजे ।
साकङ्कृत्वा पारणान्तु सर्वम्भगवतेऽर्पयेत् ॥ २४ ॥

एवं कृत्वा विधानेन शिरात्रिव्रतं नृपः ।
महापातकयुक्तो वा युक्तो वा चातिपातकैः ॥ २५ ॥

देवद्रव्यापहर्ता वा गुरुद्रोहरतोऽपि वा ।
विमुक्तस्सर्वपापेभ्यो राहुमुक्त इवोडुराट् ॥ २६ ॥

रूपवान् कान्तिमान् धीमानष्टैश्वर्य समन्वितः ।
भूत्वा भुवं पालयित्वा चिरकालं यथासुखम् ॥ २७ ॥

भोगान् भुक्त्वा शरीरान्ते विमानं सूर्यसन्निभम् ।
हंसबर्हिणसंयुक्तमप्सरोगणसङ्कुलम् ॥ २८ ॥

गन्धर्वैर्गीतकुशलैस्सर्वतस्समाधिष्ठितम् ।
देदीप्यमानमारुह्य कुलकोटिभिरन्वितः ॥ २९ ॥

कैलासं प्राप्य मे सर्वविलासावासमन्दिरम् ।
तत्रानुभूय सकलान् भोगानप्राकृतांश्चिरम् ॥ ३० ॥

प्राप्नोति मम सायुज्यं योगिनामपि दुर्लभम् ।
इत्येवं ते समाख्यातं शिवरात्रिव्रतं शिवे ॥

संक्षेपादायुरारोग्यविजयैश्वर्यदायकम् ॥ ३१ ॥

' इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकाया
शिवरात्रिव्रतस्वरूपनिरूपणन्नाम
अष्टादशशततम. पटल. ॥



॥ अथैकोनविंशतिशततमः पटल ॥

॥ षोडशोपचारपूजाफलस्वरूपकथनम् ॥

पार्वती—शिव शङ्कर सर्वज्ञ लोकरक्षणतत्पर ।
शिवरात्रिव्रतविधिस्त्वन्मुखाम्भोजतश्श्रुतः ॥ १ ॥

इदानीमुपचाराणां ध्यानादीनां फलं मम ।
वक्तुमर्हसि देवेश शिवरात्रिव्रतेऽनघ ॥ २ ॥

श्रीशिवः—साधु साधु वरारोहे यन्मां त्वं परिपृच्छसि ।
तत्तेऽहं संप्रवक्ष्यामि शृणु कल्याणि सादरम् ॥ ३ ॥

पञ्चवक्त्रं वृपारूढं प्रतिवक्त्रं त्रिलोचनम् ।
कपालशूलखट्वाङ्गवराङ्कितचतुर्भुजम् ॥ ४ ॥

मदुत्सङ्गगतां त्वां च दर्पणेन्दीवरान्विताम् ।
ध्यात्वाऽखिलजगद्ध्यानफलमाप्नोति मानवः ॥ ५ ॥

मामावाह्य महादेवं व्रतेऽस्मिन् मत्समो भवेत् ।
दत्वा सिह्मासनं दिव्यं सिह्मासनपतिर्भवेत् ॥ ६ ॥

दत्वाऽर्घ्यं मम सुश्रोणि नरोऽनर्घगुणो भवेत् ।
* [पाद्यं दत्वाऽरिभूपालमौलिघृष्टपदो भवेत् ॥ ७ ॥

समर्प्याचमनीयं मे कीर्त्या चान्तोदधिर्भवेत् ॥]
मधुपर्कप्रदानेन मधुघ्नेन समो भवेत् ॥ ८ ॥

पञ्चामृतैर्मां संस्नाप्य पञ्चत्वं नाप्नुयान्नरः ।
संस्नाप्य मां शुद्धजलैस्सर्वतीर्थाप्लुतो भवेत् ॥ ९ ॥

दत्वा वस्त्रं मम प्रीत्यै दिग्वासास्स भवेत् प्रिये ।
गन्धान् मत्प्रीतये दत्वा दिव्यगन्धयुतो भवेत् ॥ १० ॥

पुष्पाणि दत्वा मत्प्रीत्यै चन्द्रापीडो भवेन्नरः ।
धूपप्रदानाद्दोधूयमानचामरवान् भवेत् ॥ ११ ॥

दीपप्रदानाद्देवेशि दिव्यज्ञानी नरो भवेत् ।
नैवेद्यं विविधं दत्वा दिव्यभोगयुतो भवेत् ॥ १२ ॥

ताम्बूलं विविधं दत्वा मुखसौगन्ध्यमाप्नुयात् ।
मां स्यात् प्रदक्षिणीकृत्य सर्वकार्येषु दक्षिणः ॥ १३ ॥

मां नमस्कृत्य देवेशि नमस्कार्यस्सुरैर्भवेत् ।
मां संप्रार्थ्य विधीन्द्राद्यैः प्रार्थनीयो भवेत् सदा ॥१४॥

---

* अयं श्लोकः प्राक्तनमातृकासु न दृश्यते ।

दत्वा पुष्पाञ्जलिं पुष्पैः पूज्यस्स्यात् कल्पवृक्षजैः ।
एवं कृत्वोपचारान् मे व्रतेऽस्मिन् वरवर्णिनि ॥ १५ ।

तत्तत्फलमवाप्यान्ते मत्सायुज्यं व्रजेन्नरः ।
एवं ते देवि कथितमुपचारफलं प्रिये ॥
सङ्ग्रहेण मया सम्यक्किमन्यच्छ्रोतुमिच्छसि ॥ १६ ।

इत्याकाशभैरवाख्येमहाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकाया
षोडशोपचारपूजाफलस्वरूपकथनन्नाम
एकोनविंशतिशततमः पटलः ॥

## ॥ अथ विंशतिशततम पटल ॥

## ॥ शिवरात्रिमाहात्म्यकथनम् ॥

पार्वती–शिव शङ्कर सर्वज्ञ लोकनाथ दयानिधे ।
शिवरात्रिव्रतस्यास्य माहात्म्यमतिपावनम् ॥ १ ॥

इदानीं श्रोतुमिच्छामि विस्तरेण वदाद्य मे ।
श्रीशिवः–देवि सम्यक्त्वया पृष्टं लोकरक्षणदक्षया ॥ २ ॥

यत्त्वया तदहं वक्ष्ये शृणुष्व सुसमाहिता ।
यानि व्रतानि लोकेऽस्मिन् सन्ति पुण्यानि भामिनि ॥३॥

तानि देवि व्रतस्यास्य कलां नार्हन्ति षोडशीम् ।
शतजन्मकृतं पापं ज्ञानतोऽज्ञानतोऽपि वा ॥ ४ ॥

क्षणेन नाशमायाति व्रतस्यास्य प्रभावतः ।
अत्रेतिहासं वक्ष्यामि शृण्वतां सर्वकामदम् ॥ ५ ॥

पुराऽऽसीत् सौमिनीनाम काचिद्ब्राह्मणकन्यका ।
केकयाख्यस्य विप्रस्य तनया विनयोज्ज्वला ॥ ६ ॥

वर्धमाना पितुर्गेहे शनैस्सा प्राप यौवनम् ।
कस्मैचिद्विधिना दत्ता पित्रा सा ब्रह्मसूनवे ॥ ७ ॥

कञ्चित् कालं शुभाचारा रेमे स्वपतिना सह ।
अथ काले बहुतिथे पतिः पञ्चत्वमागतः ॥ ८ ॥

मृते भर्तरि सा कान्ता जारमार्गरताऽभवत् ।
तां ज्ञात्वा जारिणीं सर्वे तत्यजुः पतिसोदराः ॥ ९ ॥

अथ शूद्रस्य भार्याऽभूत् कस्यचित् सा द्विजाङ्गना ।
लेभे सुतञ्च शूद्रेण रममाणा दिवानिशम् ॥ १० ॥

कदाचित् भर्तरि कापि याते पीत्वाऽऽसवञ्च सा ।
मेषबुद्ध्या च गोवत्सं निजघान व्रजे निशि ॥ ११ ॥

भीता शिव शिवेत्याह दृष्ट्वा गोवत्सकं मृतम् ।
गोवत्सार्धशरीरेण कृत्वाऽऽहारन्तदङ्गना ॥ १२ ॥

शिष्टमर्धं विनिक्षिप्य बहिश्चुक्रोश कैतवात् ।
अहो व्याघ्रेण भग्नोयं गोवत्सोऽसौ जनाव्रजे ॥ १३ ॥

इति तस्यास्समाक्रोशं श्रुत्वा सर्वे शुचं ययुः ।
तद्भर्ता गृहमागत्य तद्वत्सार्थं शुशोच ह ॥ १४ ॥

सा केनचित्तु कालेन मृताऽगच्छद्यमालयम् ।
यमोऽपि पूर्वकर्मास्याः पृष्ट्वा तं चित्रगुप्तकम् ॥ १५ ॥

भवेति भुवि चण्डालीत्यवोचद्यमराट् ततः ।
सा चण्डाल्यभवद्भूमौ सञ्जाता कुष्ठरोगिणी ॥ १६ ॥

जात्यन्धा दुर्भगा कञ्चिच्चण्डालं समुपाश्रिता ।
तेन बाल्ये पोषिता सा परित्यक्ता तु वार्धके ॥ १७ ॥

ततः क्षुधार्दिता दीना सञ्चचार सयष्टिका ।
पट्टणेषु च सर्वेषु याचमाना गृहे गृहे ॥ १८ ॥

निरन्नपानवसना कदाचित् सा महाजनान् ।
आयास्यन्त्यां शिवतिथौ गोकर्णङ्गच्छतो द्विजान् ॥ १९

मत्वेयमपि चण्डाली वसनाशनतृष्णया ।
दिनैः कतिपयैर्यत्नाद्गोकर्णक्षेत्रमाययौ ॥ २० ॥

ततो विदूरे मार्गस्य निषण्णाऽपि कृताञ्जलिः ।
याचमाना मुहुः पान्थान् बभाषे कृपणं वचः ॥ २१ ॥

प्राग्जन्मार्जितपापौघैः पीडितायाश्चिरं मम ।
आहारमात्रदानेन दयां कुरुत भो जनाः ॥ २२ ॥

एवमभ्यर्थयन्त्यास्तु चण्डाल्याः प्रसृतेञ्जलौ ।
एकः पुण्यतमः पान्थः प्राक्षिपद्बिल्वमञ्जरीम् ॥ २३ ॥

तामभक्ष्यां विनिश्चित्य प्राक्षिपत् दूरमातुरा ।
पपात कस्यचिद्दिष्टया शिवलिङ्गस्य मूर्धनि ॥ २४ ॥

एवं शिवचतुर्दश्यां रात्रौ पान्थान् मुहुर्मुहुः ।
याचमानाऽपि यत्किञ्चित् न लेभे दैवयोगतः ॥२५ ॥

उपवासकृशा दीना तत्र नीत्वा तु तां निशाम् ।
ततः प्रभाते भ्रष्टाशा स्वन्देशम्भृशदुःखिता ॥ २६ ॥

यियासुः क्षुधिताऽत्यन्तम्मध्येमार्गं ममार सा ।
अथ विश्वपतेश्शम्भोः करुणामृतवारिधेः ॥ २७ ॥

अनिच्छया मम शिवचतुर्दश्यां महातिथौ ।
लिङ्गे क्षिप्ताद्बिल्वदलात् जातपुण्यप्रभावतः ॥ २८ ॥

चण्डाली तत्क्षणात्क्षिप्त्वा कुत्सितान्तत्तनुम्प्रिये ।
दिव्यदेहधरा दिव्यकान्तिकान्तहरिन्मुखा ॥ २९ ॥

दिव्यमाल्याम्बरधरा दिव्याभरणभूषिता ।
*दिव्यं विमानमारुह्य ह्यानीतम्मम किङ्करैः ॥ ३० ॥

मल्लोकम्प्राप्य भुङ्क्ते सा भोगानद्यापि भामिनी ।
इत्येवं शिवरात्रेस्तु माहात्म्यमुदितन्तव ॥ ३१ ॥

---

* दिव्यं विमानमारोप्य ह्यानीता मम किङ्करैः । इति युक्तःपाठः

अथान्यदपि वक्ष्येऽहमितिहासं वरानने ।
पुरा मित्रसहश्चेति राजाऽसीद्वरवर्णिनि ॥ ३२ ॥

इक्ष्वाकुवंशजश्श्रीमान् श्रेष्ठस्सर्वधनुष्मताम् ।
कदाचिद्गुरुशापेन राक्षसत्वमुपेत्य सः ॥ ३३ ॥

विचरन् विपिने विप्रञ्जग्ध्वा तद्ब्रह्महत्यया ।
पीड्यमानो गौतमर्षिम्प्राप्य तस्योपदेशतः ॥ ३४ ॥

तूर्णङ्गोकर्णमासाद्य तत्र मल्लिङ्गमद्रिजे ।
शिवरात्रौ बिल्वदलैस्सम्पूज्योपोष्य जागरम् ॥ ३५ ॥

कृत्वा निशि यथाशास्त्रं स मुक्तो विप्रहत्यया ।
स्वपुरं प्राप्य पृथिवीं लीलयाऽपालयच्चिरम् ॥ ३६ ॥

एवं शिवचतुर्दश्या माहात्म्यमतिशोभनम् ।
अथान्यदपि वक्ष्येऽहमितिहासं पुरातनम् ॥ ३७ ॥

पुरा कश्चित् सारमेयः पम्पानगरमाश्रितः ।
तस्मिञ्छिवचतुर्दश्यां वर्तमाने शिवार्चने ॥ ३८ ॥

स्थितश्शिवालयद्वारि बलिपिण्डादिलोभतः ।
ततस्स धन्विभिस्तीक्ष्णैश्शरैर्विद्धोऽतिदारुणैः ॥ ३९ ॥

तत्रैव च शिवद्वारि गतासुरभवत् प्रिये ।
तेन पुण्यप्रभावेन विमर्शन इति प्रिये ॥ ४० ॥

आसीत् किरातदेशेषु जातिस्मरणवान् नृपः ।
अथान्यच्छिवरात्र्यास्ते रहस्यं कथयाम्यहम् ॥ ४१ ॥

पुराऽऽसीदङ्किलो नाम लुब्धकश्शाकले पुरे ।
स कदाचिद्धनुष्पाणिः प्रविश्य विपिनं महत् ॥ ४२ ॥

उपायान् विविधांस्तत्र कृत्वा मृगजिघृक्षया ।
स न लेभे मृगं कञ्चित् पक्षिणं वा स लुब्धकः ४३

ततोऽस्तङ्गत आदित्ये बिल्ववृक्षमुपाश्रितः ।
आरुह्य तत्तरुं पक्षिदर्शनार्थं महानिशि ॥ ४४ ॥

छित्वा छित्वा तद्दलानि प्राक्षिपद्दैवयोगतः ।
तानि तत्तरुमूलस्थशिवलिङ्गस्य मूर्धनि ॥ ४५ ॥

न्यपतंस्तेन कृत्येन कृतं बिल्वदलार्चनम् ।
मृगग्रहणलुब्धेन कृतो लुब्धेन जागरः ॥ ४६ ॥

उपवासः कृतस्तेन मांसाभावाद्वरानने ।
एवं कर्मत्रयं तेन प्राप्तं वै दैवयोगतः ॥ ४७ ॥

काकतालीयवद्देवि शिवरात्रौ विशेषतः ।
तत्पुण्यस्य प्रभावेन देहान्ते मणिभास्वरम् ॥ ४८ ॥

दिव्यं मत्किङ्करानीतं विमानमधिरुह्य सः ।
दिव्यदेहो दिव्यमाल्यो दिव्याभरणभूषितः ॥ ४९ ॥

मल्लोकं समनुप्राप्य मत्सायुज्यमवाप्तवान् ।
इत्येवं शिवरात्रेस्तु माहात्म्यमुपवर्णितम् ॥
संग्रहेण सरोजाक्षि त्वयि स्नेहान्मयाऽधुना ॥ ५० ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
शिवरात्रिमाहात्म्यकथनन्नाम
विंशतिशततमः पटलः ॥

---

## ॥ अथ एकविंशत्युत्तरशततमः पटलः ॥

### ॥ शिवरात्रीमाहात्म्यकथनम् ॥

अथान्यदपि वक्ष्यामि माहात्म्यमतिपावनम् ।
शिवरात्र्या विशेषेण सर्वपापापहं शिवे ॥ १ ॥

पुरा मायापुरे कश्चिद्ब्राह्मणो धनगर्वितः ।
वेश्यायां मञ्जुभाषिण्यां सक्तस्सम्मोहनाभिधः ॥ २ ॥

रममाणश्चिरङ्कालं तयासह दिवानिशम् ।
न्यवसन्नगरे तस्मिन् कृत्याकृत्यविमूढधीः ॥ ३ ॥

स एकदा शिवतिथौ भुक्त्वा चन्दनचर्चितः ।
करे गृहीत्वा ताम्बूलीदळानि धवळानि वै ॥ ४ ॥

प्रविश्य मञ्जुभाषिण्या गृहं वै समलङ्कृतम् ।
स्नातां शुक्लाम्बरधरां शिवपूजार्थमुद्यताम् ॥ ५ ॥

रुद्राक्षमालाभरणान्त्रिपुण्ड्राङ्कितमस्तकाम् ।
समीक्ष्य तामाजुहाव रन्तुकामो द्विजाधमः ॥ ६ ॥

तेनाहूता वरारोहा सा वेश्या मञ्जुभाषिणी ।
भर्त्सयामास तं विप्रं बहुधा क्रोधमूर्छिता ॥ ७ ॥

शिवरात्रिरिति ब्रह्मन्नजानास्यद्य मूढ किम् ।
शिवपूजोद्यतां मान्त्वेङ्कथमाह्वयसि प्रिये ॥ ८ ॥

बहुजन्मकृतैः पुण्यैः शिवरात्रिस्तु लभ्यते ।
तिथिमेतां विना विप्र नावकाशोऽस्ति वा वद ॥ ९ ॥

तथैवं बहुधा देवि भर्त्सितस्स द्विजाधमः ।
सान्त्वयित्वा तु तां वेश्यामुवाच विनयान्वितः ॥१०॥

कल्याणि वद किङ्कार्यमस्मिन् शिवदिने प्रिय ।
तत्करोमि पृथुश्रोणि यद्यस्ति करुणा मयि ॥ ११ ॥

इत्युक्ता प्रेयसा सा तु प्रोवाच मधुराक्षरम् ।
शृणु विप्र प्रवक्ष्यामि कर्तव्यं शिववासरे ॥ १२ ॥

ब्राह्मे मुहूर्त उत्थाय कृतशौचक्रियश्शुचिः ।
सन्ध्यादिनित्यकर्माणि निर्वर्त्य परिहृत्य च ॥ १३ ॥

पाषण्डजनसंसर्गं ततस्त्वस्तमिते रवौ ।
गोमयेन विलिप्योर्वीं गृहे देवालयेऽपि वा ॥ १४ ॥

छित्वा छित्वा करस्थं तदर्पयामास सादरम् ।
उक्त्वोन्नमश्शिवायेति पञ्चवारमतन्द्रितः ॥ २४ ॥

तेन पुण्यप्रभावेन देहान्ते मणिभास्वरम् ।
विमानवरमारुह्य शैवं पदमवाप्तवान् ॥ २५ ॥

एवं शिवचतुर्दश्यां शिवपूजाविधेः फलम ।
मया सम्यङ्निगदितं किमन्यच्छ्रोतुमिच्छसि ॥ २६ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
शिवरात्रिमाहात्म्यकथनन्नाम
एकविंशतिशततमः पटलः ॥



## ॥ अथ द्वाविंशतिशततमः पटलः ॥

### ॥ भारतपौर्णमासीव्रतस्वरूपनिरूपणम् ॥

श्रीशिवः—अथान्यदपि माघाख्ये मासि कर्तव्यमद्रिजे ।
वक्ष्यामि संग्रहेणैव व्रतमायुधवीर्यदम् ॥ १ ॥

कुलोच्छ्रायकरं सर्वभूततृप्तिविधायकम ।
साम्राज्यस्थैर्यदं राज्ञां विशेषेण जयप्रदम् ॥ २ ॥

पुरा हि पाण्डुतनया. युद्धे जित्वा तु कौरवान् ।
निर्वीर्याण्यस्त्रशस्त्राणि दृष्ट्वा तद्वीर्यसिद्धये ॥ ३ ॥

धौम्यं पुरोधसं पृष्ट्वा चक्रुरेतद्व्रतोत्तमम् ।
भूतानां तृप्तये राज्यगुप्तये च विशेषतः ॥ ४ ॥

माघमासे पूर्णिमायां निशानाथोदयस्पृशि ।
स्नात्वा धौताम्बरधरास्सर्वाभरणभूषिताः ॥ ५ ॥

शशाङ्कोदयवेळायां खड्गादीन्यायुधानि च ।
कारयित्वा विकोशानि पीठे विन्यस्य पङ्क्तिशः ॥६॥

आवाह्याखिलशस्त्रास्त्रदेवतास्तेषु सादरम् ।
सम्पूज्य तत्तन्मन्त्रैस्तु गन्धाद्यैश्च पृथक्पृथक् ॥ ७ ॥

धूपदीपादिकं सर्वं दत्वा तत्पुरतो भुवि ।
कलशेष्वग्नितप्तेषु क्षीरवृद्धिं यथाविधि ॥ ८ ॥

कारयित्वा सूक्ष्मशाली तण्डुलैः परमान्नकम् ।
अर्पयित्वास्त्रशस्त्रेभ्यश्चक्रुर्भूतबालिन्ततः ॥ ९ ॥

नदत्सु पञ्चवाद्येषु भेरीकाहलिकादिषु ।
तस्मिन्नेव क्षणे तानि वीर्यवन्त्यभवन्प्रिये ॥ १० ॥

ते तादृशान्यायुधानि दृष्ट्वा हर्षं प्रपेदिरे ।
यदेयं भारतैरेवं पूर्णिमाऽऽचरिता नृपैः ॥११॥

तदारभ्येयमुद्दिष्टा भारतीति जगत्प्रिये ।
तस्मादस्याम्पूर्णिमायां पार्थिवैर्जयकांक्षिभिः ॥ १२ ॥

पूज्यान्यखिलशस्त्राणि वीर्यवत्ताविवृद्धये ।
कुलोच्छ्रायस्य सिद्ध्यर्थं भूततृप्त्यर्थमेव च ॥ १३ ॥

साम्राज्यस्थैर्यसिद्ध्यर्थं विजयाय विशेषतः ।
इत्येवङ्कथिता देवि मया भारतपूर्णिमा ॥
निर्वीर्यसर्वशस्त्रास्त्रसङ्घवीर्यविधायिनी ॥ १४ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
भारतपौर्णमासीव्रतस्वरूपकथनन्नाम
द्वाविंशतिशततमः पटलः ॥

---

## ॥ अथ त्रयोविंशतिशततमः पटलः ॥

### ॥ फाल्गुनमासकर्तव्यकामव्रतस्वरूपकथनम् ॥

श्रीशिवः—अथ फाल्गुनिके मासि कर्तव्यं राजपुङ्गवैः ।
कामव्रतं प्रवक्ष्यामि सर्वकामफलप्रदम् ॥ १ ॥

सर्वसम्पत्कर राज्ञां विशेषेण जयप्रदम् ।
साम्राज्यस्थैर्यदन्देवि कुलोच्छ्रायकरं महत् ॥ २ ॥

सगरेण ककुत्स्थेन धुन्धुमारेण गाधिना ।
नाभागेन दिलीपेन नहुषेण ययातिना ॥ ३ ॥

अन्यैश्चैव महीपालैरनुष्ठितमगात्मजे ।
सार्वभौमो नरपतिर्मण्डलस्येश्वरोपि वा ॥ ४ ॥

देशाध्यक्षः पुराध्यक्षो ग्रामाध्यक्षोऽथवा नृपः ।
कुर्यादेतद्व्रतन्देशपुरग्रामादिवृद्धये ॥ ५ ॥

फाल्गुनस्य सिते पक्षे प्रतिपद्दिवसे शुभे ।
पटे सल्लिँख्य कन्दर्पं रत्या सह विचित्रकैः ॥ ६ ॥

धातुभिः पीतरक्ताद्यैर्विलोचनसुखं यथा ।
बध्वा तत्प्रांशुदण्डाग्रे पटं सम्पूज्य पार्थिवः ॥ ७ ॥

नृत्तैर्गीतैस्तथावाद्यैर्भ्रामयेत्सह पत्तने ।
रथ्यासु राजमार्गेषु विपणीषु विशेषतः ॥ ८ ॥

सायंप्रातः प्रतिदिनमारभ्यापूर्णिमादिनम् ।
कृत्वैवमुत्सवं राजा प्रत्यहं राज्यवृद्धये ॥ ९ ॥

पौर्णमास्यां ततो रात्रौ गजस्कन्धे निधाय तत् ।
भ्रामयित्वा ततो देवि महावाद्यरवैस्सह ॥ १० ॥

चतुष्पथे प्रपाङ्कृत्वा तस्यां संस्थाप्य तत्पटम् ।
नृत्तैर्गीतैस्तथा वाद्यैः कृत्वा जागरणं निशि ॥ ११ ॥

यामे तृतीये सम्प्राप्ते प्रभूतं बलिमद्रिजे ।
नानाशाकविशेषाढ्यन्नानाभक्ष्यसमन्वितम् ॥ १२ ॥

नानादीपैर्ध्वजैः क्षुद्रैस्सर्वतस्समलङ्कृतम् ।
समर्प्य तस्मै कामाय पटस्थाय महात्मने ॥ १३ ॥

दाहयित्वा पटङ्कामप्रतिमाधिष्ठितम्प्रिये ।
तद्भस्मना मां सम्पूज्य मदीयैर्दिव्यनामभिः ॥ १४ ॥

सवयोभिस्सह नृपो राजपुत्रैरनन्तरम् ।
तद्भस्मोद्धूलनङ्कृत्वा स्नात्वा शुक्लाम्बरश्शुचिः ॥१५

सर्वाभरणपूर्णाङ्गः प्रविशेन्निजमन्दिरम् ।
एवन्नरपतिः कृत्वा वर्षे वर्षे महोत्सवम् ॥ १६ ॥

कामस्य कामानाप्नोति नात्र कार्या विचारणा ।
एवङ्कामव्रतन्देवि मया सम्यङ्निरूपितम् ॥
सर्वसौभाग्यदं राज्ञां किमन्यच्छ्रोतुमिच्छसि ॥ १७ ॥

इत्याकाशभैरवाख्येमहाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
फाल्गुनमासकर्तव्यकामव्रतस्वरूपकथनन्नाम
त्रयोविंशतिशततमः पटलः ॥

॥ अथ चतुर्विंशतिशततमः पटलः ॥

॥ पुण्यकालकर्तव्यदानस्वरूपनिरूपणम् ॥

पार्वति—शिव सर्वज्ञ भगवन् श्रुतानि भवतो मया ।
नृपैश्चैत्रादिमासेषु कर्तव्यानि व्रतानि वै ॥ १ ॥

इदानीं श्रोतुमिच्छामि कानि दानानि भूमिपैः ।
केषु वा पुण्यकालेषु कर्तव्यानि वदाद्य नः ॥ २ ॥

श्रीशिवः—साधु साधु जगद्वन्द्ये यन्मां त्वं परिपृच्छसि ।
तत्तेऽहं सम्प्रवक्ष्यामि शृणुष्व सुसमाहिता ॥ ३ ॥

अयनद्वितये पुण्ये ग्रहणे चन्द्रसूर्ययोः ।
सङ्क्रान्तिषु च सर्वासु व्यतीपातेषु पर्वसु ॥ ४ ॥

युगादिषु युगान्तेषु द्वादशीष्वष्टकासु च ।
अन्येष्वलभ्ययोगेषु लक्ष्मीनारायणादिषु ॥ ५ ॥

भयङ्करेषु दृष्टेषु दुस्स्वप्नेष्वद्भुतेषु च ।
उपस्थितेषु यज्ञेषु विवाहेषूत्सवेषु च ॥ ६ ॥

प्रसक्ते द्रव्यलाभे वा सत्पात्रे वा समागते ।
यदा वा जायते श्रद्धा दित्सा चोत्पद्यते यदा ॥७॥

तदा नरपतिस्सम्राण्मण्डलस्येश्वरोऽपि वा ।
देशाधिपो वा केषाञ्चिद्ग्रामाणान्नायकोपि वा ॥८॥

स्वस्वजन्मसु पूर्वेषु बहुष्विह च जन्मनि ।
बाल्ये वयसि कौमारे यौवने वार्धकेपि च ॥ ९ ॥

ज्ञानतोऽज्ञानतो वापि सकृद्वाऽसकृदद्रिजे ।
कृतानां स्वेन पापानामल्पानां महतामपि ॥ १० ॥

सद्यस्संक्षयसिद्ध्यर्थमारोग्यायामितायुषे ।
सम्पत्सारस्वतप्राप्त्यै सत्सन्तानाभिवृद्धये ॥ ११ ॥

सर्वशत्रुक्षयार्थाय विजयाय विशेषतः ।
साम्राज्यस्थैर्यसिद्ध्यर्थं कुर्याद्दानानि पार्थिवः ॥ १२ ॥

तुलापुरुषमुख्यानि महादानानि षोडश ।
दशपर्वतदानानि मेरुदानान्यनेकशः ॥ १३ ॥

दानानि शिखराणाञ्च त्रयोदश यथाक्रमम् ।
धेनुदानान्यनेकानि भूमिदानानि कृत्स्नशः ॥ १४ ॥

विद्याविशेषदानानि ज्ञानैश्वर्यकराणि वै ।
तथैव कनकाश्वादिमहादानानि वै दश ॥ १५ ॥

आर्द्रकृष्णाजिनादीनामजिनानाम्बहूनि च ।
दानानि देवतामूर्तिदानानि वरवर्णिनि ॥ १६ ॥

तत्तत्कालविशेषेषु कर्तव्यानि च कानिचित् ।
तथैव भोगवस्तूनान्दानानि विविधानि च ॥ १७ ॥

कुर्यादेतानि सर्वाणि दानान्युक्तविधानतः ।
तत्तत्कालेषु देवेशि शक्तश्चेत्पृथिवीपतिः ॥ १८ ॥

अशक्तश्चेदन्यतममेषाङ्कुर्यान्महीपतिः ।
एवं कृत्वा विधानेन तत्तत्कालेषु पार्थिवः ॥ १९ ॥

सर्वपापविनिर्मुक्तस्सर्वैश्वर्यसमन्वितः ।
आरोग्यभाग्यसम्पन्नश्शत्रून्निर्जित्य सङ्गरे ॥ २० ॥

रूपवान्धनवान्श्रीमान्कान्तिमान्कीर्तिमानपि ।
इह भूत्वा चिरङ्कालं पालयेदवनीं नृपः ॥ २१ ॥

इत्येवं पुण्यकालेषु कर्तव्यानि नृपोत्तमैः ।
दानान्युक्तानि ते देवि किमन्यच्छ्रोतुमिच्छसि ॥२२॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
चैत्रमासादिद्वादशमासेषु ग्रहणादिपुण्यकालकर्तव्यनानादानस्वरूपनिरूपणन्नाम
चतुर्विंशतिशततमः पटलः ॥

---

## ॥ अथ पञ्चविंशतिशततमः पटलः ॥

### ॥ तीर्थयात्रास्वरूपकथनम् ॥

पार्वती—देवदेव दयासिन्धो राज्ञा पुण्याभिकांक्षिणा ।
तीर्थयात्रा कथन्देव कर्तव्या वद मे प्रभो ॥ १ ॥

श्रीशिवः—शृणु पार्वति वक्ष्यामि तीर्थयात्राविधिक्रमम् ।
सर्वपापप्रशमनं सर्वाभीष्टफलप्रदम् ॥ २ ॥

उद्दिश्य पुण्यतीर्थानि पुण्यक्षेत्राणि वा पुनः ।
यियासुर्भूपतिः पूर्वदिने प्रयतमानसः ॥ ३ ॥

प्रातस्स्नात्वा नित्यकर्म समाप्य विधिपूर्वकम् ।
पुण्याहं वाचयित्वाऽथ विघ्नेशं क्षेत्रपालकम् ॥ ४ ॥

सम्पूज्यविधिवद्विप्रान्भोजयित्वा स्वशक्तितः।
स्वयमक्षारलवणम्भुञ्जीयाच्छक्तिमान्यदि ॥ ५ ॥

अशक्तश्चेद्यथाकामम्भुक्त्वा सुप्त्वाथ तन्निशि।
ततः प्रभाते चोत्थाय चिन्तयन्निष्टदेवताम् ॥ ६ ॥

पुरोहितम्पुरस्कृत्य तस्यानुज्ञामवाप्य च।
ब्राह्मणांश्च पुरन्ध्रीश्च सम्पूज्य कुसुमादिभिः ॥ ७ ॥

ताम्बूलानि ततो दत्वा दक्षिणासहितानि च।
लब्ध्वा तदाशिषः पश्चाद्यात्रासङ्कल्पमारभेत् ॥ ८ ॥

अद्यप्रभृत्यहम्मौनी ब्रह्मचारी यतव्रतः।
ताम्बूलाभ्यङ्गगन्धस्रक्पादुकायानवर्जितः ॥ ९ ॥

एकभक्तरतो नित्यं सत्कथाश्रवणोत्सुकः।
पुनरागमनं यावत्तावदेवम्भवाम्यहम् ॥ १० ॥

इति सङ्कल्प्य विप्रेभ्यो दद्यात्क्षीरं सतण्डुलम्।
सुवर्णं रजतं मुक्तारत्नानि विविधानि च ॥ ११ ॥

वस्त्राणि च विचित्राणि गन्धांश्चोच्चावचानि च।
तथा फलान्यनेकानि पुष्पाणि विविधान्यपि ॥ १२ ॥

आसनानि च चित्राणि यानानि सुमहान्ति च।
छत्रञ्च चामरञ्चैव पादुके च विशेषतः ॥ १३ ॥

भक्ष्याण्यनेकरूपाणि पानीयानि तथैव च ।
दद्यात्प्रीतेन मनसा शक्त्या दद्याच्च दक्षिणाम् ॥ १४

यद्यदिष्टतमल्लोँके यद्यदीश्वरतुष्टिदम् ।
तत्तद्देयं विशेषेण मनुजेन विपश्चिता ॥ १५ ॥

एवन्दत्वा विधानेन प्रतीक्ष्य शकुनादिकम् ।
पठत्सु विप्रमुख्येषु शाकुनं सूक्तमग्रतः ॥
स्वयम्पठञ्छ्लोकषट्कं यायात्पत्नीसमन्वितः ॥ १६ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
तीर्थयात्रासङ्कल्पस्वरूपकथनन्नाम
पञ्चविंशतिशततमः पटलः ॥

॥ अथ षड्विंशतिशततमः पटलः ॥

॥ पुण्यतीर्थकर्तव्यकर्मस्वरूपनिरूपणम् ॥

पार्वती–शिव सर्वज्ञ भगवन्सर्वेश करुणानिधे ।
तच्छ्लोकषट्कन्तत्क्षेत्रे कर्तव्यञ्च वदाद्य मे ॥ १ ॥

श्रीशिवः–शृणु पार्वति वक्ष्यामि श्लोकषट्कं वरानने ।
कर्तव्यङ्कर्म तत्क्षेत्रे सर्वपापहरम्परम् ॥ २ ॥

पृथिव्यापश्चतेजश्च वायुराकाश एव च ।
तीर्थयात्राप्रसक्तम्मां रक्षन्तु च पुनन्तु च ॥ ३ ॥

ब्रह्मा विष्णुर्महेशश्च दिक्पाला दिग्गजा दिशः ।
तीर्थयात्राप्रसक्तम्मां रक्षन्तु च पुनन्तु च ॥ ४ ॥

आदित्या वसवो रुद्रा मरुतो मातरस्तथा ।
तीर्थयात्राप्रसक्तम्मां रक्षन्तु च पुनन्तु च ॥ ५ ॥

सरितस्सागराश्शैला नगा नागा मृगाः खगाः ।
तीर्थयात्राप्रसक्तम्मां रक्षन्तु च पुनन्तु च ॥ ६ ॥

त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ।
तीर्थयात्राप्रसक्तं मां रक्षन्तु च पुनन्तु च ॥ ७ ॥

एवं पठन्ग्रामसीमां सम्प्राप्य स्वानुयायिनः ।
निवर्त्य नित्यकर्माविरोधेनैवायनन्नयेत् ॥ ८ ॥

योजनं योजनार्धं वा प्रत्यहं प्रयतश्शुचिः ।
तर्पयन्नन्नपानाद्यैर्विप्रमुख्यान्स्वशक्तितः ॥ ९ ॥

सम्प्राप्य पुण्यतीर्थन्तत्पुण्यक्षेत्रमथापि वा ।
स्नात्वा सम्यग्विधानेन नित्यकर्म समाप्य च ॥१०॥

तीर्थक्षेत्राधिपन्देवं संसेव्य विधिपूर्वकम् ।
वापयित्वा श्मश्रुकेशान्स्नात्वा प्रयतमानसः ॥ ११ ॥

समुपोष्य दिने तस्मिन्कुर्वञ्जागरणन्निशि ।
तत्तीर्थक्षेत्रमाहात्म्यं श्रुत्वा राजा समाहितः ॥ १२ ॥

परेद्युः प्रातरुत्थाय कृत्वा पौर्वाह्णिकीङ्क्रियाम् ।
स्ववंशजपितॄन्सर्वांस्तीर्थश्राद्धविधानतः ॥ १३ ॥

सन्तर्प्यैष्टैर्विशिष्टैश्च साकं भुक्त्वा परेऽहनि ।
गोभूतिलहिरण्यानि दत्वा शक्त्या विधानतः ॥ १४ ॥

दीनानाथविशिष्टेभ्यो दत्वान्नमनिवारितम् ।
महाभिषेकं पूजाञ्च कुर्यात् क्षेत्राधिपस्य तु ॥ १५ ॥

मम विष्णोश्च वा सायङ्काले प्रयतमानसः ।
एवं दिनत्रयन्नीत्वा तस्मिन्क्षेत्रे विधानतः ॥ १६ ॥

निर्गच्छेच्च ततस्तस्मात्स्वग्रामं प्रति भूपतिः ।
विलम्बन्तत्र नो कार्यं यतश्चित्तं हि चञ्चलम् ॥१७॥

पुण्यक्षेत्रे कृतं पापमणु वाऽप्यचलायते ।
तस्माच्छीघ्रं विनिर्गच्छेत्तत्पुण्यक्षेत्रतो नरः ॥ १८ ॥

ततः पूर्ववदेवातिवाद्यायनमतन्द्रितः ।
प्रविश्य शोभने लग्ने स्वग्रामं ग्रामदेवताम् ॥ १९ ॥

नत्वा गृहम्प्रविश्येष्टदेवञ्च क्षेत्रपालकम् ।
सम्पूज्य भोजयेद्विप्रान्स्वयम्भुञ्जीत भूपतिः ॥ २० ॥

इत्येवम्पुण्यतीर्थेषु पुण्यक्षेत्रेषु राजभिः ।
कर्तव्यङ्कर्म यद्देवि तत्ते निगदितम्मया　॥ २१ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
पुण्यतीर्थकर्तव्यकर्मस्वरूपनिरूपणन्नाम
षड्विंशतिशततमः पटलः ॥

॥ अथ सप्तविंशतिशततमः पटलः ॥

॥ तीर्थयात्राफलस्वरूपनिरूपणम् ॥

पार्वती—शिव सर्वज्ञ भगवँल्लोकनाथ दयानिधे ।
तीर्थयात्राफलं सर्वं विस्तरेण वदाद्य मे　॥ १ ॥

श्रीशिवः—सम्यक्पृष्टन्त्वया देवि तीर्थयात्राफलं शुभम् ।
वक्ष्यामि सरहस्यन्ते शृणु कल्याणि सादरम् ॥ २ ॥

पूर्वोक्तविधिना यस्तु तीर्थयात्रां समाचरेत् ।
पदे पदेऽश्वमेधस्य स फलं प्राप्नुयान्नृपः　॥ ३ ॥

चान्द्रायणसहस्रेण प्राजापत्यायुतेन च ।
मासोपवासलक्षेण सम्यक्चीर्णेन यत्फलम्　॥ ४ ॥

तत्फलं समवाप्नोति तीर्थयात्रापरो नृपः ।
भूमिं त्रिवारं पञ्चाशत्कोटियोजनविस्तृताम् ॥ ५ ॥

परिक्रम्य विधानेन यत्फलं प्राप्नुयान्नरः ।
तत्फलं समवाप्नोति तीर्थयात्रापरो नृपः ॥ ६ ॥

कल्पमेकं विधानेन कृत्वा हर्यर्चनन्नरः ।
यत्फलं समवाप्नोति तत्फलङ्कर्मकृल्लभेत् ॥ ७ ॥

कुरुक्षेत्रे विधानेन दत्वाऽऽत्मतुलितन्धनम् ।
असकृद्विप्रमुख्येभ्यो यत्फलं समवाप्नुयात् ॥ ८ ॥

गवाङ्कोटिमलङ्कृत्य स्वर्णशृङ्गादिभिर्नरः ।
ग्रहणादिषु कालेषु दत्वा यत्फलमाप्नुयात् ॥ ९ ॥

तत्फलं समवाप्नोति तीर्थयात्रापरो नरः ।
सुवर्णकक्ष्याग्रैवेयान्सहस्रन्दन्तिनो नरः ॥ १० ॥

दत्वा यत्फलमाप्नोति तदेतत्कर्मकृल्लभेत् ।
दिव्यं विमानमारुह्य दीप्यमानदिगन्तरम् ॥ ११ ॥

देवगन्धर्वकन्याभिष्टूयमानात्मवैभवः ।
क्रमेणेन्द्रादिदिक्पाललोकान्प्राप्य यथासुखम् ॥ १२ ॥

रमित्वाप्सरसां सङ्घैस्साकमाकल्पमादरात् ।
वैष्णवल्लोकमासाद्य तत्रैव वसति ध्रुवम् ॥ १३ ॥

इत्येवन्तीर्थयात्रायाः फलं सम्यङ्मयेरितम् ।
सङ्ग्रहेण सरोजाक्षि किमन्यच्छ्रोतुमिच्छसि ॥ १४ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
तीर्थयात्राफलस्वरूपनिरूपणन्नाम
सप्तविंशतिशततमः पटलः ॥

---

॥ अथाष्टाविंशतिशततमः पटलः ॥

॥ दण्डयात्रासंरम्भस्वरूपकथनम् ॥

पार्वती—शिव शङ्कर सर्वज्ञ दण्डयात्रा कथन्नृपैः ।
कर्तव्या जयमिच्छद्भिः वद मेऽद्य दयानिधे ॥ १ ॥

श्रीशिवः—साधु साधु वरारोहे यन्मां त्वं परिपृच्छसि ।
तत्तेहं सम्प्रवक्ष्यामि शृणुष्व सुसमाहिता ॥ २ ॥

अथातः पृथिवीपालैर्दण्डयात्रा यथाविधि ।
कर्तव्या राष्ट्ररक्षार्थं विजयार्थं विशेषतः ॥ ३ ॥

असमानस्समानो वा राजा शात्रवमास्थितः ।
यस्यान्दिश्युद्धतो भूत्वा स्वदेशम्बाधतेऽथवा ॥ ४ ॥

स्वीयान्वा चेष्टते हास्यं सभायाङ्कुरुते यदा ।
तदैव दण्डनीयस्स्यादरातिरतिवेगतः ॥ ५ ॥

तस्मिन्नुपेक्षा कर्तव्या न कदाचित्सुखार्थिना ।
उपेक्षते य आलस्यादरीनप्यामयानपि ॥ ६ ॥

अचिरेणैव कालेन नाशमेति स पार्थिवः ।
तस्मात्सर्वप्रयत्नेन दण्ड्य एव रिपुर्भृशम् ॥ ७ ॥

शुभमासे शुभदिने शुभर्क्षेऽरिदिशम्प्रति ।
पटमण्टपिकां शुभ्रामुद्धृत्योत्सेधशालिनीम् ॥ ८ ॥

बद्ध्वा तस्यान्ध्वजञ्चित्रं सन्ताड्य जयदुन्दुभिम् ।
राज्ञः खड्गन्धनुर्बाणांस्तस्यान्निक्षिप्य पूजितान् ॥ ९ ॥

पुरोहितः प्रार्थयेत्तात्राज्ञा सम्यक्प्रचोदितः ।
तीक्ष्णधार दुराधर्ष रणे शूरारिमर्दन ॥ १० ॥

असे विशसनारातीञ्छिन्धि पालय मत्प्रभुम् ।
सर्वायुधमहामात्र सर्वदैवारिसूदन ॥ ११ ॥

चाप शत्रून्रणे छिन्धि विजयं देहि मत्प्रभोः ।
सायकेश नमस्तुभ्यं वैरिमर्मविभेदिने ॥ १२ ॥

सङ्ग्रामे सायुधाञ्छत्रून् भिन्धि पालय मत्प्रभुम् ।
इति संप्रार्थ्य तत्सर्वं राज्ञे विज्ञाप्य सत्वरम् ॥१३॥

पुरोहितो जपेत् जयेत्याशिषा वर्धयेन्नृपम् ।
ततो राजा स्वानुकूले मुहूर्ते प्रयतश्शुचिः ॥ १४ ॥

पुरोहितं पुरस्कृत्य तस्यानुज्ञामवाप्य च ।
जयदुर्गां वक्रदण्डङ्गणेशञ्च यथाविधि ॥ १५ ॥

यथाशक्ति सुवर्णेन कृत्वा सम्पूज्य यत्नतः ।
दत्वा द्विजाभ्यां सन्तुष्टमानसो दक्षिणान्वितम् ॥१६॥

याति यान्दिशमुद्दिश्य तद्दिगीशं हृदि स्मरन् ।
विप्रयुग्मे पठत्यग्रे स्वस्तिसूक्तञ्च शाकुनम् ॥ १७ ॥

वन्दिभिर्नन्द्यमानस्सन्नुद्बाहुभिरुदारधीः ।
सशिरस्त्राणकवचस्सर्वाभरणभूषितः ॥ १८ ॥

गृहान्निर्गत्य भद्रेभं सुशीलं स्वकुलागतम् ।
युद्धोपस्करसन्नद्धमुदयाद्रिमिवांशुमान् ॥ १९ ॥

आरुह्यासाद्य तां शुभ्रपटमण्टपिकान्नृपः ।
आदाय खड्गं सशरञ्चापन्तापकरं रिपोः ॥
पठेच्छ्लोकाष्टकं भूपः वक्ष्यमाणमतन्द्रितः ॥ २० ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
दण्डयात्रासंरम्भो नाम
अष्टाविंशत्युत्तरशततमः पटलः ॥



॥ अथैकोनत्रिंशदुत्तरशततमः पटलः ॥

॥ दण्डयात्रास्वरूपकथनम् ॥

श्रीशिवः—श्लोकाष्टकं प्रवक्ष्यामि राज्ञां विजयदं सदा ।
सर्वशत्रुक्षयकरं सर्वमङ्गळदायकम् ॥ १ ॥

अमृताहरणोद्युक्तचित्तस्य यदभूत्पुरा ।
मङ्गळं वैनतेयस्य तन्मे भवतु मङ्गळम् ॥ २ ॥

अमृतोत्पादने दैत्याञ्जिघांसोर्यदभूत्पुरा ।
मङ्गळं वज्रहस्तस्य तन्मे भवतु मङ्गळम् ॥ ३ ॥

त्रीन्विक्रमान्प्रक्रमतो यद्बलिध्वंसकर्मणि ।
यदासीन्मङ्गळं विष्णोस्तन्मे भवतु मङ्गळम् ॥ ४ ॥

क्रूरत्रिपुरसंहारे महादेवस्य शूलिनः ।
यदासीत् मङ्गळं पूर्वं तन्मे भवतु मङ्गळम् ॥ ५ ॥

सृष्टिस्थित्यन्तकर्तारो ब्रह्मविष्णुमहेश्वराः ।
दण्डयात्राप्रसक्तस्य जयं ददतु मे भृशम् ॥ ६ ॥

सवाहनायुधास्सर्वे दिक्पाला दिग्गजैस्सह ।
दण्डयात्राप्रसक्तस्य जयं ददतु मे भृशम् ॥ ७ ॥

आदित्या वसवो रुद्रा विश्वेश्विमरुतस्तथा ।
दण्डयात्रा प्रसक्तस्य जयं ददतु मे भृशम् ॥ ८ ॥

देवदानवगन्धर्वा यक्षराक्षसकिन्नराः ।
दण्डयात्राप्रसक्तस्य जयं ददतु मे भृशम् ॥ ९ ॥

एवं पठंस्ततो यायात्तूर्णं शत्रुजिघांसया ।
उत्प्लुत्योत्प्लुत्य धावत्सु खड्गखेटकपाणिषु ॥१०॥

अग्रतो युद्धनद्धेषु योधमुख्येषु सत्वरम् ।
पार्श्वतः प्रासहस्तेषु पर्यटत्सु च सादिषु ॥ ११ ॥

परितो राजपुत्रेषु गच्छत्सु घनवाजिभिः ।
पुरतो वाद्यघोषेण मूर्छिते तु दिगन्तरे ॥ १२ ॥

पश्चाद्दुन्दुभिसन्दोहे ताड्यमानेऽतिबन्धुरम् ।
अश्वहेषारवैर्दन्तिबृंहितैरतिभीषणैः ॥ १३ ॥

पदातिसिंहनादैश्च कम्पिते भुवनत्रये ।
जैत्रस्तदा नृपश्शत्रुपुरङ्गच्छेन्महाबलः ॥ १४ ॥

एवं यः कुरुते दण्डयात्रां शास्त्रोक्तमार्गतः ।
सोऽरातिं सगजं साश्वं सपदातिं सबान्धवम् ॥ १७ ॥

जित्वा रणाङ्गणे तस्य पुरं राष्ट्रं वशं नयेत् ।
इत्येवं दण्डयात्राया विधिर्विधुमुखीरितम् ॥

सङ्ग्रहेण मया सम्यक्किमन्यच्छ्रोतुमिच्छसि ॥ १९ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
दण्डयात्रास्वरूपकथनन्नाम
एकोनत्रिंशदुत्तरशततम पटल ॥

---

॥ अथ त्रिंशदुत्तरशततमः पटल ॥

॥ मृगयालक्षणस्वरूपकथनम् ॥

पार्वती—शितिकण्ठ शिव स्वामिन् शर्व सर्वज्ञ शङ्कर ।
दण्डयात्राविधानम्मे त्वया सम्यङ्निरूपितम् ॥ १ ॥

इदानीं श्रोतुमिच्छामि राज्ञा मृगयया कथम् ।
क्रीडितव्यं वद क्षिप्रं यद्यस्ति मयि ते कृपा ॥ २ ॥

श्रीशिवः—साधु साधु वरारोहे यन्मां त्वं परिपृच्छसि ।
तत्तेऽहं सम्प्रवक्ष्यामि शृणु कल्याणि सादरम् ॥ ३॥

सार्वभौमो नरपतिर्मण्डलस्येश्वरोऽपि वा ।
पुरे जनपदे चैव मृगबाधानिवृत्तये ॥ ४ ॥

परराष्ट्रप्रसिद्ध्यर्थं बलपुष्ट्यर्थमात्मनः ।
मृगयासक्तचित्तस्स्यात्पार्थिवस्तु पदे पदे ॥ ५ ॥

आमुक्तकञ्चुकपदः कक्ष्यासन्नद्धमध्यमः ।
सखड्गचर्मकवचस्सादिवेषधरस्तदा ॥ ६ ॥

तुङ्गं तुरङ्गमारुह्य नर्तयंस्तं पुनः पुनः ।
वन्दिभिर्नन्द्यमानस्सन्नुद्बाहुभिरुदारधीः ॥ ७ ॥

हयारूढैरतिप्रौढैर्मृगयायां मृगेक्षणे ।
राजपुत्रैर्महावीर्यैस्सवयोभिस्समन्वितः ॥ ८ ॥

कैश्चित् समीरविचलत्तमालतरुसन्निभैः ।
कैश्चिदर्जुनदोर्दण्डसहस्रान्तरनिस्सृतैः ॥ ९ ॥

शोभमानैरतिश्यामैः प्रवाहैरिव नार्मदैः ।
कैश्चिद्भूकम्पचलितैस्स्थितैस्स्तम्भैरिवाञ्जनैः ॥ १० ॥

कैश्चिद्भ्रमद्भिर्यमराड्दूतैरिव भयङ्करैः ।
कैश्चिच्च कालरात्रीणां यामौघैरिव लक्षितैः ॥ ११ ॥

कैश्चिद्वन्यैरिवैकत्र समेतैस्सैरिभैरिव ।
कैश्चिन्मयूरपिञ्छात्तकरैः क्षपणकैरिव ॥ १२ ॥

कैश्चिद्बालैरिव श्यामकाकपक्षधरैरपि ।
कैश्चिद्धनुर्धरैः कैश्चित्कूटमुद्गरपाणिभिः ॥ १३ ॥

कैश्चिदानायिभिः कैश्चिद्यष्ट्युल्लासितमुष्टिभिः ।
उत्पतद्भिः पतद्भिश्च गर्जद्भिरतिसम्भ्रमम् ॥ १४ ॥

उपास्यमानश्शबरैस्समवर्तीव किङ्करैः ।
श्वभिः कतिपयैरेणाकान्तावैधव्यदायिभिः ॥ १५ ॥

दंष्ट्राकराळवदनैर्विलोककभयङ्करैः ।
अयोमयायतस्निग्धशृङ्खलाबद्धकन्धरैः ॥ १६ ॥

कैश्चिच्चैव शुनीबृन्दैस्सिंहीबृन्दैरिव स्थितैः ।
स्वभर्तॄणां लुब्धकेभ्यो भयं याचितुमुद्यतैः ॥ १७ ॥

अनुयाता महारण्यं तरण्यम्शुविवर्जितम् ।
क्वचिच्छ्रीशैलतटवदुल्लसन्मल्लिकार्जुनम् ॥ १८ ॥

क्वचिद्विराजत्पनसं सुग्रीवकपिसैन्यवत् ।
क्वचित्सल्लँक्ष्यमाणाक्षं प्रिये स्यन्दनबृन्दवत ॥ १९ ॥

क्वचिद्बहुलताख्यातमपर्णे कृष्णपक्षवत् ।
क्वचिल्लतागृहद्वारक्रीडत्क्रोडकुलान्वितम् ॥ २० ॥

क्वचित् पल्वलपङ्कान्तर्विलुठद्घोरसैरिभम् ।
क्वचिद्विहरमाणैणमाणवातिमनोहरम् ॥ २१ ॥

क्वचिच्छिखण्डितुण्डाग्रखण्ड्यमानभुजङ्गमम् ।
क्वचिद्दिक्षु प्रविचलत्तरक्षुशतभीषणम् ॥ २२ ॥

क्वाचिद्गिरिदरीसुप्तकालव्यालभयङ्करम ।
क्वचित् करिकराकृष्टिचलच्चलदळद्रुमम ॥ २३ ॥

क्वचिच्छैलतटक्रीडत्सिंहसंहतिसङ्कुलम् ।
क्वचिन्निस्तुलकस्तूरीमृगगन्धातिमञ्जुलम् ॥ २४ ॥

क्वचिच्चामरसङ्काशैर्हैचमरीरोमभासुरम् ।
प्रविश्य नृपतिर्व्याधान् योधांश्च प्रेषयेत्तदा ॥ २५ ॥

अथ राज्ञा प्रेषितास्ते व्याधा योधसमन्विताः ।
कैश्चिच्चिह्नैर्मृगौकांसि सूचयन्तः परस्परम् ॥ २६ ॥

विचरेयुस्तत्र तत्र नानाऽऽयुधधरा वने ।
इतः पृषतरोमन्थच्युतबालतृणाङ्कुराः ॥ २७ ॥

इतः पोत्रिकुलोत्खातधरित्रीपांसुराशयः ।
इतः करिमदाघ्राणलोलरोलम्बसंहतिः ॥ २८ ॥

इतो नृत्यद्बर्हिबर्हविस्रस्ताश्चन्द्रकच्छदाः ।
इतः कलभसृक्वाग्रस्रुता मृदुमृणालिकाः ॥ २९ ॥

इतस्तरुपतच्छुष्कपत्रमर्मरनिस्वनः ।
कैश्चित्तरूणां शिखराण्यारुह्यन्तां समन्ततः ॥ ३० ॥

कैश्चिद्भटैर्विलोक्यन्तां दिशश्च विदिशो भृशम् ।
आकर्ण्यन्तां वाशितानि भीतानां मृगपक्षिणाम् ॥३१॥

सर्वैर्धनूंषि गृह्यन्तां सन्धीयन्तां शिताश्शराः ।
सर्वैरवहितैरेव स्थीयन्तामप्रमादतः ॥ ३२ ॥

श्वानश्चैव विमुच्यन्तां कल्प्यन्तां वागुरा भृशम् ।
इत्येवं भाषमाणानां शबराणां ससम्भ्रमम् ॥ ३३ ॥

तुमुलध्वनिना तस्मिन् प्रतिध्वनति कानने ।
बद्धगोधाङ्गुलित्राणो धनुरादाय सत्वरम् ॥ ३४ ॥

मौर्वीमुर्वीपतिस्सम्यङ्नादयन्नखरैः खरैः ।
सन्धाय काण्डान् कोदण्डे काकतुण्डाभिधांस्तु तैः॥३५

शिखण्डिनः खण्डयित्वा क्षुरप्रैः क्षिप्रगामिभिः ।
तरक्षून् मारयित्वाऽथ भल्लैर्भल्लूकसंहतिम् ॥ ३६ ॥

संहृत्य दन्तिनः कुन्तैः कुन्धित्वा निशितैर्नृपः ।
तोमरैश्चमरान् विध्वा तोत्रैर्हत्वाऽथ पोत्रिणः ॥ ३७ ॥

एणान् वेणुसमुद्भूतैस्ताडयित्वा शितैश्शरैः ।
संवर्ते सर्वसंहारी क्रुद्धो रुद्र इवाद्रिजे ॥ ३८ ॥

मांसलुब्धैस्तथा लुब्धैस्सहितोऽतिभयङ्करः ।
शतशश्छिन्नभिन्नाङ्गान् वराहान् महिषान् रुरून् ॥३९

कांश्चित् कैश्चिद्ग्राहयित्वा जीवग्राहं शिखण्डिनः ।
शाखामृगान्मृगानन्यान् भल्लूकादीन्महीपतिः ॥ ४० ॥

ग्राहयित्वा भटैः कैश्चिज्जयघोषपुरस्सरम् ।
पुनस्संप्राप्य नगरं हिंसोद्भूताघशान्तये ॥ ४१ ॥

दत्वा गोभूहिरण्यानि प्रस्थाप्य स्वानुयायिनः ।
राजपुत्रानतिश्रान्तान् तत्परं समलङ्कृतम् ॥ ४२ ॥

शुद्धान्तं प्रविशेद्राजा रमणीमणिभिः प्रिये ।
इत्येवं मृगयायास्ते विहारः कथितो मया ॥
सङ्क्षेपेण सरोजाक्षि किमन्यच्छ्रोतुमिच्छसि ॥ ४३ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
मृगयास्वरूपनिरूपणन्नाम
त्रिंशदुत्तरशततमः पटलः ॥



॥ अथैकत्रिंशदुत्तरशततमः पटलः ॥

॥ रथनिर्माणस्वरूपकथनम् ॥

पार्वती—देवदेव विरूपाक्ष शिव सर्वज्ञ शङ्कर ।
श्रुतं मया भवद्वक्त्रान्मृगयालक्षणं विभो ॥ १ ॥

इदानीं श्रोतुमिच्छामि युद्धार्हरथलक्षणम् ।
रथिकस्य स्वरूपञ्च तन्मे विस्तरतो वद ॥ २ ॥

शिवः— साधु साधु त्वया देवि यत्पृष्टञ्चारुहासिनि ।
तत्तेऽहं सम्प्रवक्ष्यामि शृणु कल्याणि सादरम् ॥ ३ ॥

सार्वभौमो नरपतिर्मण्डलस्येश्वरोऽपि वा ।
युद्धे विजयसिद्ध्यर्थं साम्राज्यस्थैर्यसिद्धये ॥ ४ ॥

शोभार्थं सर्वसैन्यानां रथसम्पादनोद्यतः ।
शिल्पिनं शिल्पशास्त्रज्ञं समाहूयाम्बरादिभिः ॥ ५ ॥

बहुमान्य रथं रम्यं कुरुष्वेति नियोजयेत् ।
ततस्त्वष्टा स सर्वेशं विघ्नेशं विधिपूर्वकम् ॥ ६ ॥

सम्पूज्य तद्रथं रम्यन्निर्मातुं प्रारभेद्भृशम् ।
सारदारुभवैश्श्लक्ष्णैस्सुतष्टैः फलकैर्नवैः ॥ ७ ॥

पञ्चहस्तायतं तावद्विस्तृतं चतुरश्रकम् ।
अष्टाश्रं वा कारयित्वा पीठमाधाररूपकम् ॥ ८ ॥

अयःपट्टैर्दृढीकृत्य तस्य कोणचतुष्टये ।
सचूडान् वर्तुलांस्तम्भान् विन्यस्य चतुरश्शुभान् ॥९॥

अष्टौ वाऽप्यष्टकोणेषु तेषामुपरि विन्यसेत् ।
फलकं शिखराकारं नानाधातुविचित्रितम् ॥ १० ॥

पुरोभागं विधायास्य रथस्य वरवर्णिनि ।
पार्श्वद्वयं पार्ष्णिभागं फलकैस्सारदारुजैः ॥ ११ ॥

नीरन्ध्रं घटयित्वाऽथ दृढमक्षं सलक्षणम् ।
तद्रथाधारफलकस्याधो विन्यस्य कीलकान् ॥ १२ ॥

शङ्कूनयोमयांस्तीक्ष्णान् सम्यग्विन्यस्य घट्टयेत् ।
ततस्तदक्षदार्वग्रयुगळे चक्रयुग्मकम् ॥ १३ ॥

अयःपट्टैरतिस्निग्धैर्दृढसंस्थगितनेमिकम् ।
संयोज्याक्षान्तयुगळे ह्ययोमयमणिद्वयम् ॥ १४ ॥

निखात्याक्षस्य मध्ये तु युगाधारमृजुं शिवे ।
कूबराख्यं दृढं स्निग्धं दारु विन्यस्य तस्य तु ॥ १५॥

अग्रे युगं विनिक्षिप्य तत्प्रान्तद्वितये पुनः ।
अश्वानश्वतरौ वाऽपि वृषौ वा योजयेत् प्रिये ॥ १६॥

एवं विधाय सर्वत्र छादयेत् स्वर्णपट्टकैः ।
राजतैर्वा शुभैः पट्टैः पट्टैर्वा धातुचित्रितैः ॥ १७ ॥

ततस्तद्वलभौ हंसान् बर्हिणश्च मनोहरान् ।
सौवर्णान् राजतान् वाऽपि विन्यस्य परितः प्रिये ॥१८॥

विन्यसेत्तस्य शिखरे ध्वजं गरुडचिह्नितम् ।
अभीष्टदेवताचिह्नमथ वा विन्यसेद् ध्वजम् ॥ १९ ॥

एवं सुशिल्पिना सम्यक्कल्पिते तु रथोत्तमे ।
चापबाणकृपाणैश्च प्रासतोमरयष्टिभिः ॥ २० ॥

चक्रशूलकुठारैश्च खेटमुद्गरकम्पणैः ।
अन्यैश्च युद्धसन्नद्धैरायुधैरतिभीषणैः ॥ २१ ॥

वज्राशनिसमप्रख्यैस्सर्वतस्समधिष्ठिते ।
रथे तु रथिनं धीरं नानायुद्धविशारदम् ॥ २२ ॥

क्षिप्रहस्तं पृथुस्कन्धं सुदृढव्यूढकङ्कटम् ।
आबद्धकक्ष्यमामुक्तपादकञ्चुकमद्रिजे ॥ २३ ॥

सर्वशस्त्रास्त्रकुशलं परमर्मज्ञमुद्धतम् ।
प्रख्यातपौरुषं वीरं संस्थाप्य तदनन्तरम् ॥ २४ ॥

तस्यानुरूपं रथिनस्सारथिं कल्पयेन्नृपः ।
युद्धोपस्करसन्नद्धमुपायापायवेदिनम् ॥ २५ ॥

अश्वानां हृदयज्ञञ्च कस्मिंश्चिद्युद्धसङ्कटे ।
आत्मानं रथिनं चाश्वाञ्छक्तं रक्षितुमञ्जसा ॥ २६ ॥

संस्थाप्य कूबरे पश्चाच्चक्ररक्षाकरावुभौ ।
पूर्ववद्युद्धसन्नद्धौ कल्पयेत् नृपपुङ्गवः ॥ २७ ॥

अथ वाऽन्यप्रकारेण कारयेद्रथमुत्तमम् ।
त्रिकक्ष्यं पञ्चकक्ष्यं वा मनोज्ञशिखरान्वितम् ॥ २८ ॥

अनर्घरत्नखचितं नानाधातुविचित्रितम् ।
चित्रध्वजपताकाढ्यं हंसबर्हिणचित्रितम् ॥ २९ ॥

सर्वशस्त्रास्त्रसम्पन्नं चतुश्चक्रं चतुर्हयम् ।
महारथेन रथिना तथा सारथिनाऽन्वितम् ॥ ३० ॥

चक्ररक्षाकरैश्चापि समेतं सर्वमङ्गलैः ।
एवंविधान् बहून्राजा रथान् सम्पाद्य शात्रवान् ॥ ३१ ॥

हत्वा रणाङ्गणे शश्वत् पालयेदखिलाः प्रजाः ।
रथो मनोरथान् सर्वान् ददात्याजौ महीभृतः ॥ ३२ ॥

रथेनैकेन यच्छक्यं न तच्छक्यं बलायुतैः ।
नेत्रहीनं यथा वक्त्रं चन्द्रहीनं यथा नभः ॥ ३३ ॥

यथा सरः पद्महीनं सैन्यञ्चैव तथाऽरथम् ।
ऐन्द्रेण हि पुरा रामो रथेन रथिनां वरः ॥ ३४ ॥

अजेयमजयत् तूर्णं रावणं रणमूर्धनि ।
अन्ये चैव महीपाला ययातिनहुषादयः ॥ ३५ ॥

रथैरेव महीं कृत्स्नां जित्वा कीर्तिञ्च लेभिरे ।
कथं वा जयसिद्धिस्स्यात् युद्ध्यतस्तु रथं विना ॥ ३६ ॥

अरथस्य नृपालस्य राजत्वं वा कथं भवेत् ।
तस्मादावश्यकतया राजभिर्जयकांक्षिभिः ॥ ३७ ॥

रथिसारथिसंयुक्ताः सम्पाद्या बहवो रथाः ।
एवं ते रथनिर्माणक्रमस्तल्लक्षणादिकम् ॥
कथितं संग्रहेणैव किमन्यच्छ्रोतुमिच्छसि ॥ ३८ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
रथनिर्माणनिरूपणन्नाम
एकत्रिंशदुत्तरशततमः पटलः ॥



॥ अथ द्वात्रिंशदुत्तरशततमः पटलः ॥

॥ गजोत्पत्त्यादिलक्षणस्वरूपकथनम् ॥

पार्वती–भगवन् भव सर्वज्ञ त्वन्मुखाद्रथलक्षणम् ।
सम्यक्श्रुतमिदानीं मे गजोत्पत्तिक्रमं विभो ॥ १ ॥

जातिभेदाल्लक्षणानि तत्प्रभावं यथाक्रमम् ।
वक्तुमर्हसि देवेश यद्यस्ति करुणा मयि ॥ २ ॥

श्रीशिवः–साधु साधु वरारोहे यन्मां त्वं परिपृच्छसि ।
तत्तेऽहं सम्प्रवक्ष्यामि शृणुष्व सुसमाहिता ॥ ३ ॥

पुरा मार्ताण्डकायोत्थपांसुभिर्निर्मिता गजाः ।
यस्मात्तस्मात्तदारभ्य क्रीडन्ते पांसुभिर्गजाः ॥ ४ ॥

सपक्षाः कामरूपास्ते विचरन्तो महीतले ।
एकदा हिमवत्पार्श्वे महान्यग्रोधशाखिनः ॥ ५ ॥

शाखामारुरुहुस्सर्वे तद्भारेण प्रपीडिता ।
सा छिन्ना न्यपतद्भूमौ ततस्तन्मूलमाश्रितः ॥ ६ ॥

ऋषिर्दीर्घतपा नाम तान् शशाप मतङ्गजान् ।
अद्यप्रभृति ते यूयं पक्षहीना भविष्यथ ॥ ७ ॥

वाहनत्वं नरेन्द्राणां गमिष्यथ न संशयः ।
ऋषिणैवं गजाश्शप्ताः पक्षहीना महीतले ॥ ८ ॥

नृपाणां वाहनत्वञ्च सङ्गतास्सर्वमङ्गळे ।
भद्रा मन्द्रा मृगा मिश्रा इति नागाश्चतुर्विधाः ॥ ९ ॥

कृतत्रेताद्वापरेषु भद्रमन्दमृगाभिधाः ।
गजाः कलौ युगे मिश्रास्तत्तल्लक्षणलक्षिताः ॥ १० ॥

मुखे सुरभिनिश्वासस्ताम्रजिह्वोष्ठतालुकः ।
प्रतिभानेषु विपुलश्चारुपृष्ठायताननः ॥ ११ ॥

पुरस्तादुन्नतो देवि पश्चादवनतश्च यः ।
धनुर्विततवंशश्च समपादरदश्रुतिः ॥ १२ ॥

विंशत्या च नखैर्युक्तश्शुभगात्रश्शुभेक्षणः ।
दवात् सिह्माद्विद्युतो वा न बिभेत्यङ्कुशादपि ॥ १३ ॥

अन्वर्थवेदी शूरश्च क्षमावान्न तु कर्कशः ।
कल्याणमेधस्तेजस्वी यस्स भद्रः प्रकीर्तितः ॥ १४ ॥

यस्य स्थूले विषाणे द्वे दीर्घ ओष्ठश्च रोमशः ।
कूर्मसंस्थानदेहश्च मन्दो मन्दगतिक्रमः ॥ १५ ॥

निमील्य लोचने यश्च निद्रान्ध इव गच्छति ।
हस्तिन्यामनुरक्तश्च धीरोऽत्यन्तजितश्रमः ॥ १६ ॥

मन्दबुद्धिर्निर्भयो यस्स गजो मन्द उच्यते ।
तनुत्वक्कर्णपादो यस्तन्वास्यस्तनुमेहनः ॥ १७ ॥

तनुवंशोदरश्चैव दीर्घगात्रविषाणवान् ।
दीर्घजिह्वो दीर्घरोमा पुरस्ताच्चापि सन्नतः ॥ १८ ॥

निपाने गोचरस्थाने सज्जायां चापि निर्वृतः ।
रूपाभिभवशङ्की च नित्यमेवानवस्थितः ॥ १९ ॥

ह्रस्वश्रवणलाङ्गूलो दीर्घं विक्रमते क्रमैः ।
पुनःपुनश्च विनदन् दुर्मतिश्चैव धावति ॥ २० ॥

बह्वाशी बहलीकश्च दण्डपातेषु चाक्षमः ।
गच्छेत्प्रकृष्टवेगस्सन् भारं प्राप्य न सीदति ॥ २१ ॥

यो वशी सान्त्ववचने रुष्टो भवति ताडनैः ।
एवमादिगुणोपेतो यो गजस्स मृगस्स्मृतः ॥ २२ ॥

भद्रमन्दमृगेभानां लक्षणैर्लक्षितो गजः ।
मिश्र इत्युदितो देवि गजशास्त्रविशारदैः ॥ २३ ॥

मूर्तिमान् विजयो राज्ञां कुञ्जरा मदविह्वलाः ।
प्रत्यक्षदेवता नागा देववाह्या यतस्ततः ॥ २४ ॥

विनयग्रहणे शिष्या भृत्याश्छन्दोऽनुवर्तने ।
विक्रीताश्च प्रदत्ताश्च यान्ति तूष्णीन्तु दासवत् ॥ २५॥

प्राकारगोपुराट्टालकवाटोद्घाटनादिषु ।
भञ्जने मर्दने चैव नागा वज्रोपमास्स्मृताः ॥ २६ ॥

मोक्षात् परा गतिर्नास्ति नास्ति विद्या परा श्रुतेः ।
नास्ति विष्णोः परं दैवं नास्ति यानं गजाद्वरम् ॥२७

यद्वद्वनमसिंहं तु यद्वद्राष्ट्रमराजकम् ।
*यद्वच्छास्त्रमशस्त्रास्त्रं तद्वत् सैन्यमकुञ्जरम् ॥ २८ ॥

एकशस्त्रप्रहारेण म्रियतेऽश्वो नरोऽपि च ।
सहेन्महाप्रहाराणां शतं युद्धेषु वारणः ॥ २९ ॥

रक्षन्ति पक्षं मुदितास्स्वकार्यं रणमूर्धनि ।
मृद्नन्ति सैन्यं कुपिताः परेषाल्लीँलया गजाः ॥ ३० ॥

वल्गन्ति येषां भूपानां पुरतो न महागजाः ।
कथं तेषां जयो देवि राजत्वं वा कथं भवेत् ॥ ३१ ॥

जयत्येकोऽपि मातङ्गष्षट्सहस्राणि वाजिनाम् ।
यस्मात्तस्माद्गजा भूपैस्सङ्ग्राह्या विजयेप्सुभिः ॥३२॥

शरतोमरचक्रैश्च गजस्कन्धहता नराः ।
क्षणात्सर्वे प्रयान्त्येव तस्मात्पूज्यतमा गजाः ॥ ३३ ॥

एवंविधान् गजान् जात्यान् वनादानाय्य पार्थिवः ।
शूरानारुह्य तान् कुर्याद्वशगानतिनिर्भरम् ॥ ३४ ॥

---

* यद्वत्क्षत्रं इति युक्तः पाठः ।

इत्येवं ते गजोत्पत्तिजातिलक्ष्मादिकं प्रिये ।
सङ्ग्रहेणाद्य कथितं किमन्यच्छ्रोतुमिच्छसि ॥ ३५ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
गजोत्पत्त्यादिस्वरूपकथनन्नाम
द्वात्रिंशदुत्तरशततमः पटलः ॥

---

॥ अथ त्रयस्त्रिंशदुत्तरशततमः पटलः ॥

॥ वाज्युत्पत्तिलक्षणादिस्वरूपकथनम् ॥

पार्वती—शिव सर्वज्ञ सर्वेश गजोत्पत्त्यादिकं श्रुतम् ।
इदानीं श्रोतुमिच्छामि वाजिनामपि सम्भवम् ॥ १ ॥

तज्जातिभेदांश्चिह्नानि प्रभावञ्चाविशेषतः ।
वक्तुमर्हसि तत्वेन यद्यस्ति करुणा मयि ॥ २ ॥

श्रीशिवः—कल्याणि यत्त्वया प्रश्नः कृतो लोकहितेच्छया ।
प्रश्नानुरूपं वक्ष्यामि शृणूत्तरमगात्मजे ॥ ३ ॥

अयोनिजा योनिजाश्चेत्यश्वाः प्रोक्ता द्विधा बुधैः ।
जगत्स्रष्टुं पुरा देवि जुह्वतस्तु प्रजापतेः ॥ ४ ॥

होमभस्मनि सञ्जाता ह्यश्वाश्चाश्वतराः प्रिये ।
तस्मादद्यापि भसितं दृष्ट्वा तस्मिल्लुठन्ति ते ॥५॥

पुनर्दक्षाध्वरे धूमादपतन्नश्रुबिन्दवः ।
लोचनेभ्यो विश्वसृजः कलुषाः कतिचित् प्रिये ॥६॥

स कृताञ्जलिरङ्गैस्तान् जग्राह मुदितो भृशम् ।
तदङ्गेभ्यस्समुत्पन्ना वाजिनः कतिचित्तदा ॥ ७ ॥

मुखाद्भुजाभ्यां स्कन्धाभ्यां पादाभ्याञ्च तथाऽभवन् ।
पयोनिधौ मथ्यमाने हयोऽमृतसहोदरः ॥ ८ ॥

जात उच्चैश्श्रवा नाम महामेघौघनिस्वनः ।
यियासोरम्भसस्तस्माद्बलिर्जग्राह पश्चिमौ ॥ ९ ॥

पादौ क्षिप्त्वा तमश्वोऽसौ ययौ तूर्णं विहायसा ।
तदा बलेर्मुष्टिबन्धात् सक्थ्न वैकल्यमागतः ॥ १० ॥

स्थातुं न शक्नुवन्त्येते तस्मादद्यापि वाजिनः ।
विश्रामयन्त्यधोत्क्षिप्य पादं पादेन पश्चिमम् ॥ ११ ॥

अयोनिजानामश्वानामेवमुत्पत्तिरीरिता ।
प्रजापतेस्सुतश्चोग्रो गतश्शापादुलूकताम् ॥ १२ ॥

मनोज्ञेन मृगी काचित् मनोज्ञा तेन सङ्गता ।
ततोऽण्डजाश्चित्ररूपास्सम्भूताः कतिचिद्धयाः ॥ १३ ॥

गन्धर्वेभ्यस्समुत्पन्ना वाजिनः केचन प्रिये ।
कथिता योनिजाश्चैते वाजिनो वरवर्णिनि ॥ १४ ॥

अयोनिजा योनिजाश्च पक्षयुक्ताः पुरा हयाः ।
तानम्बुदगणैस्साकं चरतो वीक्ष्य सर्वदा ॥ १५ ॥

असहिष्णुरथोवाच शालिहोत्रं शतक्रतुः ।
छिन्धि पक्षानमीषां त्वं यथा स्युर्वाहनानि मे ॥१६॥

इषीकास्त्रेण सोऽप्येषां पक्षांस्तत्प्रीतयेऽच्छिनत् ।
ततः प्रसादितस्तैस्तु प्रादाद्वरमिमं मुनिः ॥ १७ ॥

युष्मत्पक्षोपमो वेगश्चरणानां भविष्यति ।
अमराणां नृणां यूयं वाहनत्वं गमिष्यथ ॥ १८ ॥

एवमुक्तास्तदारभ्य वाहनत्वं ययुर्हयाः ।
ब्राह्मणक्षत्रियविशां शूद्राणाञ्चैव लक्षणैः ॥ १९ ॥

ज्ञेया हयोत्तमास्तेषु पूर्वपूर्वश्शुभावहः ।
ब्राह्मणः शुक्लवर्णोऽश्वः क्षत्रियो लोहितः स्मृतः ॥२०

वैश्यः पीताभवर्णस्स्यात् शूद्रस्स्यात् कृष्णवर्णकः ।
ब्राह्मणाः क्षेमकृत्येषु क्षत्रिया युद्धकर्मसु ॥ २१ ॥

वैश्या द्रव्यार्जने शूद्राश्चान्यकार्येषु सिद्धिदाः ।
सदा सुप्ता भवन्त्येते वाजिनो भूतलेऽद्रिजे ॥ २२ ॥

जाग्रत्यायोधने प्राप्ते कोऽन्यस्तेभ्यः प्रियस्सखा ।
परिमाणं तुरङ्गाणां वक्ष्यामि क्रमशोऽधुना ॥ २३ ॥

अपाङ्गात् पुच्छमूलं तु तिर्यगश्वं प्रमाणयेत् ।
खुरान्तात्तत्ककुद्यावदूर्ध्वमानं समीक्षयेत् ॥ २४ ॥

उत्सेधेन चतुर्हस्तः पञ्चहस्तायतः प्रिये ।
उत्तमोऽश्वस्स्मृतोऽस्य स्यात् मुखं द्वाविंशदङ्गुलम् ॥२५

ग्रीवा समायताऽस्य स्यात् षट्पञ्चाशन्मिताङ्गुला ।
उरःपृष्ठं कटिश्चैव मुखतुल्यं समीरितम् ॥ २६ ॥

कर्णौ सप्ताङ्गुलौ प्रोक्तौ तालुयुग्मं षडङ्गुलम् ।
ऋजुस्सूक्ष्मः पुच्छदण्डः कथितो विंशदङ्गुलः ॥ २७ ॥

द्वाविंशदङ्गुलोत्सेधे जङ्घे चैव प्रकीर्तिते ।
सप्ताङ्गुलः खुरः प्रोक्तो विद्वद्भिस्तूत्तमे हये ॥ २८ ॥

एको ललाटे द्वौ मूर्ध्नि द्वौ द्वावश्वस्य पार्श्वयोः ।
द्वौ च वक्षसि विज्ञेयावपाने चैक एव तु ॥ २९ ॥

ध्रुवावर्ता दश ह्येते वाजिनश्शुभदायकाः ।
यस्तु सार्धत्रिहस्तैस्स्यादुन्नतश्च चतुष्करैः ॥ ३० ॥

आयतस्स तु विज्ञेयो हयो मध्यम इत्युमे ।
विंशत्यङ्गुलमानं स्यान्मुखमस्य वरानने ॥ ३१ ॥

ग्रीवाऽस्य कथिताऽश्वस्य षट्चत्वारिंशदङ्गुला ।
अष्टादशाङ्गुलोत्सेधे जङ्घे चास्य प्रकीर्तिते ॥ ३२ ॥

उरोजाताश्च कीलाश्च हयाश्चारट्टदेशजाः ।
कथिता मध्यमा देवि सिन्धुदेशनदीभवाः ॥ ४२ ॥

शबलाश्चार्यजाताश्च तथा सारस्वता हयाः ।
अधमाष्टङ्कणोत्थाश्च ये च प्राग्दक्षिणोद्भवाः ॥ ४३ ॥

हेषिते स्खलिते भीते तथा चोन्मार्गगामिनि ।
कुपिते भ्रान्तचित्ते च षट्सु दण्डं निपातयेत् ॥ ४४ ॥

लघुत्वं पातृदोषेण सादिदोषेण मन्दता ।
दौर्बल्यं स्वामिदोषेण स्वदोषो नास्ति वाजिनाम् ॥ ४५

महाघोणा महाकाया महोरस्का महास्वनाः ।
स्निग्धाङ्गास्सर्वदा ये च तेषामायुर्भवेद्बहु ॥ ४६ ॥

कर्णाग्रे पीडिते येषां सिन्दूराभस्य दर्शनम् ।
शोणितस्य भवेत् क्षिप्रं ते हयाश्चिरजीविनः ॥ ४७ ॥

न विष्किरन्ति ये घासं सुभक्ष्या ह्रस्वमेहनाः ।
महाशिरोललाटाश्च वाजिनश्चिरजीविनः ॥ ४८ ॥

या सङ्ख्या रोमकूपानां वाहकस्य हयस्य तु ।
तावद्वर्षं वसेत् स्वर्गे हयपृष्ठे हतो नरः ॥ ४९ ॥

यं लोकं वाजिपृष्ठे तु हतो गच्छति मानवः ।
तं लोकं वाजिमेधे च प्राप्तुं शक्नोति न क्वचित् ॥५०

अश्वा यस्य जयस्तस्य यस्याश्वास्तस्य मेदिनी ।
अश्वा यस्य यशस्तस्य यस्याश्वास्तस्य काञ्चनम् ॥५१

निपत्य युधि वेगेन मिषतां सर्वधन्विनाम् ।
शत्रून्निहत्य यात्येकश्शूरो वाजी प्रभावतः ॥ ५२ ॥

शस्त्रैर्विभिन्नदेहोऽपि श्रान्तोऽपि गुरुभारतः ।
न मुञ्चति रणे नाथमतः कोऽन्यो हयात् सुहृत् ॥५३॥

आमूलमन्दिरं यस्य पुरे सन्ति न वाजिनः ।
गृहभित्तिषु लेख्यास्ते तेन राज्ञोऽघशान्तये ॥ ५४ ॥

यस्सन्नद्धो हयो रावमूर्ध्ववक्त्रः करोति वै ।
खुराग्रेण लिखन्भूमिं स शंसति रणे जयम् ॥ ५५ ॥

यः करोत्यसकृन्मूत्रं पुरीषं वाऽऽशु मुञ्चति ।
स शंसति पराभूतिमत्यन्तं यश्च दुर्मनाः ॥ ५६ ॥

निष्कारणं निशान्ते यो हेषारावं करोति वै ।
परचक्रागमाशंसी स विज्ञेयो हयो बुधैः ॥ ५७ ॥

पुलकाङ्कितपुच्छो यो भवेद्वै यस्य घोटकः ।
स शंसति ध्रुवन्तस्य स्थिरस्यापि प्रयाणकम् ॥ ५८ ॥

स्फुलिङ्गा यस्य जायन्ते पुच्छतोऽश्वस्य वह्निजाः ।
निर्गच्छन्तः प्रभोर्नाशं प्रशंसन्ति निशागमे ॥ ५९ ॥

शक्यमश्वसहस्रेण कृत्स्नाञ्जेतुं वसुन्धराम् ।
तस्मादावश्यकतया पार्थिवैर्जयकांक्षिभिः ॥ ६० ॥

सङ्ग्राह्यास्तुरगा देवि साम्राज्यस्थैर्यसिद्धये ।
इत्येवं ते समाख्यातमश्वोत्पत्त्यादिकं प्रिये ।
सङ्ग्रहेण सरोजाक्षि किमन्यच्छ्रोतुमिच्छसि ॥ ६१ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
अश्वोत्पत्तिस्वरूपनिरूपणन्नाम
त्रयस्त्रिंशदुत्तरशततमः पटलः ॥

—

॥ अथ चतुस्त्रिंशदुत्तरशततमः पटलः ॥

॥ पदातिस्वरूपादिलक्षणकथनम् ॥

पार्वती—भगवन् भव भर्गेश सर्वज्ञ करुणानिधे ।
अश्वोत्पत्त्यादिकं सर्वं श्रुतं त्वन्मुखपङ्कजात् ॥ १ ॥

इदानीं श्रोतुमिच्छामि पदातिभटलक्षणम् ।
वक्तुमर्हसि देवेश यद्यस्ति मयि ते कृपा ॥ २ ॥

श्रीशिवः—साधु साधु जगत्पूज्ये यन्मां त्वं परिपृच्छसि ।
तत्तेऽहं संप्रवक्ष्यामि यथावदनुपूर्वशः ॥ ३ ॥

ये सदन्वयसम्भूतास्सच्चारित्रा दृढव्रताः ।
ये सत्यवचसो नित्यं ते भटा इत्युदीरिताः ॥ ४ ॥

ये वै पितामहात् ख्याता ये पितुः ख्यातपौरुषाः ।
ये मातुलात् ख्यातवीर्यास्ते भटा इत्युदीरिताः ॥ ५ ॥

ये च युद्धे प्रतिभटतीक्ष्णखड्गाहतिव्रणैः ।
सञ्जातकिणकीर्णाङ्गास्ते भटा इत्युदीरिताः ॥ ६ ॥

युद्धे महति सन्नद्धे पुरो न्यस्तं पदं प्रिये ।
पश्चाद्ये न न्यसेयुस्ते भटवर्या इतीरिताः ॥ ७ ॥

युद्धेऽभिमुखमायान्तमुद्धतं वाजिनङ्गजम् ।
ये घ्नन्ति निर्भयाश्शीघ्रं ते भटा इत्युदीरिताः ॥ ८ ॥

स्वामिनं पार्ष्णिभागस्थं कृत्वा सेनाग्रवर्तिनः ।
ये युद्ध्यन्ति तृणप्रायप्राणास्ते वै भटास्स्मृताः ॥ ९ ॥

ये स्वामिनः पुरोभागे देव नः करकौशलम् ।
पश्येत्युदीर्य युध्यन्ते ते भटा इत्युदीरिताः ॥ १० ॥

पुत्रमित्रकलत्रादिस्वप्नप्रायाणि भामिनि ।
मत्वा ये युधि युध्यन्ते ते भटा इत्युदीरिताः ॥ ११ ॥

ये च स्वस्वामिकार्यार्थं बोधिपत्राग्रवच्चलम् ।
चित्तं सम्यक्समाधाय युद्धे बद्धस्पृहाः प्रिये ॥ १२ ॥

भवेयुरैकमत्येन ते भटा इत्युदीरिताः ।
ये च मार्गणसंम्बाधं सहन्ते वै महाहवे ॥ १३ ॥

त्यागवंत इवापर्णे ते भटा इत्युदीरिताः ।
ये नक्षत्रपदभ्रष्टाः क्षीणपुण्यास्सुरा इव ॥ १४ ॥

प्राप्तनानारसा देवि ते भटा इत्युदीरिताः ।
घना इव स्वच्छतरवारिधाराभिराद्रिजे ॥ १५ ॥

निरस्तराजहंसा ये ते भटा इत्युदीरिताः ।
विचित्रधनुषः काण्डान् विमुञ्चन्तोऽतिनिर्भरम् ॥ १६ ॥

न विगर्जन्ति ये देवि वारिदा इव ते भटाः ।
आबद्धकञ्चुकपदाः कक्ष्यासन्नद्धमध्यमाः ॥ १७ ॥

येच वक्षस्थलव्यूढकङ्कटास्ते भटास्स्मृताः ।
महोन्नता महोरस्का महास्कन्धा महौजसः ॥ १८ ॥

आजानुबाहवो ये च ते भटा इत्युदीरिताः ।
ये हेमकण्ठाभरणा येऽङ्गरागमनोहराः ॥ १९ ॥

ये चोष्णीषप्रतिफलन्माल्यास्ते वै भटाः स्मृताः ।
ये धनुर्बाणकुशला ये चासिषु कृतश्रमाः ॥ २० ॥

ये प्रासकुन्तनिपुणास्ते भटास्स्युर्वरानने ।
चर्मासिपाणयो ये च ये च वै चक्रपाणयः ॥ २१ ॥

ये गदापरिघोपेतास्ते भटा इत्युदीरिताः ।
ये च शूलधराश्शूरा ये च मुद्गरधारिणः ॥ २२ ॥

ये कुठारभृतो देवि ते भटा इत्युदीरिताः ।
एवंविधान् भटान् देवि बहून् सम्पादयेन्नृपः ॥ २३॥

सर्वशत्रुक्षयार्थाय सर्वत्र विजयाय च ।
त्रिविधं रथनागाश्वनामकं बलमस्ति यत् ॥ २४ ॥

तद्धि तुर्यबलाधीनमिति निर्णीतमद्रिजे ।
एवंविधानां शूराणां भटानां शतकस्य तु ॥ २५ ॥

एकं शूरतरं कुर्याद् भटमध्यक्षमद्रिजे ।
तस्य चान्दोलिकामश्वं छत्रं गीतविमिश्रिताम् ॥ २६॥

रम्यां * तूर्यकशान् देवि दद्यान्नृपतिसत्तमः ।
तत्परं तादृशानां तु शतेशानां शतस्य च ॥ २७ ॥

वीराधिवीरमेकं च कुर्यादधिपतिं प्रिये ।
स एव सेनापतिरित्युच्यते नयकोविदैः ॥ २८ ॥

तदधीनं बलं सर्वं हस्त्यश्वादिकमद्रिजे ।
कृत्वा तौर्यत्रिकादीनि बहुमानानि पार्थिवः ॥ २९ ॥

कल्पयित्वा वन्दिनश्च तोषयेद् भूषणादिभिः ।
एवं भटायुतयुतास्सेनाधिपतयश्शिवे ॥ ३० ॥

---

* तूर्यकळानिति प्राचीनमातृकापाठः ।

निवसन्ति त्रिचतुराश्चतुरा रणमूर्धनि ।
यस्य राज्ञो गृहद्वारि स भवेद्भूपुरन्दरः ॥ ३१ ॥

तस्मादावश्यकतया भटा एवं महीभुजा ।
साम्राज्यस्थैर्यसिद्ध्यर्थं सङ्ग्राह्यास्सर्वमङ्गळे ॥ ३२ ॥

एवं पत्तिस्वरूपं ते सङ्ग्रहेण मयेरितम् ।
यथावदरविन्दाक्षि किमन्यच्छ्रोतुमिच्छसि ॥ ३३ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
पदातिस्वरूपनिरूपणन्नाम
चतुस्त्रिंशदुत्तरशततमः पटलः ॥

---

॥ अथ पञ्चत्रिंशदुत्तरशततमः पटलः ॥

॥ चापादिलक्षणस्वरूपनिपणम् ॥

पार्वती—पदातिलक्षणं देव श्रुतं त्वन्मुखपङ्कजात् ।
इदानीं श्रोतुमिच्छामि चापाद्यायुधलक्षणम् ॥ १ ॥

शराणाञ्चैव लक्ष्यस्य धानुष्कस्य विशेषतः ।
तत्सर्वं वद देवेश यद्यस्ति करुणा मयि ॥ २ ॥

श्रीशिवः—देवि सम्यक्त्वया प्रश्नः कृतो लोकहितेच्छया ।
उत्तरं ते प्रवक्ष्यामि सादरं शृणु भामिनि ॥ ३ ॥

सर्वायुधमहामात्रं समस्तारिनिषूदनम् ।
चापमेवायुधं प्राहुर्धनुर्वेदविशारदाः ॥ ४ ॥

चापस्सद्वंशसम्भूतस्सद्गुणः पर्ववान् सदा ।
अहो कोटिद्वयाढ्योऽपि दूरं क्षिपति मार्गणान् ॥ ५ ॥

तादृग्गुणस्स वै तस्य विक्षेपे विद्विषां पुनः ।
कथं कमलपत्राक्ष नोपपद्येत कौशलम् ॥ ६ ॥

तस्माच्चापात्परं क्रूरमायुधं नास्ति भूतले ।
अतस्सम्पादितव्यास्ते पार्थिवैर्जयकांक्षिभिः ॥ ७ ॥

चापस्तु द्विविधः प्रोक्तो दैवो मानुष इत्युमे ।
उत्तमो देवचापस्स्यात् निकृष्टो मानुषः प्रिये ॥ ८ ॥

सार्धैस्तु पञ्चभिर्हस्तैरायतो नवपर्वयुक् ।
सप्तपर्वाऽथ वा सुज्यश्चापो दैव इतीरितः ॥ ९ ॥

चतुर्हस्तायतो देवि त्रिपर्वा पञ्चपर्ववान् ।
सप्तपर्वान्वितो वाऽपि सद्गुणो मानुषस्स्मृतः ॥ १० ॥

पुरा कृतयुगे देवि दैवश्चापो मया धृतः ।
मत्तः परशुरामेण धृतस्त्रेतायुगे पुनः ॥ ११ ॥

राघवेण धृतो देवि रावणस्य वधाय वै ।
द्वापराख्ये युगे रामाज्जामदग्न्यान्महाबलात् ॥ १२ ॥

धृतस्तु द्रोणविप्रेण तस्मात्पार्थेन धारितः ।
तस्मात्सात्यकिना देवि धृतो नान्यैर्नृपैर्धृतः ॥ १३ ॥

अहङ्कृतेतिनिपुणस्त्रेतायां रघुनन्दनः ।
द्वापराख्ये युगे द्रोणो दैवचापे वरानने ॥ १४ ॥

अन्ये तु पृथिवीपाला ययातिनहुषादयः ।
मानुषेणैव चापेन ह्यजयन्नखिलानरीन् ॥ १५ ॥

कथं कलियुगे राज्ञां दैवचापाधिकारिता ।
तस्मादार्यैर्नृपैर्धार्याश्चापा मानुष एव हि ॥ १६ ॥

चतुःपर्व च षट्पर्व चाष्टपर्व धनुस्त्यजेत् ।
अतिजीर्णमपक्वञ्च जातिदुष्टमथैव च ॥ १७ ॥

अपक्वं भङ्गमाप्नोति कार्कश्यन्त्वतिजीर्णकम् ।
जातिदुष्टेन धनुषा बान्धवैः कलहो भवेत् ॥ १८ ॥

शोकमोहकरं देवि समपर्वधनुस्स्मृतम् ।
गळग्रन्थिसमायुक्तं धनहीनकरं धनुः ॥ १९ ॥

एभिर्दोषैर्विनिर्मुक्तं तस्माद्धार्यं धनुर्नृपैः ।
एतदेव धनुर्दिव्यं मानुषञ्च महर्षयः ॥ २० ॥

कोदण्डमिति देवेशि कथयन्ति करास्थितम् ।
शार्ङ्गं पुनर्धनुर्दिव्यं विष्णोः परममायुधम् ॥ २१ ॥

वितस्तिभिस्सप्ताभिर्यदायतञ्च नतन्विधा ।
सर्वलक्षणसंयुक्तन्निर्मितं विश्वकर्मणा ॥ २२ ॥

न स्वर्गे न च पाताले न भूमौ वापि कस्यचित् ।
करे तद्वशमायाति मुक्त्वैकं पुरुषोत्तमम् ॥ २३ ॥

पुराऽनेनैव धनुषा हरिराजौ सुमालिनम् ।
मालिनं माल्यवन्तञ्च तूर्णं समजयत्प्रिये ॥ २४ ॥

वितस्तिभिस्सार्धषड्भिरायतं शार्ङ्गमद्रिजे ।
मानुषं तु विजानीयात् सर्वशत्रुक्षयोचितम् ॥ २५ ॥

प्रायो योऽयं धनुश्शार्ङ्गं गजारोहाश्वसादिनाम् ।
रथिनाञ्च पदातीनां वांशं धनुरुदीरितम् ॥ २६ ॥

गुणानां लक्षणं वक्ष्ये नानारूपं हिमाद्रिजे ।
पट्टसूत्रैर्गुणः कार्यः कनिष्ठाङ्गुलसम्मितः ॥ २७ ॥

धनुःप्रमाणो निस्सन्धिस्सम्यक्त्रिगुणतः प्रिये ।
तदभावे हरिण्या वा महिषाणां गवामपि ॥ २८ ॥

स्नायुभिर्वा गुणः कार्यस्तदभावे नृलोमभिः ।
तदभावे पक्ववंशत्वचा वा कारयेद् गुणम् ॥ २९ ॥

अर्कवृक्षत्वचा वाऽपि कुर्याद् गुणमगात्मजे ।
शराणां लक्षणं वक्ष्ये यथावदनुपूर्वशः ॥ ३० ॥

स्थूलन्न चातिसूक्ष्मञ्च न पक्कन्न कुभूमिजम् ।
हीनग्रन्थि विदीर्णञ्च वर्जयेदीदृशं शरम् ॥ ३१ ॥

पूर्णग्रन्थिसुपक्कञ्च कठिनं वर्तुळम्प्रिये ।
काण्डं धन्वी प्रगृह्णीयात् सूक्ष्मवंशसमुद्भवम् ॥ ३२ ॥

कङ्कहंसशुकानाञ्च पक्षा दक्षाश्च केकिनाम् ।
हंसानाङ्कुरराणाञ्च पक्षाश्चैव सुशोभनाः ॥ ३३ ॥

एकैकस्य शरस्यैव चतुःपत्राणि योजयेत् ।
षडङ्गुलप्रमाणेन पक्षभेदञ्च कारयेत् ॥ ३४ ॥

एवं वांशस्य चापस्य मार्गणे परिकल्पयेत् ।
दशाङ्गुलमिताः पक्षाश्शार्ङ्गचापस्य मार्गणे ॥ ३५ ॥

त्रिविधास्तु शराः प्रोक्ताः पुंस्त्रीषण्डप्रभेदतः ।
अग्रे स्थूला भवेन्नारी पश्चात् स्थूलो भवेत्पुमान् ॥ ३६

समं नपुंसकं विद्यात् तत्तत्कार्यञ्च वक्ष्यते ।
दूरपातो युवत्यास्स्यात्पुरुषाद् दृढभेदनम् ॥ ३७ ॥

नपुंसकात्स्वल्पभेद इत्येवं निर्णयस्त्रिधा ।
धारामुखः क्षुरप्रश्च गोपुच्छश्चार्धचन्द्रकः ॥ ३८ ॥

सूचीमुखश्च भल्लश्च वत्सदन्तो द्विभल्लकः ।
विकर्णो काकतुण्डश्चेत्येवं भेदा दशोरिताः ॥ ३९ ॥

धारामुखेन चर्मैकं क्षुरप्रेण च कार्मुकम्।
सूचीमुखेन कवचमर्धचन्द्रेण मस्तकम् ॥ ४० ॥

भल्लेन हृदयं छिन्द्याद्द्विभल्लेन गुणं शरम्।
लौहं तु काकतुण्डेन लक्ष्यं गोपुच्छकेन च ॥ ४१ ॥

स्वस्वनामसमाकारा भवेयुश्चाप्यमी शराः।
सर्वलोहाश्च ये बाणा नाराचास्ते प्रकीर्तिताः ॥ ४२ ॥

पञ्चभिः पृथुलैः पक्षैर्युक्तास्सिद्ध्यन्ति सङ्गरे।
नालीका लघवो बाणा नलकाण्डविनिर्मिताः ॥ ४३ ॥

अत्युच्चदुर्गपातेषु धर्मयुद्धेषु ते मताः।
अमी सर्वे शराः कार्या रुक्मपुङ्खाश्च चित्रिताः ॥ ४४॥

जाम्बूनदमयैः पट्टैस्सूक्ष्मैर्धातुभिरेव वा।
स्वस्वनामाक्षरैश्शश्वच्चिह्निताश्च वरानने ॥ ४५ ॥

कर्तव्याः परबोधार्थमिमे तस्य शरा इति।
पिप्पलीं सैन्धवं कुष्ठं गोमूत्रेण विलोपयेत् ॥ ४६ ॥

सल्लिप्तांश्च ततो बाणानग्नौ किञ्चित्प्रतापयेत्।
अभेद्यमपि भेद्यं स्याच्छरैर्लिप्तौषधैर्भृशम् ॥ ४७ ॥

अथ वक्ष्ये लक्ष्यलक्ष्म यथावदनघे तव।
लक्ष्यं तु त्रिविधं ज्ञेयं चलञ्चाचलमद्रिजे ॥ ४८ ॥

चलाचलञ्च क्रमशो धनुर्वेदविशारदैः ।
येन लक्ष्यं चलं शश्वदचलेन धनुष्मता ॥ ४९ ॥

भिद्यते सोच्यते सद्भिश्चलवेधीति भूतले ।
यो भिनत्त्यचलं लक्ष्यं चलस्सन् स्वयमद्रिजे ॥ ५० ॥

सोच्यते चलवेधीति धनुर्वेदविशारदैः ।
चलाचलं तु यल्लक्ष्यं यस्स्वयञ्च चलाचलः ॥ ५१ ॥

भिनत्त्येकेन बाणेन स चलाचलभेदकः ।
[ * ऊर्ध्ववेधी गदायुद्धे स्वर्गं प्राप्नोत्यनुत्तमम् ॥ ५२ ॥

निरयं नाभ्यधोवेधी पादवेधी च रौरवम् । ]
एकोऽपि यत्र नगरे प्रसिद्धस्स्याद्धनुर्धरः ॥ ५३ ॥

ततो यान्त्यरयो दूरं मृगास्सिंहगृहादिव ।
ब्राह्मणेन धनुर्धार्यं खड्गं तु क्षत्रियेण वै ॥ ५४ ॥

वैश्येन धार्यते कुन्तं गदा शूद्रेण धार्यते ।
तस्मादावश्यकतया साम्राज्यस्थैर्यसिद्धये ॥ ५५ ॥

सम्पादनीयाश्चापाद्याः पार्थिवैर्जयकांक्षिभिः ।
इत्येवं ते समाख्यातं चापबाणादिलक्षणम् ॥

---

* अयं श्लोकः प्राक्तनमातृकासु न दृश्यते ।

लक्ष्यधानुष्कयोश्चापि किमन्यच्छ्रोतुमिच्छसि ॥ ५६ ॥

इत्याकाशभैरवाख्येमहाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
चापादिस्वरूपनिरूपणं नाम
पञ्चत्रिंशदुत्तरशततमः पटलः ॥

॥ अथ षट्त्रिंशदुत्तरशततमः पटलः ॥

॥ धानुष्कश्रमस्वरूपनिरूपणम् ॥

पार्वती—देवदेवविरूपाक्ष श्रुतञ्चापादिलक्षणम् ।
सर्वाश्चर्यकरं सम्यक्त्वन्मुखाम्भोजतो मया ॥ १ ॥

इदानीं श्रोतुमिच्छामि धानुष्केण श्रमः कथम् ।
कर्तव्यः करुणासिन्धो वद मे वदतां वर ॥ २ ॥

श्रीशिवः—साधु साधु जगत्पूज्ये यन्मां त्वं परिपृच्छसि ।
तत्तेऽहं सम्प्रवक्ष्यामि शृणुष्व सुसमाहिता ॥ ३ ॥

पुरतो वर्तमानस्य लक्ष्यस्य बहुधा शितैः ।
शरैराकर्णमाकृष्टैर्भेदनं यत्तदद्रिजे ॥ ४ ॥

श्रम इत्युच्यते पुम्भिर्धनुर्वेदविशारदैः ।
श्रम एव परं श्रेयः श्रम एव परं बलम् ॥ ५ ॥

श्रम एव परा कीर्तिर्धानुष्कस्य विशेषतः ।
तस्मादवश्यं धानुष्को भवेच्छ्रमपरिश्रमः ॥ ६ ॥

प्रत्यहं प्रयतः प्रातः सायञ्च वरवर्णिनि ।
य एकस्मिन्नपि दिने धन्वी न कुरुते श्रमम् ॥ ७ ॥

तस्य दृष्टिश्च मुष्टिश्च नानाकारा चलत्युभे ।
तस्मात्कृतश्रमेणैव सङ्ग्रामे प्राप्यते जयः ॥ ८ ॥

गुरूपदिष्टमार्गेण श्रमः कार्यो धनुष्मता ।
धानुष्कस्य श्रमारम्भे भुजङ्गो यदि दृश्यते ॥ ९ ॥

अथवा भज्यते चापः त्रुटितो वा गुणो भवेत् ।
श्रमं तत्र न कुर्वीत यदीच्छेच्छ्रेय आत्मनः ॥ १० ॥

चन्द्रहीना यथा रात्रिः पुष्पहीना यथा लता ।
तथैव श्रमहीनाऽपि धनुर्विद्या वरानने ॥ ११ ॥

स्थानानि पञ्च वक्ष्यामि धानुष्कस्य यथाक्रमम् ।
आलीढमादिमं स्थानं प्रत्यालीढमनन्तरम् ॥ १२ ॥

विशाखं दर्दुरञ्चैव गारुडञ्चैव पञ्चमम् ।
विन्यस्याग्रे वामपादं पश्चादाकुञ्च्य दक्षिणम् ॥ १३ ॥

आलीढं तु प्रकर्तव्यं समीपशरपातने ।
प्रत्यालीढे प्रकर्तव्यं दक्षिणं पुरतः पदम् ॥ १४ ॥

वामं त्वाकुञ्चितं कार्यं सुदूरशरपातने ।
पादौ सविस्तरौ कृत्वा समौ हस्तप्रमाणतः ॥ १५ ॥

विशाखस्थानकं कार्यं कूटलक्ष्यविभेदने ।
कृत्वा चैव समौ पादौ निष्कम्पौ च सुसङ्गतौ ॥१६॥

वपुराकुञ्च्य चोरू द्वौ जानुनी धारणीं गते ।
कृत्वा कार्यं दर्दुराख्यं स्थानं कण्टकभेदने ॥ १७ ॥

सव्यं जानु गतं भूमौ दक्षिणं चैव कुञ्चितम् ।
कृत्वाऽग्रतस्तु वै कुर्याद् गारुडं दृढभेदने ॥ १८ ॥

मुष्टयः पञ्च कथिताः शरसन्धानकर्मणि ।
पताका वज्रमुष्टिश्च सिंहकर्णा तथैव च ॥ १९ ॥

मत्सरी काकतुण्डी च तल्लक्षणमिहोच्यते ।
दीर्घा तु तर्जनी यत्र ह्याश्रिताङ्गुष्ठमूलका ॥ २० ॥

पताका सा तु विज्ञेया नाळीकशरमोक्षणे ।
तर्जनीमध्यमामध्यमङ्गुष्ठो विशते यदि ॥ २१ ॥

वज्रमुष्टिश्च सा ज्ञेया स्थूलतारा च मोक्षणे ।
अङ्गुष्ठनखमूले तु मध्यमाग्रं सुसंस्थितम् ॥ २२ ॥

सिंहकर्णा तु विज्ञेया वत्सदन्तविमोक्षणे ।
अङ्गुष्ठनखमूले तु तर्जन्यग्रं सुसंस्थितम् ॥ २३ ॥

मत्सरी नाम सा ज्ञेया चित्रलक्ष्यस्य वेधने ।
अङ्गुष्ठाग्रे तु तर्जन्या मुखं यत्र निवेशितम् ॥२४॥

काकतुण्डा तु सा ज्ञेया सूक्ष्मलक्ष्यनिपातने ।
योज्यालीढे पताकाख्या प्रत्यालीढे तु पार्वति ॥ २५ ॥

वज्रमुष्टिर्विधातव्या विशाखे सिह्मकर्णिका ।
मत्सरी दर्दुरे योज्या गारुडे काकतुण्डिका ॥ २६ ॥

एवमासनभेदेषु मुष्टिभेदा निरूपिताः ।
उदिते भास्करे लक्ष्यं प्रत्यग्निदिशि निक्षिपेत् ॥ २७ ॥

अपराह्णे तु कर्तव्यं लक्ष्यं पूर्वदिगाश्रितम् ।
उदग्दिशि सदा कार्यं प्रशस्तं लक्ष्यमद्रिजे ॥ २८ ॥

सङ्ग्रामेण विना कार्यं न लक्ष्यं दक्षिणामुखम् ।
षष्टिहस्तान्तरं लक्ष्यमुत्तरं परिकीर्तितम् ॥ २९ ॥

चत्वारिंशत्करैर्मध्यमधमं स्यात्तदर्धतः ।
क्रियाकलापान् वक्ष्यामि श्रमसाध्यान् शुचिस्मिते ॥३०

येषां विज्ञानमात्रेण सिद्धिर्भवति धन्विनाम् ।
प्रथमं चापमालोक्य चूलिकां बन्धयेत्ततः ॥ ३१ ॥

स्थानकं तु ततः कुर्याद् बाणं परिकरं न्यसेत् ।
तोलनं धनुषश्चैव कर्तव्यं वामपाणिना ॥ ३२ ॥

आदानं च ततः कृत्वा सन्धानं च ततः परम् ।
सकृदाकृष्टचापेन लक्ष्यवेधं तु कारयेत् ॥ ३३ ॥

कुम्भकेन स्थितं कृत्वा हुङ्कारेण विसर्जयेत् ।
इत्यभ्यासक्रिया कार्या धन्विना सिद्धिमिच्छता ॥ ३४ ॥

षण्मासात् सिद्ध्यते मुष्टिः शरास्संवत्सरेण तु ।
नाराचास्तस्य सिद्ध्यन्ति प्रसन्नोऽहं यदा तदा ॥ ३५ ॥

पुष्पवद्धारयेद्बाणं सर्पवत्पीडयेद्धनुः ।
धनवल्लक्षयेल्लक्ष्यं यदीच्छेत् सिद्धिमात्मनः ॥ ३६ ॥

प्रथमं वामहस्तेन यश्श्रमं कुरुते नरः ।
तस्य चापक्रियासिद्धिरचिरादेव जायते ॥ ३७ ॥

वामहस्तेतु संसिद्धे दक्षिणेनारभेत्ततः ।
उभाभ्यां च श्रमं कुर्यात् नाराचैश्च शरैस्तथा ॥ ३८ ॥

चतुश्शतैश्च काण्डानां यो हि लक्ष्यं निपातयेत् ।
सूर्योदये चास्तमये स श्रेष्ठो धन्विनां भवेत् ॥ ३९ ॥

त्रिशतैर्मध्यमः प्रोक्तो द्विशताभ्यां कनिष्ठकः ।
ऊर्ध्ववेधी भवेच्छ्रेष्ठो नाभिवेधी च मध्यमः ॥ ४० ॥

पादवेधी कनिष्ठः स्यादिति निर्णीतमद्रिजे ।
पूर्वापरौ समौ कार्यौ समांशौ निश्चलौ करौ ॥ ४१ ॥

चक्षुषी स्पन्दयेन्नैव दृष्टिं लक्ष्ये नियोजयेत् ।
मुष्टिनाच्छादितं लक्ष्यं शरस्याग्रे नियोजयेत् ॥ ४२ ॥

मनोदृष्टिगतं ज्ञात्वा ततः काण्डं विसर्जयेत् ।
एवञ्चेदाशुगो देवि लक्ष्यान्न स्खलति ध्रुवम् ॥ ४३ ॥

आदानञ्चैव तूणीरात् सन्धानङ्कर्षणन्तथा ।
क्षेपणञ्च त्वरायुक्तो बाणस्य कुरुते तु यः ॥ ४४ ॥

नित्याभ्यासवशात्तस्य शीघ्रसन्धानता भवेत् ।
उदग्गा दक्षिणा चैव ऊर्ध्वगाऽधोमुखी तथा ॥ ४५ ॥

चतस्रो गतयः प्रोक्ता बाणस्खलनहेतवः ।
कम्पते गुणमुष्टिस्तु मार्गणस्य हि पृष्ठतः ॥ ४६ ॥

सम्मुखस्स्याद्धनुर्मुष्टिस्तदा सौम्या गतिर्भवेत् ।
ग्रहणे शिथिलं यस्य ऋजुत्वेन विवर्जितम् ॥ ४७ ॥

पार्श्वं तु दक्षिणं याति सायकस्स न संशयः ।
ऊर्ध्वं भवेच्चापमुष्टिर्गुणमुष्टिरधो भवेत् ॥ ४८ ॥

स मुक्तो मार्गणो लक्ष्यादूर्ध्वं याति न संशयः ।
मोक्षणे चैव बाणस्य चापमुष्टिरधो भवेत् ॥ ४९ ॥

गुणमुष्टिर्भवेदूर्ध्वं तदाऽधोगामिनी गतिः ।
लक्ष्यबाणाग्रदृष्टीनां सङ्गतिस्तु यदा भवेत् ॥ ५० ॥

तदानीमुज्झितो बाणो लक्ष्यान्न स्खलति ध्रुवम् ।
निर्दोषश्शब्दहीनश्च सममुष्टिद्वयस्थितः ॥ ५१ ॥

भिनत्ति दृढवेध्यानि सायको नात्र संशयः ।
स्वाकृष्टस्तेजितो यस्तु सुशुद्धो गाढमुष्टिगः ॥ ५२ ॥

नरनागाश्वकायेषु न स तिष्ठति मार्गणः ।
अयश्चर्मघटश्चैव मृत्पिण्डश्च चतुष्टयम् ॥ ५३ ॥

यो भिनत्ति हि तस्येषुर्वज्रेणापि न धार्यते ।
सार्धाङ्गुलप्रमाणेन लोहपात्राणि कारयेत् ॥ ५४ ॥

तानि भित्त्वैकबाणेन दृढघाती भवेन्नरः ।
चतुर्विंशतिचर्माणि यो भिनत्तीषुणा नरः ॥ ५५ ॥

तस्य बाणो गजेन्द्रस्य कायन्निर्भिद्य गच्छति ।
भ्राम्यज्जले घटो वेध्यश्चक्रे मृत्पिण्डकन्तथा ॥ ५६ ॥

यथा भ्रमन्तु वेधी चेत् भ्रमवेधी स उच्यते ।
अयस्तु काकतुण्डेन चर्म धारामुखेन च ॥ ५७ ॥

मृत्पिण्डञ्च घटञ्चैव विद्धयेत् सूचीमुखेन तु ।
बाणभङ्गकलावर्तकाष्ठभेदनमेव च ॥ ५८ ॥

बिन्दुकं गोळकयुगं यो वेत्ति स जयी भवेत् ।
लक्ष्यस्थाने धृतङ्काण्डं राम्मुखं भेदयेत्तु यः ॥ ५९ ॥

किञ्चिन्मुष्टिं विधाय स्वां तिर्यग्विफलितेषुणा ।
सम्मुखं वा समायान्तं तिर्यग्वाऽऽयान्तमम्बरे ॥ ६० ॥

शरं शरेण यश्छिन्द्याद्बाणवेधी स जायते ।
काष्ठे च केशं संयम्य तत्र बध्वा वराटकम् ॥ ६१ ॥

हस्तेन भ्राम्यमाणन्तं यो विध्येद् भ्रमवेध्यसौ ।
लक्ष्यस्थाने न्यसेत्काष्ठं देवि गोपुच्छसन्निभम् ॥ ६२ ॥

यश्छिन्द्यात्तु क्षुरप्रेण काष्ठवेधी स उच्यते ।
लक्ष्ये बिन्दु न्यसेच्छुभ्रे रक्तं बन्धूकपुष्पवत् ॥ ६३ ॥

हन्ति तं बिन्दुकं यस्तु बिन्दुवेधी स जायते ।
काष्ठे गोळयुगं क्षिप्त्वा प्रान्तयोः पद्मलोचने ॥ ६४ ॥

शरयुग्मेण यश्छिन्द्यात् तद्युग्ममतिवेगतः ।
स युग्मवेधी कथितः पूजितस्सर्वपार्थिवैः ॥ ६५ ॥

रथस्थेन हयस्थेन गजस्थेन च धन्विना ।
धावता वै श्रमः कार्यो लक्ष्यं हन्तुं सुनिश्चितम् ॥६६॥

मण्डलभ्रमणैश्चित्रैस्तथैव च गतागतैः ।
सव्यापसव्यगतिभिर्गोमूत्रगतिभिः पुनः ॥ ६७ ॥

धानुष्केण श्रमः कार्यो लक्ष्यसल्लग्नदृष्टिना ।
अष्टमी चाप्यमावास्या पूर्णिमा च चतुर्दशी ॥ ६८ ॥

वर्जनीया प्रयत्नेन धन्विना श्रमकर्मणि ।
अनध्यायदिने देवि धानुष्केण कृतश्श्रमः ॥ ६९ ॥

---

* मण्डलभ्रमणैर्देवि इति प्राक्तनमातृकापाठः ।

अनर्थाय भवेत् क्षिप्रं नास्ति नास्त्यत्र संशयः ।
तस्माच्छुभेषु दिवसेष्वनुकूलेषु चात्मनः ॥ ७० ॥

अध्येतव्यो धनुर्वेदः सावधानेन चेतसा ।
इत्येवं ते समाख्यातं श्रमकर्म यथाक्रमम् ॥
सङ्ग्रहेण सरोजाक्षि किमन्यच्छ्रोतुमिच्छसि ॥ ७१ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
धानुष्कश्रमाभ्यासस्वरूपनिरूपणन्नाम
षट्त्रिंशदुत्तरशततमः पटलः ॥



॥ अथ सप्तत्रिंशदुत्तरशततमः पटलः ॥

॥ युद्धस्वरूपनिरूपणम् ॥

पार्वती—शम्भो शङ्कर सर्वज्ञ श्रमकर्म यथाक्रमम् ।
ज्ञातं युद्धस्वरूपञ्च ज्ञातुमिच्छामि सांप्रतम् ॥ १ ॥

तद्वदस्व दयासिन्धो मय्यस्ति यदि ते दया ।
श्रीशिवः—साधु साधु जगत्पूज्ये यन्मां त्वं परिपृच्छसि ॥ २ ॥

तत्तेऽहं संप्रवक्ष्यामि शृणुष्व सुसमाहिता ।
सार्वभौमस्य नृपतेर्मण्डलस्येश्वरस्य वा ॥ ३ ॥

राज्ञो वा यस्य कस्यापि शूरस्य वरवर्णिनि ।
राष्ट्रसन्धिषु राष्ट्रे वा रिपवोऽप्युद्धता यदा ॥ ४ ॥

प्रजाः पशून्वा बाधन्ते तांस्तदा सामभाषणैः।
प्रीणयित्वा वशी कुर्यादृजुमार्गेण पार्थिवः ॥ ५ ॥

साम्नैवारिर्भवेन्मित्रं साम्नैवारिः प्रतुष्यति।
तस्मात्साम्नः परतरो नास्त्युपायो जगत्त्रये ॥ ६ ॥

यदि साम्ना त्वसाध्यास्ते दानेन स्ववशन्नयेत्।
दानेन वशमायान्ति शत्रवोऽप्यतिभीषणाः ॥ ७ ॥

वैरञ्च नाशमायाति तस्माद्दानं महत्तरम्।
तेन चाप्यवशेष्वेषु भेदङ्कुर्यात् परस्परम् ॥ ८ ॥

भेदमेव पुरा कृत्वा नारदस्त्वजयज्जगत्।
तस्मात् परतरं प्राहुर्भेदोपायं मनीषिणः ॥ ९ ॥

भेदासाध्येषु रिपुषु दण्डमेव प्रयोजयेत्।
दण्डशीलस्य नृपतेस्सर्वे त्रस्यन्ति शत्रवः ॥ १० ॥

दण्डहीने महीपाले मृदुत्वं भीरुतामपि।
आरोपयन्त्यरिनृपास्तस्माद्दण्डो महत्तरः ॥ ११ ॥

स एव दण्डो विद्वद्भिर्युद्धमित्यभिधीयते।
युद्धमेव परं श्रेयः परत्रेह महीभुजाम् ॥ १२ ॥

युद्धे यदीह जेता स्याज्जयलक्ष्मीं महीमपि।
महतीं प्राप्य सकलान् भोगाननुभवेच्चिरम् ॥ १३ ॥

एकोऽपि यदि पञ्चत्वमापन्नस्स्याद्रणाङ्कणे ।
वीरलक्ष्म्याऽन्वितस्स्वर्गे दिव्यान्भोगान्वराननें ॥ १४ ॥

अमरीभिरसङ्ख्याभिरन्वितोऽनुभवेच्चिरम् ।
तस्मादुभयथा देवि महाहव इवाहवः ॥ १५ ॥

यज्वनां भूभुजां श्रेयः परमित्युदितो बुधैः ।
यदा मृत्युरयुद्धेऽपि युद्धे जीवितसंशयः ॥ १६ ॥

तदा युद्धं प्रकर्तव्यं पार्थिवेन सुबुद्धिना ।
तस्मात् सर्वप्रयत्नेन युद्धमेव महीक्षिता ॥ १७ ॥

कर्तव्यमरिभिस्सार्धं साम्राज्यस्थैर्यसिद्धये ।
यस्यां दिश्यरिभूपालो बलेन सह वर्तते ॥ १८ ॥

तस्यां दिश्युन्नतं शुभ्रमुद्धृत्य पटमण्टपम् ।
तस्यान्तस्सुशुभे लग्ने स्वीयं चापं शरानपि ॥ १९ ॥

खड्गखेटौ च विन्यस्य नृपतिर्जयदुन्दुभिम् ।
ताडयित्वा पूजयित्वा तानादाय समर्चितान् ॥ २० ॥

जयघोषेण महता वन्दिनामपि वर्धितः ।
बहिर्निर्गत्य भद्रेभमारुह्यारिबलं प्रति ॥ २१ ॥

यायाद् युद्धेऽतिसन्नद्धः स्वेष्टदेवं हृदि स्मरन् ।
द्यूतोद्युक्तैरिव स्वक्षैस्सुचक्रैस्सुनृपैरिव ॥ २२ ॥

मनोज्ञघोषैराभीरदेशैरिव रथैः प्रिये ।
व्याप्ते सति पुरोभागे रथिसारथिशोभितैः ॥ २३ ॥

दानवद्भिर्महोदारैरिव रात्रिव्रजैरिव ।
नक्षत्रमालिकायुक्तैर्निष्कुटैरिव भूभुजाम् ॥ २४ ॥

नानाकदलिकायुक्तैर्नागैस्साधोरणैरपि ।
पार्श्वद्वये परिवृते परितः पद्मलोचने ॥ २५ ॥

सागरैरिव सावर्तैः कुपितैः पुरुषैरिव ।
क्ष्मां वेगेन मुञ्चद्भिः कुम्भकारगृहैरिव ॥ २६ ॥

नवभाण्डान्वितैरश्वैरसङ्ख्यैश्च ससादिभिः ।
पार्ष्णिभागे परिवृते सत्युमे समये समे ॥ २७ ॥

धनुषां विद्विषाञ्चैव जीवाकृष्टिविधायिभिः ।
प्रापयद्भिर्महोदारैरिव लक्षाणि मार्गणैः ॥ २८ ॥

कैश्चिद् धनुर्धरैः खड्गहस्तैः खड्गमृगानपि ।
हन्तुं विचक्षणैः कैश्चित्कैश्चित्सल्लोल्लसत्करैः ॥ २९ ॥

कैश्चित्प्रतिभटत्रासकरैः प्रासकरैरपि ।
कैश्चिच्छकुन्तपदवीस्पर्शिकुन्तधरैरपि ॥ ३० ॥

अन्यैरतिकठोराग्रकुठारवरधारिभिः ।
कैश्चिन्मुदा सदोपात्तगदायुद्धविशारदैः ॥ ३१ ॥

भटैरत्युद्धतैर्देवि सर्वत्र समधिष्ठिते ।
त्रिविधे रथनागाश्वनामकेऽत्युद्धते बले ॥ ३२ ॥

रथचक्रस्वनैर्दन्तिबृंहितैरश्वहेषितैः ।
पदातिसिंहनादैश्च प्रतिपक्षभयङ्करैः ॥ ३३ ॥

प्रतिध्वनति दिक्चक्रे परितः पद्मलोचने ।
विजिगीषुररीन्राजा तत्पुरस्य पुरो भुवि ॥ ३४ ॥

शिबिरं कल्पयेन्नानापटमण्टपशोभितम् ।
नानाऽऽपणसमाकीर्णं विस्तीर्णविशिखान्वितम् ॥ ३५ ॥

परितो वलयाकारकण्टकावृतिसंयुतम् ।
संरक्षितचतुर्द्वारं भटैरतिभयङ्करैः ॥ ३६ ॥

एवं राजा विनिर्माय शिबिरं तत्परं प्रिये ।
आरक्षं कल्पयेत्सम्यक्क्रोशमात्रे तु सर्वतः ॥ ३७ ॥

ततः परं तदारक्षाद्बहिः क्रोशद्वयान्तरम् ।
त्यक्त्वा नृपस्योपजीव्यपार्ष्णिग्राहादिभूभुजाम् ॥३८॥

सामन्तनृपतीनाञ्च शिबिराणि पृथक्पृथक् ।
कारयेच्च यथाऽन्योन्यं कलहो न भवेत्तथा ॥ ३९ ॥

ततस्त्वशिबिरे राजा बहुधा कारयेत्प्रिये ।
यानशाला मन्दुराश्च गजकूटांश्च कानिचित् ॥ ४०

कायमानानि रम्याणि चतुर्विधबलस्य तु ।
स्थातुं पटकुटीः काश्चित् तत्र तत्र वरानने ॥ ४१ ॥

ततो नानाविधं धान्यं घासं लवणमिन्धनम् ।
बहु सम्पाद्य कर्तव्या राशयः पर्वतोपमाः ॥ ४२ ॥

तत्र क्वचित्कार्मुकाणां शराणां कुत्रचित्स्थले ।
कृपाणानां तथैकत्र कर्तव्याश्चैव राशयः ॥ ४३ ॥

एवं शिबिरसामग्रीं सम्पाद्य स्वानुयायिनः ।
आहूय नृपतीन् सर्वान् बलाध्यक्षानपि प्रिये ॥ ४४ ॥

श्वः परश्वोऽथ वा युद्धं कर्तव्यमरिभिस्सह ।
इदानीमेव समयो भवतां विक्रमस्य तु ॥ ४५ ॥

इत्युक्त्वा नृपतिस्तेभ्यो दत्वा हैमाम्बराणि वै ।
गन्धकर्पूरकस्तूरीताम्बूलानि च तान् पुरः ॥ ४६ ॥

प्रस्थाप्य चारानाहूय तैर्विज्ञापितभाषितैः ।
ज्ञात्वा बलाबलं सम्यगरीणामात्मनोऽपि च ॥ ४७ ॥

ततो दूतं समाहूय पराविज्ञातचेष्टितम् ।
कार्याकार्यविशेषज्ञं वाग्मिनं दृढमानसम् ॥ ४८ ॥

बहुमान्य वदेद्देवं त्वं प्रत्यर्थिमहीभृतः ।
सेनानिवेशं सम्प्राप्य सत्वरं स्वस्य चागतिम् ॥ ४९ ॥

निवेदयित्वा तद्राज्ञे स्वयङ्गत्वा तदन्तिकम् ।
वदैवं दूतवर्योऽहं मत्स्वामिप्रेषितो भृशम् ॥ ५० ॥

तवान्तिकमनुप्राप्तो मत्स्वामी बलसंयुतः ।
युद्धार्थमागतः क्षिप्रं त्वया प्रातः परेद्यवि ॥ ५१ ॥

आगन्तव्यञ्चाहवार्थमित्युक्त्वा पुनरेहि मे ।
अन्तिकञ्चातिवेगेनेत्युक्त्वा तं प्रेषयेन्नृपः ॥ ५२ ॥

अथात्मनोक्तमखिलमुक्त्वात्मनृपसान्निधौ ।
तृणीकृत्य रिपून् सर्वान् स्वान्तिकं पुनरागतात् ॥ ५३ ॥

दूताद्विज्ञाय सहसा विपक्षहृदयं नृपः ।
युद्धे बद्धस्पृहो भूत्वा वेत्रहस्तैर्बलाधिपान् ॥ ५४ ॥

आह्वाययित्वा तानेवं वदेद् भूमिपुरन्दरः ।
हे यूथनाथाः श्वः प्रातरस्माकं वैरिणामपि ॥ ५५ ॥

भविष्यति महायुद्धं तुमुलञ्चातिभीषणम् ।
आहूयन्तामाप्तनृपाः सन्नह्यन्ताञ्च सैनिकाः ॥ ५६ ॥

सज्जीक्रियन्तां तुरगाः शृङ्गार्यन्तां मतङ्गजाः ।
इत्यादिश्य ततो राजा परेद्युरुषसि प्रिये ॥ ५७ ॥

स्नात्वा तात्कालिकं नित्यकर्म निर्वर्त्य भास्करम् ।
उपास्याभ्यर्च्य विधिवत् स्वेष्टदेवं गुरून् द्विजान् ॥ ५८ ॥

नमस्कृत्याथ विधिना कृत्वा दानानि कानिचित् ।
सखड्गचर्मकवचस्सर्वाभरणभूषितः ॥ ५९ ॥

नदत्सु पञ्चवाद्येषु भेरीकाहलिकादिषु ।
गृहान्निर्गत्य भद्रेभमारुह्य स्वकुलागतम् ॥ ६० ॥

युद्धोपस्करसन्नद्धमुदयाद्रिमिवांशुमान् ।
वन्दिभिर्नन्द्यमानस्सन्नुद्बाहुभिरुदारधीः ॥ ६१ ॥

यायाद्योद्धुं महीपालश्चतुरङ्गबलान्वितः ।
उत्प्रेक्ष्यमाणस्सहसाऽऽलोककैश्शिबिरस्थितैः ॥ ६२ ॥

तस्य सैन्यस्य रजसा व्याप्तञ्चेद्गाढमम्बरम् ।
न शक्योऽयं मया द्रष्टुमित्याशङ्क्य पुरैव हि ॥६३॥

अस्यान्तिकमनुप्राप्तश्चन्द्र एवेति निश्चिताम् ।
मतिं कल्पयता श्वेतछत्रेणाभात्यसौ नृपः ॥ ६४ ॥

चामरद्वन्द्वदम्भेन नृत्यन्तीभ्यां स्वपार्श्वयोः ।
स्वदानक्षात्रकीर्तिभ्यां सेव्यते किमयं नृपः ॥ ६५ ॥

पूरयिष्यत्यसौ सौवप्रतापानलशोषितम् ।
पारावारमरिक्ष्मापनारीनयनवारिभिः ॥ ६६ ॥

अयमुत्तुङ्गतुरगघाटीभिर्रतिपांसुलाम् ।
करोति पङ्किलाम्भूमिं भूयो गजमदाम्बुभिः ॥ ६७ ॥

निस्त्रिंशोऽयं सकोशश्चेद्दानदक्षः कथम्भवेत् ।
इति मत्वैव तङ्कोशादयमुद्धृतवान्किल ॥ ६८ ॥

सङ्कुच्यात्मानमत्यन्तमरिभूमण्डलङ्किमु ।
खेटदम्भादस्य राज्ञो बाहुमाश्रित्य तिष्ठति ॥ ६९ ॥

यशोदयाऽन्वितश्चायं नेता गोपजनस्य च ।
पाता गोमण्डलस्यापि कथं न पुरुषोत्तमः ॥ ७० ॥

युधिष्ठिरोऽपि भीमोऽपि चरितैरर्जुनोऽपि च ।
प्रज्ञया सहदेवोऽपि नकुलो न भवत्ययम् ॥ ७१ ॥

चित्रमम्बरगश्चन्द्रस्स षोडशकलाऽन्वितः ।
अयं तु जगतीचन्द्रश्चतुष्षष्टिकलाऽन्वितः ॥ ७२ ॥

तादृग्विधगुणस्यास्य कलङ्कोऽप्यस्ति कश्चन ।
देशे देशे प्रमत्तेव कीर्तिर्भ्रमति वल्लभा ॥ ७३ ॥

एवमुत्प्रोक्षितो राजा बहुधा शिबिरस्थितैः ।
जनैर्जयोद्यतश्शत्रुसैन्यान्तिकमुपाश्रितः ॥ ७४ ॥

चतुरङ्गबलं सोवञ्चतुर्धा प्रविभज्य तत् ।
कुर्याद्गरुडवद् व्यूहं पुच्छपक्षमुखान्वितम् ॥ ७५ ॥

तुण्डस्थाने रथानश्वान् वक्षस्स्थाने मतङ्गजान् ।
पुच्छस्थानेऽवशिष्टस्य स्थाने देहस्य सैनिकान् ॥ ७६ ॥

संस्थाप्य वैनतेयाभं व्यूहमेवं विधाय तम्।
स्वयन्तस्योदरस्थाने तिष्ठेत् भूमिपुरन्दरः ॥ ७७ ॥

अथ वा कल्पयेद् व्यूहं पद्मवत्पद्मलोचने।
रथैस्तु कर्णिकाङ्कृत्वा परितः कुञ्जरैर्हयैः ॥ ७८ ॥

विधाय वलयन्तस्य परितस्सैनिकैरुमे।
रचयित्वाऽष्टपत्राणि तिष्ठेत्तन्मध्यतस्स्वयम् ॥ ७९ ॥

अथ वा चक्रवद्व्यूहं कारयेन्नृपतिः प्रिये।
चक्राकारं भटैः कुर्यात् प्राकारं प्रथमं ततः॥ ८० ॥

द्वितीयमश्वैर्मातङ्गैस्तृतीयं स्यन्दनैस्ततः।
तुरीयमेवं निर्माय चक्रव्यूहं तदन्तरे ॥ ८१ ॥

स्वयमाप्तजनैस्साकं युद्धे बद्धस्पृहो भवेत्।
अथ वाऽर्धेन्दुसङ्काशं दण्डाकारमथापि वा ॥ ८२ ॥

चतुर्विधेन स्वीयेन बलेन व्यूहकल्पनम्।
कृत्वा तन्मध्य आसीनश्शत्रुसेनाग्रवर्तिभिः ॥ ८३ ॥

भटैर्योद्धुं भटान्कांश्चित् स्वस्य सेनाग्रवर्तिनः।
कांश्चित्कण्ठोल्लसन्निष्कान्धानुष्कांस्तु कृतश्रमान्॥८४

प्रेषयेत् खड्गिनः कांश्चित्कांश्चित्प्रासकरानपि।
कांश्चिच्छक्रधरान्देवि कांश्चित्तोमरधारिणः ॥ ८५ ॥

कांश्चिच्चैव गदाहस्तान् कांश्चिद् द्रुघणधारिणः ।
ततस्तैर्युध्यतां शत्रुभटैस्सेनाग्रवर्तिभिः ॥ ८६ ॥

स्वभटानां भङ्गदम्भादाकृष्यारिबलं महत् ।
स्वबलस्यान्तिकं राजा प्रापय्य च ततः परम् ॥ ८७ ॥

शङ्खदुन्दुभिनिर्घोषैर्जयघोषैश्च वन्दिनाम् ।
रथचक्रस्वनैर्दन्तिबृम्हितैरतिभीषणैः ॥ ८८ ॥

अश्वहेषारवैः पत्तिसिंहनादैश्च दारुणैः ।
प्रतिध्वनति दिक्चक्रे महायुद्धं प्रवर्तयेत ॥ ८९ ॥

रथिकान् रथिकैर्नागान् नागैश्चैव हयान् हयैः ।
भटान् भटैर्नरपतिर्योधयेद्धर्ममार्गतः ॥ ९० ॥

धर्मयुद्धरतो राजा लोकानाप्नोति पुष्कलान् ।
व्युत्क्रमेणाथ वा राजा कारयेद् युद्धमद्रिजे ॥ ९१ ॥

भटानां वाजिनाञ्चैव वाजिनां हस्तिनामपि ।
हस्तिनां स्यन्दनानाञ्च सङ्करेण बलेन वा ॥ ९२ ॥

युद्धङ्कारयितव्यं वै नृपेण जयमिच्छता ।
रथी हस्तिपकं हन्याद् हस्त्यारोहस्तु सादिनम् ॥ ९३॥

सादी च पदगं हन्यात् पत्तिर्वा सादिहा भवेत् ।
सादी स्याद्धस्तिपकहा सादी स्याद्रथिहाऽद्रिजे ॥ ९४॥

शस्त्राशस्त्रि क्वचिद्देवि कुत्रचिच्च गदागदि ।
खड्गाखड्गि तथाऽन्यत्र भुजाभुज्यपरत्र तु ॥ ९५ ॥

कचाकचि परत्रोमे मुष्टामुष्टीतरत्र तु ।
भटैरत्यन्तसङ्क्रुद्धैः कारयित्वाऽऽहवं नृपः ॥ ९६ ॥

स्वयमस्त्रप्रवीणश्चेदस्त्रैर्युध्येत सत्वरम् ।
नोचेन्मानुषमादाय चापमारोप्य वै गुणम् ॥ ९७ ॥

सन्धाय काण्डानाकर्णमाकृष्यारिव्रजं प्रति ।
विमुञ्चेदात्मनामाङ्कान् रुक्मपुङ्खांश्च पत्रिणः ॥ ९८ ॥

न ज्ञायते यथाऽऽदानं सन्धानञ्च विसर्जनम् ।
तथा विमुञ्चेन्नृपतिः क्षिप्रहस्तश्शिलीमुखान् ॥ ९९ ॥

ततस्त्वालीढमाश्रित्य स्थानं नृपतिसत्तमः ।
धारामुखैश्शरैश्छिन्द्याच्चर्माण्यरिमहीभुजाम् ॥ १०० ॥

कार्मुकाणि क्षुरप्रैस्तु छिन्द्यात्सूचीमुखेषुभिः ।
विशङ्कटान् विशालाक्षि कङ्कटान् सङ्कटापहान् ॥ १०१ ॥

मस्तकानर्धचन्द्राभैश्शत्रूणाञ्छेदयेच्छरैः ।
भल्लैर्हृदयभेदी स्याद् गुणांश्छिन्द्याद्विभल्लकैः ॥ १०२ ॥

खण्डयेत् काकतुण्डैस्तु शरैः परशरान् प्रिये ।
शरैर्नालीकनाराचैर्गोपुच्छैर्वत्सदन्तकैः ॥ १०३ ॥

मत्तान्मतङ्गजानश्वान् वेधयेत्सर्वसन्धिषु ।
ततः कांश्चित्समादाय भल्लांस्तैस्सादिनां प्रिये ॥१०४॥

आधोरणानां रथिनामन्येषां रिपुभूभुजाम् ।
शिरांसि पातयेत्तालफलानीव सुमध्यमे ॥ १०५ ॥

ततोऽरिसैन्ये शनकैरवसन्ने सति प्रिये ।
एकहेळयाऽश्वनागादिचतुरङ्गबलं महत् ॥ १०६ ॥

प्रेरयित्वाऽतिवेगेन क्षत्रधर्मस्थितो नृपः ।
सरथं सगजं साश्वं सपदातिं सबान्धवम् ॥ १०७ ॥

समित्रवर्गं सामात्यमरिमाहवमूर्धनि ।
हन्याद्धन्तुमशक्यश्चेत् स रिपुस्सर्वमङ्गळे ॥ १०८ ॥

बलं बहुळमानाय्य भूयोऽपि च चतुर्विधम् ।
पुनर्यत्नं रिपुं हन्तुं कुर्याद्राजा दृढव्रतः ॥ १०९ ॥

तथाऽप्यरिरशक्यश्चेदाभिचारादिकं प्रिये ।
कारयित्वा द्विजैः कर्म विद्वेषं वा परस्परम् ॥ ११० ॥

कल्पयित्वा रणे हन्यादुपायैर्वेतरैरपि ।
एवं बहुविधे यत्ने कृतेऽपि च विधेर्बलात् ॥ १११ ॥

अत्यन्तमरिवाहिन्यां प्रवृद्धायां स्वयं नृपः ।
वैतसीं वृत्तिमाश्रित्य ह्यतिवाह्य तदापदम् ॥ ११२ ॥

पश्चात् समीक्ष्य समयमुत्कस्स्यादरिनिग्रहे ।
कौर्मं सङ्कोचमथ वा समाश्रित्य महीपतिः ॥ ११३ ॥

उद्ग्रीवः स्यात्स्वानुकूले समयेऽरिवधं प्रति ।
येन केनाप्युपायेन सर्वशक्त्या रणाङ्कणे ॥ ११४ ॥

हत्वाऽरिं विजयं प्राप्य प्रजा राजाऽनुपालयेत् ।
उपेक्षते य आलस्यादरीनप्यामयानपि ॥ ११५ ॥

अचिरेणैव कालेन नाशमेति स पार्थिवः ।
तस्मादुपेक्षा नो कार्या राज्ञाऽरिष्वामयेषु च ॥ ११६ ॥

वर्धन्ते वह्निवत्क्षिप्रमत्यल्पास्तेऽपि भामिनि ।
पुरा मनुर्महाराजो मान्धाता च पुरूरवाः ॥ ११७ ॥

सगरः कार्तवीर्यश्च ययातिर्नहुषस्तथा ।
नाभागो धुन्धुमारश्च शिबिश्चैव प्रतर्दनः ॥ ११८ ॥

एते चान्ये च भूपाला महावीर्या महौजसः ।
अरीनुरुबलान्हत्वा समरेऽमरसन्निभाः ॥ ११९ ॥

साम्राज्यलक्ष्मीं सम्प्राप्य प्राज्यं राज्यमपालयन् ।
तस्मादावश्यकतया साम्राज्यस्थैर्यसिद्धये ॥ १२० ॥

जेतव्याश्शत्रुभूपाला येनकेनापि भूभुजा ।
निस्सपत्नं वदन्त्यार्या राज्यम्भूस्वर्ग इत्युभे ॥ १२१ ॥

तदीश्वरोऽपि नृपतिर्भवेत् भूमिपुरन्दरः ।
इत्येवन्ते समाख्यातं युद्धलक्षणमद्रिजे ॥
सङ्ग्रहेण सरोजाक्षि किमन्यच्छ्रोतुमिच्छसि ॥ १२२ ॥

इत्याकाशभैरवाख्येमहाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
युद्धस्वरूपनिरूपणं नाम
सप्तत्रिंशदुत्तरशततमः पटलः ॥

॥ अथाष्टत्रिंशदुत्तरशततमः पटलः ॥

॥ साङ्ग्रामिकवीरगतिस्वरूपनिरूपणम् ॥

पार्वती—शिव सर्वज्ञ सर्वेश त्वन्मुखाम्भोजतश्श्रुतम् ।
युद्धस्वरूपमखिलं श्रोतृश्रोत्रसुखावहम् ॥ १ ॥

इदानीं श्रोतुमिच्छामि सङ्ग्रामेषु तनुत्यजाम् ।
नराणाङ्कीदृशी देव गतिर्भवति मे वद ॥ २ ॥

श्रीशिवः—देवि सम्यक्त्वया प्रश्नः कृतो लोकहितेच्छया ।
प्रश्नानुरूपं वक्ष्यामि श‍ृणूत्तरमगात्मजे ॥ ३ ॥

भटास्तु त्रिविधाश्श्रेष्ठा मध्यमाश्चाधमा इति ।
उत्तमाः क्षत्रियाः प्रोक्ता मध्यमाः पादजास्स्मृताः ॥४॥

अधमास्सङ्करा देवि नानायुद्धविशारदाः ।
रथमारुह्य रथिनं हत्वा यो हन्यते स्वयम् ॥ ५ ॥

सरथेन नरो याति लोकमैन्द्रं सनातनम् ।
यः कुम्भिकुम्भावास्फाल्य युध्यमानोऽरिणा हतः ॥६॥

स रम्भयाऽऽलिङ्गितस्स्यात्प्रोत्तुङ्गकुचकुम्भया ।
तुरङ्गन्नर्तयन्यस्तु हत्वा शत्रुं रणे हतः ॥ ७ ॥

स नृत्यन्त्या सदोर्वश्या सेव्यते दिवि देववत् ।
ये भटा निहताश्शस्त्रैर्युध्यमानाः परस्परम् ॥ ८ ॥

ते तु निर्मलनामानं स्वर्गं यान्ति वरानने ।
धनन्निधनवन्मत्वा प्रधने संस्थिताः पुनः ॥ ९ ॥

एते स्वर्गं भटा यान्ति नरास्सत्यरता इव ।
अमरोऽपि समो युद्धे मे नेत्युक्त्वारिणा हतः ॥ १० ॥

युयुधानश्चिरं यस्स रमते मेनया सह ।
युद्धे यस्तिलशो देवि छिद्यते रिपुणा शरैः ॥ ११ ॥

स तिलोत्तमया साकं क्रीडत्यमरवद्दिवि ।
रञ्जयन्मञ्जुवचनैररिं हत्वा स्वयं हतः ॥ १२ ॥

स मञ्जुघोषया साकमाकल्पं रमते दिवि ।
केशाकेशि भटो यस्तु युद्ध्यमानो रणेऽरिणा ॥१३॥

शरैर्हतस्त्यजेत् प्राणान् स सुकेश्या रमेत वै ।
किन्नरा युधि मे तुल्या इत्युदीर्य रणेऽरिणा ॥ १४ ॥

इतीरयन् यो निहतः स याति ब्रह्मणः पदम् ।
अजातत्रासपटलो भटैस्सुमणिवत्प्रिये ॥ २४ ॥

वज्रेण भिद्यते यस्तु स पदं याति वज्रिणः ।
ब्रह्मदण्डेन वाऽस्त्रेण हन्यते यो महाहवे ॥ २५ ॥

स हंसयुक्तयानेन ब्रह्मलोकमवाप्नुयात् ।
यस्तु नारायणास्त्रेण युयुधानो निहन्यते ॥ २६ ॥

स दिव्येन विमानेन विष्णुलोकमवाप्नुयात् ।
यस्तु पाशुपतास्त्रेण हतश्चेदरिणा रणे ॥ २७ ॥

रथेन वृषचिह्नेन कैलासं समवाप्नुयात् ।
एवमिन्द्रादिदेवानामस्त्रैर्ये निहता रणे ॥ २८ ॥

सम्प्राप्येन्द्रादिलोकांस्ते रमन्तेऽप्सरसां गणैः ।
विचार्यान्योन्यशत्रुत्वं शस्त्रास्त्राणि प्रयोजयेत् ॥ २९ ॥

अविचार्य प्रयुक्तानि व्यर्थानि स्युर्वरानने ।
क्रमाद्वधः क्षत्रियेण शूद्रस्य श्रेष्ठ उच्यते ॥ ३० ॥

शूद्रात्सङ्करजातेश्च व्युत्क्रमादधमः स्मृतः ।
तस्मादुत्तम एवात्र वधः स्यात्सद्गतिप्रदः ॥ ३१ ॥

सर्वेषामपि भूपानामितरेषाञ्च भामिनि ।
तिर्यग्भिर्वा यदि मृतिर्गजाश्वोष्ट्रादिभिर्युधि ॥ ३२ ॥

सा च प्रिये समीचीना भवत्येव न संशयः ।
इत्येवं ते समाख्याता वीराणाङ्गतिरद्रिजे ॥
सङ्ग्रहेणाधुना सम्यक्किमन्यच्छ्रोतुमिच्छसि ॥ ३३ ॥

इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
सङ्ग्रामहत वीरगतिस्वरूपनिरूपणन्नाम
अष्टत्रिंशदुत्तरशततमः पटलः ॥

---

॥ अथैकोनचत्वारिंशदुत्तरशततमः पटलः ॥

॥ श्रीसाम्राज्यलक्ष्मीस्तोत्रम् ॥

पार्वती—देवदेव दयासिन्धो लोकरक्षणतत्पर ।
युद्धे हतानां शूराणां गतिस्त्वद्वदनात् श्रुता ॥ १ ॥

इदानीं श्रोतुमिच्छामि स्तोत्रमत्यन्तपावनम् ।
साम्राज्यलक्ष्म्या देवेश वक्तुमर्हसि मेऽनघ ॥ २ ॥

श्रीशिवः—देवि सम्यक्त्वया प्रश्नः कृतो लोकहितेच्छया ।
प्रश्नानुरूपं वक्ष्यामि शृणुष्वोत्तरमद्रिजे ॥ ३ ॥

सार्वभौमो नरपतिर्मण्डलस्येश्वरोऽपि वा ।
देशाध्यक्षः कतिपयग्रामाध्यक्षोऽथ वा नृपः ॥ ४ ॥

साम्राज्यलक्ष्म्यास्तुष्ट्यर्थमष्टैश्वर्याभिवृद्धये ।
पठेत्प्रातः प्रतिदिनं लक्ष्मीस्तोत्रमनुत्तमम् ॥ ५ ॥

ऋषिरस्याहमाख्यातश्छन्दोऽनुष्टुबुदाहृतम् ।
साम्राज्यलक्ष्मीर्देवेशि देवता देववन्दिता ॥ ६ ॥

ध्यानस्वरूपं वक्ष्यामि साधकाभीष्टदायकम् ।
येन साम्राज्यदा लक्ष्मीस्सन्ततं संप्रसीदति ॥ ७ ॥

क्षीराब्धिमध्ये श्वेताख्ये मनोज्ञे द्वीपनायके ।
विजयाख्यपुरे रम्ये चिन्तामणिगृहान्तरे ॥ ८ ॥

मूले कल्पतरोर्दिव्ये रत्नमण्टपमध्यमे ।
सिंहासने स्वर्णमये सहस्रदळपङ्कजे ॥ ९ ॥

कर्णिकायां समासीनां श्वेतच्छत्रेण चारुणा ।
वधूविधूयमानाभ्याञ्चामराभ्याञ्च शोभिताम् ॥ १० ॥

समकालोदितानेकदिवाकरसमप्रभाम् ।
तटित्कोटिप्रभापुञ्जजयोद्यत्कनकाम्बराम् ॥ ११ ॥

चतुर्भुजात्तविलसत्पद्मयुग्मवराभयाम् ।
पूर्णेन्दुबिम्बवदनामिन्दीवरनिभेक्षणाम् ॥ १२ ॥

सुनासां सुभ्रुवं किञ्चित् कुञ्चितानीलकुन्तळाम् ।
बिम्बोष्ठीं मञ्जुदशनां कम्बुसङ्काशकन्धराम् ॥ १३ ॥

कुम्भिकुम्भोपमकुचां तनुवृत्तसुमध्यमाम् ।
आवर्तनाभिमानीलरोमराजिविराजिताम् ॥ १४ ॥

पुलिनाभोगजघनां पृथुश्रोणीयुगान्विताम् ।
रम्भाभोरुयुगामीषत्तनुजङ्घालसत्पदाम् ॥ १५ ॥

अनर्घरत्नघटितमनोज्ञमकुटोज्ज्वलाम् ।
मुक्ताताटङ्कयुगळग्रैवेयाङ्गदभूषिताम् ॥ १६ ॥

वज्रवैडूर्यघटितमहाहोरोजबन्धनाम् ।
पद्मरागस्फुरद्धेमकाञ्चीदामविराजिताम् ॥ १७ ॥

मञ्जुमाणिक्यमञ्जीरयुगळाञ्चत्पदाम्बुजाम् ।
सर्वलावण्यवसतिं विलासावासमन्दिरम् ॥ १८ ॥

साम्राज्यलक्ष्मीं ध्यात्वैवं जपेत् स्तोत्रमनन्यधीः ।
जय क्षीराब्धितनये जय चन्द्रसहोदरि ॥ १९ ॥

जय लोकैकजननि जय नारायणप्रिये ।
जय वन्दारुवरदे जय बृन्दारकार्चिते ॥ २० ॥

जयाष्टैश्वर्यदे देवि जयेष्टफलदायिनि ।
जयाखिलजगद्वन्द्ये जयानन्तगुणान्विते ॥ २१ ॥

नमस्ते वेदवेद्यायै नमस्ते पुण्यमूर्तये ।
नमस्तेऽमरवन्द्यायै भूतधात्र्यै नमोऽस्तु ते ॥ २२ ॥

नमो हिरण्यवर्णायै पद्मिन्यै ते नमोऽस्तु ते ।
नमोऽस्तु निर्विकल्पायै राज्यदायै नमोऽस्तु ते ॥ २३॥

नमस्ते नित्यपुष्टायै महालक्ष्म्यै नमोऽस्तु ते ।
नमः पङ्कजधारिण्यै करुणानिधये नमः ॥ २४ ॥

प्रसीद पद्मगर्भाभे प्रसीद भुवनेश्वरि ।
प्रसीद पद्मनयने प्रसीद हरिवल्लभे ॥
प्रसीद कमले देवि प्रसीद कमलालये ॥ २५ ॥

॥ इत्याकाशभैरवाख्ये महाशैवतन्त्रे साम्राज्यलक्ष्मीपीठिकायां
साम्राज्यलक्ष्मीस्तुतिर्नाम
एकोनचत्वारिंशदुत्तरशततमः पटलः ॥

॥ इत्थमस्याध्यायस्य परिसमाप्तिर्मातृकासु न विद्यत इति शम् ॥

॥ श्रीः ॥

# ॥ शुद्धाशुद्धपाठः ॥



| पुटसंख्या | श्लोकसंख्या | शुद्धपाठः | अशुद्धपाठः |
|---|---|---|---|
| १ | ३ | कुण्डला | कुण्डळा |
| २ | १५ | नद्‌वि | नदीव |
| ३ | १६ | मद्‌वि | मद्दीव |
| ४ | ४ | दिङ्मुखः | दिङ्मुखः |
| ४ | ८ | लङ्क् | लङ्क |
| ७ | २७ | भृङ्गार | भृंङ्गार |
| १० | २३ | मर्दलान् | मर्दलाः |
| १२ | ११ | सम्यक्स | सम्यवस |
| १३ | २ | तद्देवि | तद्देवी |
| १४ | ८ | वाह्य | वह्य |
| १४ | १४ | हविष्याशी | हविष्याणि |
| १७ | ९ | सहस्रं | सहस्र |
| १८ | १८ | सहस्रं | सहस्र |
| १८ | २४ | मुक्तो | भुक्तो |
| १९ | २७ | सहस्रं | सहस्र |
| २१ | १२ | वल्यादि | माल्यादि |
| २१ | १३ | स्रुवादि | स्रवादि |
| ३५ | — | द्वादशः | एकादशः |
| ३७ | — | त्रयोदशः | द्वादशः |
| ३९ | — | ” | ” |
| ३९ | २४ | समर्च | समच |

| पुटसंख्या | श्लोकसंख्या | शुद्धपाठः | अशुद्धपाठः |
|---|---|---|---|
| ४१ | ३९ | साहस्रं | साहस्र |
| ४८ | ३ | सङ्कीर्त्य | संङ्कीर्त्य |
| ५० | २१ | भो ! भो !! | भो ? भो ? |
| ५३ | १७ | ताञ्छु | तांश्छु |
| ५७ | ३ | द्रुतो | द्रुता |
| ६८ | १५ | वास्तु | वासु |
| ८१ | — | चतुर्विंशः | पञ्चविंशः |
| ८४ | ३२ | महत्या | महात्य |
| ८४ | ३७ | संवत्स | संवस |
| ८६ | ६ | तिलैर्नवैः | तिलैर्नवै |
| ८७ | १८ | त्सतिलं | त्सीतलं |
| ८७ | २२ | शान्तिङ्कु | शान्तिङ्कु |
| ८८ | ५ | न्नीलन्नील | न्नलिन्नलि |
| ९० | १५ | अलङ्कृ | अलङ्क |
| ११० | २७ | न्नृपः | न्पृपः |
| १११ | ४ | वक्ष्यामि | वक्ष्याम |
| ११२ | ९ | त्कोष्ठ | त्कोष्ट |
| ११९ | १६ | न्यग्रोधार्ध | न्यग्रोधाध |
| १२८ | ११ | कोष्ठेषु | कोष्टेषु |
| १४८ | २१ | दैवः | दैव |
| १५० | ५ | पुरोध | पुराध |
| १५३ | ३३ | तदन्ये | तदये |
| १५६ | ११ | परितः | पारतः |
| १६१ | १० | नाप्य | नाप्य |
| १६५ | १५ | एवङ्कृ | एवङ्कृ |

| पुटसंख्या | श्लोकसंख्या | शुद्धपाठः | अशुद्धपाठः |
|---|---|---|---|
| १६५ | २० | नीत्वा | नत्विा |
| १६७ | १० | ध्याम्यहं | ध्यायहं |
| १७७ | १ | श्श्रुतम् | श्शुभम् |
| ५७७ | ४ | दामि | दामे |
| १७९ | २० | मेघे | मधे |
| १८१ | १ | वंस्त्व | वन्स्त्व |
| १८१ | ४ | राष्ट्रे | राष्टे |
| १८६ | २३ | ङ्कुर्वादि | ङ्कुर्वादि |
| १८७ | ५ | ब्रह्म | ब्रह्य |
| १८९ | १७ | तज्जले | तञ्जले |
| १९० | १ | कसमन्वित: | कसन्वित: |
| १९१ | १३ | शेषं | शेंषं |
| १९२ | २२ | तत्त्वाया | तत्वायाा |
| १९९ | ३१ | विशेषत: | विशेषतं: |
| २१३ | १३ | गूढे | गूढौ |
| २१५ | — | षट् | षट |
| २३८ | १९ | वस्त्रं | वस्त्र |
| २४१ | ९ | स्त्वमेव | स्त्मेव |
| २७० | २२ | भावग | भावगा |
| २७१ | २८ | रसात्तु | रसात्त |
| २७८ | — | त्र्यशीति | त्रयशीति |
| २८५ | ११ | ङ्कृत्वा | ङ्कृत्वा |
| २८७ | १२ | कुङ्कुम | कुङ्कुम |
| २९१ | १४ | ङ्कृत्वा | ङ्कृत्वा |
| २९६ | १४ | प्रदे | प्रद |

| पृष्ठसंख्या | श्लोकसंख्या | शुद्धपाठ | अशुद्धपाठ: |
|---|---|---|---|
| ३०० | ५ | त्फलंवत्कुं | त्फलवत्कु |
| ३०२ | १९ | धराङ्क | धराङ्क |
| ३०४ | १ | कर्तव्य | कर्तव्य |
| ३१४ | ५ | ङ्गृह्य | ङ्गहा |
| ३१६ | २ | वर्षै | वष |
| ३२४ | ४ | बध्द्वा | वध्वा |
| ३३० | ३४ | शीत्यन्त | शीत्यंश |
| ३३७ | ३ | पतिम् | पातम |
| ३३७ | ४ | ल्लु त | ल् ु त |
| ३३८ | १९ | मातृणां | मातणां |
| ३३८ | २० | रुद्राणां | रुद्राणा |
| ३३९ | — | जपविधि | जपधि |
| ३४१ | ११ | नत | णत |
| ३४४ | ५ | सङ्घांश्च | सङ्घाश्च |
| ३६३ | ३९ | पितृणां | पितणां |
| ३७३ | २४ | मन्त्रेण | मात्रेण |
| ३७५ | १३ | वरित्वा | वरित्वा ? |
| ३८६ | २६ | प्राज्यं | प्राप्य |
| ३८७ | २ | सङ्क्रान्ते: | सङ्क्रान्ते: |
| ३८७ | ८ | गणिका | गुम्फिकां |
| ४०३ | ८ | प्रिय | प्रिये |
| ४०३ | ११ | प्रिये | प्रिय |
| ४०६ | ६ | पङ्क्तिश: | पङ्क्तिकश: |
| ४०७ | २ | त्करं | त्कर |
| ४०७ | ४ | रनुष्ठित | रनुष्ठित |

| पुटसंख्या | श्लोकसंख्या | शुद्धपाठः | अशुद्धपाठः |
|---|---|---|---|
| ४१२ | ३ | पूर्वदिने | पूर्वदिने |
| ४२६ | १८ | यातो | याता |
| ४३७ | ३० | स्वकीयं | स्वकायं |
| ४४० | २२ | शूद्रा | शूदा |
| ४५० | ६ | पत्राक्षि | पत्राक्ष |
| ४५० | ८ | दैव | देव |
| ४५४ | ४१ | छिन्द्याद्धि | छिन्द्याद्वि |
| ४५९ | २९ | मुत्तमं | मुत्तरं |

